श्री काशी संस्कृत ग्रन्थमाला १२९

महामहोपाध्याय श्रीमदमृतनाथझाविरचितः

# कृत्यसारसमुच्चयः

ज्यौतिषाचार्य–ज्यौतिषतीर्थ–ज्यौतिषरत्न–काव्यतीर्थ-
पण्डित श्रीगङ्गाधरमिश्रशर्मणा
यथास्थलोपयुक्तटिप्पणीभिः प्रयोजनीयविविध-
परिशिष्टविषयैश्च समलङ्कृतः।

व्याकरण–साहित्याचार्य-
पण्डितश्रीकृष्णमोहनशास्त्रिणा संशोधितः





चौखम्भा संस्कृत संस्थान
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक
पो० आ० चौखम्भा, पो० बा० नं० ११९
जड़ाव भवन के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला
१२९

महामहोपाध्याय श्रीमदमृतनाथझाविरचितः

# कृत्यसारसमुच्चयः

ज्यौतिषाचार्य–ज्यौतिषतीर्थ–ज्यौतिषरत्न–काव्यतीर्थ-
पण्डित श्रीगङ्गाधरमिश्रशर्मणा
यथास्थलोपयुक्तटिप्पणीभिः प्रयोजनीयविविध-
परिशिष्टविषयैश्च समलङ्कृतः ।

व्याकरण–साहित्याचार्य-
पण्डितश्रीकृष्णमोहनशास्त्रिणा संशोधितः



चौखम्भा संस्कृत संस्थान
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक
पो० आ० चौखम्भा, पो० बा० नं० १३९
जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी

मुद्रक : विद्याविलास प्रेस, वाराणसी

संस्करण : चतुर्थ, वि० सं० २०३७

मूल्य : रु० ३०



हमारे प्रकाशनों की एकमात्र वितरक संस्था

**चौखम्भा ओरियन्टालिया**

प्राच्यविद्या एवं दुर्लभ ग्रन्थों के प्रकाशक तथा वितरक

पो० आ० चौखम्भा, पो० बा० नं० ३२

गोकुल भवन के. ३७/१०९, गोपाल मन्दिर लेन

वाराणसी–२२१००१ ( भारत )

टेलीफोन : ६५८८९ टेलीग्राम : गोकुलोत्सव

शाखा—बंगलो रोड, ९ यू० बी० जवाहर नगर

दिल्ली–११०००७

टेलीफोन : २२१६१७

प्रधान शाखा

**चौखम्भा विश्वभारती**

पो० बाक्स नं० १३९

चौक ( चित्रा सिनेमा के सामने )

वाराणसी

फोन : ६५४४४

THE
KASHI SANSKRIT SERIES
129
*****

# KRITYASĀRASAMUCHCHAYA

OF

M. M. PANDIT ŚRĪ AMRITNĀTHA JHĀ

*With Notes, Introduction, Indices, Appendices etc.,*

By
PANDIT ŚRĪ GANGĀDHARA MIŚRA
*Jyotiṣāchārya, Jyotiṣatirtha, Jyotiṣaratna, Kāvyatīrtha.*

Edited by
Pt. KRISHNA MOHAN THĀKUR
*Vyākaraṇa and Sāhitya Āchārya.*

CHAUKHAMBHA SANAKRIT SANSTHAN
*Publishers and Distributors of Oriental Cultural Literature*
P. O. Chaukhambha, Post Box No. 139
Jadau Bhawan, K. 37/116, Gopal Mandir Lane
VARANASI ( INDIA )

# प्राक्कथनम्

अस्त्ययं सकलजनविदितः श्रौतस्मार्त्तचारुविचारसंग्रहात्मकः प्रचलितागणित-स्मृतिनिबन्धगणधुरीणः संसारसंक्षिप्तसरललेखसङ्केतकलितो निखिलविद्वज्जनपरमादृतोऽतितरां रमणीयः **कृत्यसारसमुच्चयो** नाम निबन्धः ।

अस्य तु वार्षिकव्रतद्वैधनिर्णय-सदाचार-समयाशुद्धिविवेक-श्राद्धीयविषय-समीक्षाऽऽशौचनिर्णय-तीर्थविधान-संस्कारविधिप्रभृतिविविधविषयविभूषितत्वेन रचयितुरत्युग्रतपःप्रभावेण चेतरप्रचलिताखिलस्मार्त्तनिबन्धेभ्योऽधिकः प्रचारो वर्त्तते ।

एतस्य रचयिता महीतलगतनिखिलप्रदेशशिरोमणिरूपायाः पुराणतन्त्रवर्णितागणितगुणाया अमरावत्यधिकसुखसाधनायाः प्रतिभवनमशेषशास्त्रसागरमथनमन्दरायमाणपण्डितमण्डलीमण्डिताया गङ्गोत्तरतटोपकण्ठवर्त्तमानाया **मिथिलाया** अवयवे भागलपुरमण्डलान्तर्गते **धर्ममूला** ( घेमुडा ) गिरिनदीपूर्वतटार्धक्रोशमात्रान्तरे वर्त्तमानेऽत्युग्रश्रीमदुग्रतारापीठस्थलात् पूर्वदिशि क्रोशैकान्तरिते **चयनपुरग्रामे** कुजौलिमौलिकदुःखभञ्जनठक्कुरदौहित्रस्य पगुलबाडमौलिकस्य सच्छाब्दिकस्य पण्डितमाणिकशर्मणस्तनयस्तार्किककरीन्द्रवृन्दविद्रावणपारीन्द्रो विवादिवदननीरजवनतुहिनकिरणो महामहोपाध्यायपदवीकोऽ**मृतनाथशर्मा** यावज्जीवनं स्ववासस्थलनिर्मितचतुष्पाठ्यामशेषशास्त्राण्यध्यापयन् निजगुणैः स्वदेशकुलग्रामानुज्ज्वलयन्नासीत् ।

अनेन प्रायश्चित्तव्यवस्थासारसमुच्चयः वादसारसमुच्चयः, कृत्यसारसमुच्चयश्चैते निबन्धा लोकोपकाराय निजकीर्तिमूर्त्तिसंस्थापनाय च निर्मिताः । अत्र प्रथमः काश्यां मुद्रित उपलभ्यते, यदन्ते ग्रामाद्युल्लेखोऽवलोक्यते—

पूर्णे धीरेन्द्रवृन्दैर्वरचयनपुरे वासवान् भूमिदेवः
कीर्त्तिप्रख्यात आसीदमृतपदलसन्नाथनामा बुधेन्द्रः ।
तर्काब्धेः पारगन्ता सकलगुणयुतो निर्मिता तेन सम्यक्
प्रायश्चित्तव्यवस्था सकलबुधजनस्वान्तसन्तोषदात्री ।। इति ।

द्वितीयस्त्वद्यावधि अमुद्रित एव वर्तते, तद्गृहे तल्लिखित एवावलोकितो मया तत्प्रपौत्रानुग्रहेण, यस्यादौ मङ्गलाचरणम्—

'पिता पञ्चाननो यस्य भ्राता चापि षडाननः ।
स्वयं गजाननो विघ्नविघाताय विनायकः ।।'

ततः स्वपरिचयस्तदुक्त एव—

श्रीमन्माणिकशर्मणः सुकृतिनः सच्छाब्दिकस्याखिले
साहित्ये निपुणस्य यो हि तनयो ज्येष्ठस्तु सत्तार्किकः ।

साहित्यस्मृतिकोषतन्त्रकुशलः ख्यातोऽवनौ धार्मिक-
स्तेनैव क्रियते विवादविषये कश्चित् प्रबन्धोत्तमः ॥
श्रीमताऽमृतनाथेन वादसारसमुच्चयः ।
क्रियते बालबोधाय तत्राऽस्तु शरणं शिवा ॥

तदन्ते तु—

शाके वासरवेदवासरमही (१७४७) संलक्षिते वत्सरे
मार्गे मासि बलक्षपक्षवलितेऽष्टम्यां बुधे वासरे ।
नत्वाऽनेकपवक्त्रपादकमलं पुस्तं नवीनं परं
श्रीयुक्तामृतनाथशर्मसुधियाऽलेखीदमाशु स्वकम् ॥

चयनपुरग्रामे सन् १२३२ साल ।

यस्य वर्तमाने नवेषुधृतितुल्ये ( १८५९ ) शालिवाहनशकाब्दे १८५९–१७४७ =११२ द्वादशाधिकैकशतपरिमितानि वर्षाणि गतानि । तेन सप्ततिवर्षासन्ने वयस्यपि दृढगात्रेण तन्निबन्धरत्नत्रयं निरमायीति निजपुरवासिप्राचीनजनजनश्रुत्या तज्जन्मसमयः शाके १७४७–७० = १६७७ शकाब्दाः, प्रचलितफसलीसंज्ञयवनाब्दानुसारेण तु सन् ११६२ सालः सिद्ध्यति, यस्य साम्प्रतम् ( शाके १८५९ फसली सन् १३४५ साल ) द्व्यशीत्यधिकैकशतमितवर्षाणि ( १८२ ) अतीतानि ।

एतस्य पं० हरिदत्तझाः, रोहिणीदत्तझाः, ततः कन्यकाद्वयम् , ततः पण्डितरतिनाथझाः, गोपीनाथझाः, शशिनाथझाः, एतान्यपत्यान्यभूवन् । तेषु प्रथमोऽनेकशास्त्रीयगहनविषयाभिज्ञः परमविज्ञः स्वसमयेऽसदृशीऽसीमसुयशोविकाशेन तत्प्रान्तं गौरवान्वितं चकार । अयं स्वपितुर्लब्धविद्य एव । तदनुजो रोहिणीदत्तोऽपि विद्वानेव । ततस्तृतीयो स्तनयो रतिनाथझाः, तु यद्यपि सकलदर्शनपाण्डित्यपरिपूर्ण आसीत्तथाऽपि न्यायशास्त्रीयविवेचनाप्रपञ्चेऽद्वितीयचमत्कारवान् परमप्रतिभावान् निजग्राम एव चतुष्पाठ्यां पाठयन् समये समये यतस्ततो यज्ञादौ निमन्त्रितस्तत्रोपस्थितो भूत्वोद्धतविद्वद्वराखर्वगर्वपर्वतान् स्वीयोग्रतीव्रतममेधाभाविताऽलौकिकशास्त्रार्थावेशवज्रेण चूर्णीकुर्वन् लब्धसर्वाधिकयोग्यतासूचकपूर्णपुरस्कारवित्तेन निजजीवनयोगक्षेमं साधयन् ७५ वर्षवयसि १८२० शकाब्दीयोर्जार्जुनपक्षीयद्वितीयायां संसारमसारं निश्चित्य शरीरं जहौ । तदनुजावल्पवयस्यनपत्यावेव दिवङ्गतौ । पं० हरिदत्तशर्मणः प्रथमः पुत्रो वैयाकरणः चन्दाझाः, काव्यसाहित्येऽतिनिपुणः परमयोग्यो विद्वाननपत्य एव सुरपुरीं प्रस्थितः । द्वितीयस्तस्य पुत्रोऽपि पं० बलदेवझाः, व्याकरणे साहित्ये स्मृतौ च निपुण आसीद्यस्यान्ववायोऽधुना विद्यते रतिनाथशर्मणोऽनेकपुत्रेष्वेकः श्रीमदनिरुद्धझाः ( बूबूगोसाँई ) परममन्त्रतन्त्रप्रयोगकुशलः परमशिवभक्तः स्वमहिम्ना भूतप्रेतोपद्रवविद्रावणे नितरां लब्धकीर्तिरद्यापि जीवत्येव । रतिनाथशर्मणोऽन्यतमपुत्रात्मजः श्रीमदर्जुनझाशर्मा लब्धव्याकरणाचार्यपदवीकः साम्प्रतं पाठयति पश्चिमप्रदेशे । एवमद्यापि ग्रन्थकर्त्तुः कुले सरस्वतीनिवासो वर्त्तत एव । तद्वंशीयोऽल्पविद्योऽपि

प्राचीनलेखव्यवस्थाभिरितरविदुषामपेक्षयाऽधिकस्मार्त्तविषयनिपुणो निजजीवनयात्रां तद्बलेनाद्यापि यापयति ।

प्राचीनविविधशास्त्रीयपुस्तकानि तद्गृहेऽन्यतः प्रचुरतराणि वर्त्तन्ते । आस्तां तावदेतत्सम्बन्धिनी प्रवृत्तिः ।

अथ प्रकृतिनिबन्धस्तु प्रथमं दरभङ्गामण्डलान्तर्गतटभकाग्रामवासिबटुकनाथशर्मणा ग्रन्थकर्तृपुत्रपण्डितरतिनाथझाशर्मणः सकाशादासाद्य काश्यां मुद्रापितस्ततो मुम्बय्यां द्वितीयवारं मुद्रितोऽपि बहुत्राशुद्धिवृद्धिं दधदेवास्ति । यथोपाकर्मप्रसङ्गे—उपाकर्म = राजोपसंस्कारविशेषः, इति । तत्र उपाकर्म = यज्ञोपवीतसंस्कारविशेषः, इति युक्तः । व्यतिपातयोगलक्षणे 'यद्यमा' इत्यत्र 'चन्द्रमा' इति युक्तः पाठः । मन्वादिप्रसङ्गे श्लोकद्वयं त्रुटितम् । नवान्नप्रसङ्गे 'ब्रह्माविष्णुबृहस्पती शशधरो मार्त्तण्डपौष्णादिति' इति श्लोकस्य चरमचरणं त्रुटितम् । भूकम्पवर्णनावसरे वारुणमण्डलफले चरणद्वयं त्रुटितम् । एवमनेकस्थले त्रुटिबाहुल्यमशुद्धिप्राचुर्यं कतिपयविषयराहित्यं ग्रन्थकर्तृग्रामकुलपरिचयहीनत्वञ्चावलोक्य तद्ग्रामाभिजनेन मया स्वपितामहमातुलात्मजपण्डितचक्रधरशर्मलिखितादर्शपुस्तकस्यान्यजनलिखितापरपुस्तकस्य च साहाय्येन मूलग्रन्थपाठः संशोधितः ।

अत्र येषां व्रतपर्वणां निर्णयो नासीत्तेषां प्रसङ्गात्तत्तत्स्थाने प्राचीनमान्यनिबन्धानुसारेण कृतैर्निर्णयैर्बहुत्र निवेशितस्यापि सङ्क्षिप्तस्य विषयस्य समर्थकैरन्यस्मृतिप्रमाणवचनैष्टिप्पणीभिः संयोज्य बहवो विषयाः समधिकलेखतया पश्चादधिगतत्वेन च मूलग्रन्थान्ते परिशिष्टरूपेण निवेशिताः ।

एवमीदृशोऽयं सकलोपयोगिविषयसङ्ग्रहात्मको निबन्धः प्राचीनपुस्तकमालाप्रकाशकाय काशीवासिने श्रेष्ठिने श्रीमते जयकृष्णदासगुप्तमहोदयाय मुद्रणार्थं समर्पितस्ततो यथामति सावधानतया काशीतो दूरदेशवर्त्ति श्री १०८ वैद्यनाथसंस्कृतविद्यालयेऽध्यापयता मयाऽन्तिमप्रूफमात्रसंशोधनं कृतमपि सहजमनुजमनीषादोषेण निजबोधदौर्बल्येन भ्रान्त्या त्रुटितकण्टकादिदोषेण चाशुद्धिं यत्र तत्र विलोक्य खिन्ननिजमनोविनोदाय सहजसदयहृदयाणां विद्वज्जनमहोदयानां पुरतः पुनः पुनः साञ्जलि मया निवेद्यते यत्कृपया संशोधनीयमेतत् । अन्ते तु यदीदृशस्याप्यस्य दोषदर्शनमिषेणापि दोषज्ञानां दर्शनग्रहणकारुण्यं भवेत्तदा ममायमायासः सफलः स्यादित्यहमाशासे-इति ।

सं० १९९४<br>ई० १९३८

नम्रनिवेदकः—

**श्रीगङ्गाधरमिश्रः**

# विज्ञप्तिः

अयि निखिलविद्यावदातमानसाः सहृदयधुरीणा महामहिमशालिनो विद्वांसः ! इह खलु सर्वेषां प्राणिनां सुखाय प्रवर्त्तमानानां तत्साधनानि प्रतिपित्सूनां दुःखसाधनानि जिहासूनां हितपरिणामेषु मोहावरणेन तत्त्वमनवगच्छतामालस्यादिना ततो निवृत्तानां पुनः पुनः दुःखार्णवे निमज्जतामपि असंविदानानां स्वातन्त्र्यमधिगच्छतां नरकं पिपतिषूणामुद्धाराय परमकारुणिको ग्रन्थकारस्तेषां यथाधिकारं कर्मकलापप्रवृत्तिप्रवणत्वं सम्पादयिष्यन् धर्मशास्त्रमिदं व्यवस्थापयामास । किन्तु यत्र तत्र गूढविषयस्य दुरवगमतया मन्दमतीनामिदानीन्तनानां ततोऽनवबोधमालोच्य तत्त्वबुभुत्सूनामुपकाराय दैवज्ञशिरोमणिः **श्रीगङ्गाधरमिश्रः** टिप्पणीं निर्मायाऽन्ते बहून् विषयानाकलय्य परिशिष्टमपि निर्ममौ ।

परमोपादेयत्वादेवास्य स्वल्पैरेव समयैः प्रथमं द्वितीयं च संस्करणं सञ्जातम् । कर्गलस्यायासशतेनाप्यनुपलभ्यमानत्वादतिविषमेऽपि समये परोपकारबद्धपरिकरैः चौखम्बासंस्कृतपुस्तकालयाध्यक्षैः श्रीयुत **जयकृष्णदासहरिदासगुप्त**महोदयैरस्य तृतीयं संस्करणं च प्रकाशितन्तदर्थं ते धन्यवादार्हाः । अहमप्येनं च यथामति संशोध्य यथास्थलमुपयुक्तटिप्पण्यादिभिः संयोजितवानस्मि ।

अत्र च 'दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते' इति न्यायानुसारेण परगुणग्रहणपरायणान्तःकरणा विद्वांसो दयोदयमधुरदृशा पदप्रचाराप्रगल्भस्य बालकस्येव मम स्खलनेऽपि धृतकौतुका निरीक्ष्य संशोधयन्त्विति सविनयं प्रार्थयेऽसकृदिति शम् ।

कण्टकाक्षरदोषेण भ्रमेण यदि वा मम ।
त्रुटिश्चेदिह संशोध्या धीरैः शास्त्रविचक्षणैः ॥

महाशिवरात्रिः
वि० सं० २००९

श्रीमतामाश्रवः—
**श्रीकृष्णमोहनशास्त्री**

# विषयानुक्रमणिका

# परिशिष्टविषयसूची

॥ श्रीः ॥

महामहोपाध्याय श्री अमृतनाथझा विरचितः

# कृत्यसारसमुच्चयः

वामाङ्गासक्तकान्ताकचकुसुममयो भालनेत्रानलार्चिः-
पीनोष्मा मौलिचञ्चत्सुरनगरनदीनीररम्यः सदा नः ।
स्फीतोत्तंसेन्दुकान्तिर्द्विरदहतिदृढच्छादनाव्यक्तशीतः
शम्भुर्भस्मास्थिकुन्दप्रकरपरिवृतः पातु सर्वर्त्तुमूर्त्तिः ॥ १ ॥

तार्किकामृतनाथशर्मबुधो हि कृत्यसमुच्चयं
व्यातनोति विलोक्य पूर्वनिबन्धग्रन्थचयानमुम् ।
मैथिलव्यवहारसिद्धसुकर्मकाण्डविराजितं
धीधनादिमुदप्रदं सरलोक्तितो बहुयत्नतः ॥ २ ॥

## अथ मासनिरूपणम्

तत्र मासकृत्ये निरूपणीये मासानिरूपणे तत्कृत्यनिरूपणासम्भवान्मासस्तावदादौ निरूप्यते । तत्र मासश्चतुर्विधः । तथाहि ज्योतिषे-

'सौरश्च सावनश्चैव चान्द्रो नाक्षत्र एव च' इति ।

तत्र एकसंक्रमणमारभ्यापरसंक्रमणपूर्वं यावत् सौरः (१) । अनियतत्रिंशद्दिवसात्मकः सावनः । दर्शानन्तरप्रतिपदादिमारभ्यामावस्यांतश्चान्द्रः । तथाहि ज्योतिषे—

दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः ।
रविसंक्रान्तिसुचिह्नः सौरोऽपि निगद्यते सद्भिः ॥

---

नत्वा भवानीतनयं कृत्यसारसमुच्चये । विशेषयोजनं यत्नात्क्रियते विन्मुदे मया ॥
नानास्मृतिनिबन्धाँस्तु दृष्ट्वाऽधिकमितोऽस्ति यत् । प्रयोजनीयं तन्न्यस्तं श्रीगङ्गाधरशर्मणा ॥

अत्र मङ्गलश्लोके वामार्धाङ्गसङ्गिन्या भवान्याः कुन्तलगुम्फितकुसुमसमूहेन वसन्तः । निटिलतटवर्त्तिनेत्रानलशिखोष्मणा ग्रीष्मः । जटाजूटवेष्टितसुरधुनीधारया प्रावृट् । भाललग्नचञ्चच्चन्द्रिकया शरत् । गजचर्मदृढाच्छादनेन हेमन्तः । भस्मास्थिकपालादिधवलधाम्ना हिमकुन्दादिनेव शिशिरः । एवं सर्वेषामृतूनां मूर्त्तिरिव मूर्त्तिर्यस्य स शिवः पात्विति ।

(१) एवं दिनमपि सौरसावननाक्षत्रचान्द्रभेदेन चतुर्विधं भवति । तथोक्तं ज्योतिषे—'सौरश्च सावनश्चैव चान्द्रो नाक्षत्र एव चेति' । तत्र यावता कालेनैकमंशं रविर्भुनक्ति तावत्सौरदिनमेकम्, तन्मितैस्त्रिंशद्भिर्दिनैरेकः सौरो मासः । तथा च सूर्योदयद्वयान्तरकालः सावनं दिनम् । त्रिंशत्संख्यकैस्तादृशैर्दिनैरेकः सावनमासोऽनियताद्यन्तदिनात्मकः । एवं त्वेकतिथिभोगकालश्चान्द्रं दिनं, तत्त्रिंशद्भिरेकश्चान्द्रमासः । यस्य स्वीया गतिर्न केवलं प्रवहवेगेन भ्रमणम्, तदुदयद्वयान्तरकालो नाक्षत्रं दिनम्, तत्राश्विन्यादि रेवत्यन्तसप्तविंशतिनक्षत्रभोगकालो नाक्षत्रमास इति ।

दर्शाद्दर्शमवधीकृत्य तेन दर्शानन्तरप्रतिपद इत्यर्थः। चान्द्रस्य शुक्लप्रतिपदारम्भकत्वे वचनान्तरमपि। तथाहि—

'इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः' इति।

एतद्व्याख्यानं मलमासप्रकरणे वक्ष्यते। कृष्णप्रतिपदमारभ्य पूर्णिमामान्तोऽपि चान्द्र एव, अत्र प्रमाणानि—

'अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे' इति स्मृतिः।

'अश्वयुक्कृष्णपक्षे तु श्राद्धं देयं दिने दिने'।

इति मनुवचनं, कृष्णादिरपि चान्द्र एवेति कृत्यमहार्णवलेखनं च। नाक्षत्रस्तु अश्विन्यादिरेवत्त्यंतः, 'नाक्षत्रमिन्दोर्भगणभ्रमाच्च' इति रत्नमालायाः। अथ कर्मविशेषे मासवि(१)शेषमाह। ज्यौतिषे—

विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृतः।

शेषे कर्मणि चान्द्रः स्यादेष मासविधिः स्मृतः॥

विवाहादावित्यादिपदादुपनयनादिसंस्कारराशिविशेषविहितस्नानादिनवान्नश्राद्धादिजन्ममासनिषिद्धक्षौरादिकर्मपरिग्रहः। यज्ञादिपदादशौचपरिग्रहः। शेषे कर्मण्येकोद्दिष्टपार्वणाष्टकातिथिकृत्यादौ, तथाहि-'पार्वणे त्वष्टकाश्राद्धे चान्तमिष्टं तथाब्दिकम्।' इति वाक्येऽष्टका साहचर्येण कृष्णादिचान्द्रस्यैवाब्दिकनिमित्तकस्यावसायादिति मासमीमांसायां गोकुलनाथोपाध्यायाः। 'तिथिकृत्ये तु कृष्णादिर्व्रते शुक्लादिरेव च' इति ब्रह्मपुराणम्। संकल्पादावपि कृष्णादिरेव मासो ग्राह्यः तथैव शिष्टाचारात्। अत्र नाक्षत्रस्तु जातकविषये इति रत्नमाला। 'चित्रापूर्णमासे दीक्षेरन् मुखं वा एतत्संवत्सरस्य' इत्यादि श्रुतेः॥

## अथ चैत्रकृत्यम्

तत्र वारुण्यादिनिर्णयः। मासेषु चैत्रस्य (२) प्राथम्यादादौ चैत्रकृत्यमित्येव निरूप्यते। अथ चैत्रकृष्णत्रयोदशी शतभिषायुक्ता वारुणी वरुणदेवता शतभिषानक्षत्रयोगात्। अत्र गङ्गास्नाने फलमाह स्कान्दे—

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी।

गङ्गायां यदि लभ्येत शतसूर्यग्रहैः समा॥ इति

शतभिषायुक्ता सा त्रयोदशी महावारुणी, तथाहि स्कान्दे—

शनिवारसमायुक्ता सा महावारुणी स्मृता।

गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा॥

---

(१) तथाचोक्तं **ज्यौतिषे**-वर्षायनर्त्तुयुगपूर्वकमत्रसौरान्मासास्तथा च तिथयस्तुहिनांशुमानात्।
यत्कृच्छ्रसूतकचिकित्सितवासराद्यं तत्सावनाच्च घटिकादिकमार्क्षमानात्॥

(२) **पाद्मे**—चैत्रे मासि महापुण्या निर्मिता प्रतिपत्पुरा।
तस्यां यः श्वपचं स्पृष्ट्वा स्नानं कुर्यात्सचैलकम्॥
न तस्य दुरितं किंचिन्नाधयो व्याधयो न च। भवन्ति कुरुशार्दूल! तस्मात्सम्यक् समाचरेत्॥

सा चैत्रकृष्णा त्रयोदशी शतभिषायुक्ता, शतभिषाशुभयोगशनिवारयोगे महामहावारुणी । तदुक्तं स्कान्दे—

शुभयोगसमायुक्ता शनौ शतभिषा यदि ।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥ इति

कुलं पुरुष इति याज्ञवल्क्यदीपकलिका, चैत्रकृष्णत्रयोदश्यामेवैतादृशयोगे महामहावारुणीति, तस्या उपक्रम एवैतल्लेखनात् । अत्र योगत्रये गङ्गायामेव फलमन्यत्रानुक्तेः इति तिथितत्वचिन्तामणौ महेशठक्कुराः । अत्र रात्रौ(१) वारुण्यादिस्नानं न कर्त्तव्यम्, राहुदर्शनादिप्रतिप्रसूतेतरसर्वकर्मणि पर्युदस्तत्वादाचार्यचूडामणिः । अन्ये तु महाफलश्रुते रात्रावपि स्नानङ्कर्तव्यमेव ।

महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।
तस्यां स्नानं न कुर्वीत काम्यनैमित्तिकादृते ॥

इति देवलोक्तेः । एतद्योगत्रये स्त्रिया अपि स्नानं कर्तव्यमेव । न च (२)-

'स्नानं कुर्वन्ति या नार्यश्चन्द्रे शतभिषाङ्गते ।
सप्त जन्म भवेयुस्ता दुर्भगा विधवा ध्रुवम्' ॥

इति प्रचेतोवचनात्तन्निषेध इति वाच्यम्, तस्या रागप्राप्तस्नानविषयत्वेनैव महेशठक्कुरादिनिबन्धकृद्भिर्व्याख्यातत्वात् । चैत्रशुक्लप्रतिपद् देवीपूजादौ परयुतैव ग्राह्या तच्चाश्विनकृत्ये वक्ष्यते ।

चैत्रशुक्लाष्टम्यां ब्रह्मपुत्रस्नानम् । तथा हि स्कान्दे—

चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः ।
स्नायाल्लौहित्यतोयेषु स याति ब्रह्मणः पदम् ॥

लौहित्यो ब्रह्मपुत्रः । तत्र सङ्कल्पः । ओमद्येत्यादि सर्वपापक्षयपूर्वकब्रह्मपदगमनकामो ब्रह्मपुत्रस्नानमहङ्करिष्ये इति ।

ॐ ब्रह्मपुत्र ? महाभाग ? शन्तनोः कुलसम्भव ? ।
अमोघागर्भसम्भूत ? पापं लौहित्य ? मे हर ॥

इति पठित्वा स्नायात् । अत्राशोककलिकापानं,(३) तन्मन्त्रो यथा—

'त्वामशोककराभीष्टं मधुमाससमुद्भव !

---

(१) 'दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन'
इति भारतोक्त्या दिने एव चेच्चैत्रकृष्णत्रयोदशीशतभिषाशुभयोगशनिदिनानां योगे योगोऽयम् । रात्रौ योगसम्भवेऽपि न योगविषयतेति विज्ञेयम् ।

(२) शीतगौ वरुणदैवते यदि स्नानमाचरति वामलोचना ।
जन्म जन्म विधवाऽतिदुर्भगा स्याद्ध्रुवं मुनिवरैरिति स्मृतम् ॥
इति वारुण्यादियोगभिन्नकालिकशतभिषानक्षत्रस्नानविषयपरम् ।

(३) **अगस्तिसंहिता । लिङ्गपुराणे**—अशोककलिकापानफलमुक्तम्—
अशोककलिका ह्यष्टौ ये पिबन्ति पुनवसौ । चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ॥

पिबामि शोकसन्तप्तो मामशोकं सदा कुरु' ॥

इति तिथितत्त्वचिन्तामणौ ठक्कुराः। तत्र सम्पूर्णचैत्रस्नाने—

चैत्रं तु सकलं मासं शुचिः प्रयतमानसः।
लौहित्यतोये यः स्नायात्स कैवल्यमवाप्नुयात् ॥

ओमद्येत्यादि कैवल्यप्राप्तिकामश्चैत्रमासं व्याप्य ब्रह्मपुत्रस्नानमहङ्करिष्ये इति तत्र सङ्कल्पः ॥

अथ रामनवमी—चैत्रशुक्लनवम्यां रामपूजा, तद्व्रतं च ब्रह्मपुराणे—

कृत्वैव ब्रह्महत्यादिपापेभ्यो मुच्यते ध्रुवम्।
बहुना किमिहोक्तेन मुक्तिस्तस्य करे स्थिता ॥

तस्य रामपूजाव्रतकर्त्तुः। अकरणे दोषमाह स्मृतिः—

यस्तु रामनवम्यां वै मोहाद्भुङ्क्ते नराधमः।
कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः ॥

इयं च नवमी मध्याह्नव्यापिनी ग्राह्या, तत्र स्मृतिः—

चैत्रशुक्ला तु नवमी पुनर्वसुयुता यदि।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥

उभयदिने मध्याह्नयोगे परैव ग्राह्या। अष्टमीविद्धा सनक्षत्राऽपि नोपोष्येति माधवः। । गौडास्तु—

'नवमी चाष्टमी विद्धा त्याज्या विष्णुपरायणैः'। इति वचनाद्व्यवस्थापयन्ति। स्कान्दे—

जनकस्य महर्षेस्तु कूपः परमधार्मिकः।
तत्र स्नात्वा च पीत्वा च पुनर्जन्म न विद्यते ॥ इति

## अथ वैशाखकृत्यम्

ब्रह्मपुराणे—एकभुक्तमथो नक्तमयाचितमतन्द्रितः।
माधवे मासि यः कुर्याल्लभते सर्वमीप्सितम् ॥

स्कान्दे—प्रपा कार्या च वैशाखे(१) देवे देया गलन्तिका।

---

स्कान्देपि-मीने मधौ शुक्लपक्षे अशोकाख्या यथाष्टमी। पिबेदशोककलिकाः स्नायाल्लौहित्यवारिणि॥

(१) कूपादिखननफलमुक्तं नन्दिपुराणे—

यो वापीमथवा कूपं देशे तोयविवर्जिते। खानयेत् स दिवं याति बिन्दौ बिन्दौ शतं समाः ॥

तथाऽऽदित्यपुराणे—

सेतुबन्धरता ये च तीर्थशौचरताश्च ये। तडागकूपकर्त्तारो मुच्यन्ते तृषितो भयात् ॥

सेतुरत्र जलधारणहेतुभूतो बन्धः। तीर्थशौचं घट्टपरिष्कारः, इति द्वैतनिर्णये। गलन्तिका तुलसीशिवलिङ्गयोरुपरि शनैः शनैः शश्वज्जलपतनार्थं सकुशसूक्ष्माधश्छिद्रयुक्तघटादि स्तम्भाद्याधारद्वारा यत्स्थाप्यते सा गलन्तिकोच्यते ॥ तथा च तत्रैव—

योऽश्वत्थमूलमासिञ्चेत्तोयेन बहुना सदा। कुर्यात्प्रदक्षिणां तं च सर्वदेवमयं ततः ॥
पितृदेवमनुष्यांश्च तर्पयेत्सचराचरम्। योऽश्वत्थमर्चयेद्देवमुदकेन समन्ततः ॥

उपानद्व्यजनं छत्रं सूक्ष्मवासांसि चन्दनम् ॥
जलपात्राणि देयानि तथा पुष्पगृहाणि च ।
पालकाणि च चित्राणि द्राक्षारम्भाफलान्यपि ॥

तिथितत्त्वे—ददाति यो हि मेषादौ सक्तूनम्बुघटान्वितान् ।
पितॄनुद्दिश्य विप्रेभ्यः सर्वपापैर्विमुच्यते ॥

तथा—वैशाखे यो घटं पूर्णं सभोज्यं वै द्विजन्मने ।
ददाति सुरराजेन्द्र ! स याति परमाङ्गतिम् ॥
मेषादौ सक्तवो देया वारिपूर्णा च गर्गरी । इति

अथात्र त्याज्यानाह—
कांस्यम्मांसं मसूरान्नं चणकङ्कोद्रवन्तथा ।
शाकम्मधु परान्नं च पुनर्भोजनमैथुने ॥

अत्र वारिपूर्णघटदानविधिः । ॐ वारिपूर्णघटाय नमः । ३ । कुशोपरि ॐ ब्राह्मणाय नमः । ३ । घटं सिक्त्वा ओमद्येत्यादि मेषार्कसंक्रमणप्रयुक्त-पुण्याहे पुण्यकाले वा अमुकगोत्रस्य श्री अमुकशर्मणो मम स्वर्गकामो मेषार्कं व्याप्य प्रत्यहं घटपरिमितजलं वरुणदैवतं यथानामगोत्राय ब्राह्मणायाऽहं ददे । ततो दक्षिणां दत्वा पठेत् ।

एष धर्मघटो नित्यं ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रसादात्सफला मम सन्तु मनोरथाः ॥ इति ॥

अथ अक्षयतृतीया । वैशाखशुक्लतृतीया अक्षयतृतीया, सा चतुर्थीयुक्ता ग्राह्या, तथाहि पक्षधरीयतिथिचन्द्रिकायां गोभिलः—
'वैशाखस्य तृतीयां तु पूर्वविद्धाङ्करोति यः ।
हव्यन्देवा न गृह्णन्ति कव्यञ्च पितरस्तथा' ॥

ब्रह्मवैवर्ते—रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम ? ।
अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते ॥ इति ।

गणयुक्ता चतुर्थीयुक्ता, चतुर्थीयुताया अलाभे तु द्वितीयायुताऽपि ग्राह्या ।
एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धाऽपि कर्तव्या यदि न स्यात् परेऽहनि ॥

इति ब्रह्मवैवर्तात् । इयं युगादिः, तत्र श्राद्धकरणे फलमाह मात्स्ये—
कृतं श्राद्धविधानेन मन्वादिषु युगादिषु ।

---

कुलानामयुतं तेन तारितं स्यान्न संशयः । कण्डूय पृष्ठतो गान्तु स्नात्वा पिप्पलतर्पणम् ।
कृत्वा गोविन्दमभ्यर्च्य न दुर्गतिमवाप्नुयुः ।

**कृत्यचिन्तामणौ तु—**

मसूरं निम्बपत्रं च योऽश्नाति मेषगते रवौ । अपि रोषान्वितस्तस्य तक्षकः किं करिष्यति ॥

वैशाखस्य मलमासत्वे, मलमासे एव रविव्रतं कर्त्तव्यम् । शुद्धवैशाखशुक्लपक्षे वृषादित्य-संभवात्तत्र दोषश्रवणात् । 'वृषादित्ये न कारयेत्' इति । तथा च नवयवान्ननिमित्तकं पार्वणमपि वैशाखाधिकशुक्लपक्ष एव विधेयमिति **शुद्धिष्टपरिशिष्टम्** ।

हायनादिद्विसाहस्रं पितॄणां तृप्तिदम्भवेत् ॥

अत्र श्राद्धं पूर्वाह्ण एव कर्त्तव्यमिति शूलपाणिः। अयमेव मैथिलस्मार्तपक्ष इति ठक्कुराः। एतत्तृतीयामभिधाय ब्रह्मपुराणे—

तस्यां कार्यो यवैर्यज्ञो यवैर्विष्णुं प्रपूजयेत् ।
यवान्दद्याद् द्विजातिभ्यः प्रयतः प्राशयेद्यवान् ॥

पूजादि विधायातिशयिताक्षययवदानजन्यफलप्राप्तिकामनया यवा-न्दद्यात्। तद्वाक्यमेतत्फलानुसारेणोहयं ( करणीयम् )। द्रव्यान्तरदानेऽपि अक्षयफलप्राप्तिकामनया इत्यादिवाक्यम्। नारदीये—

वैशाखे शुक्लपक्षे तु तृतीयायान्तथैव च ।
गङ्गातोये नरः स्नात्वा मुच्यते सर्वकिल्बिषैः ॥

ओमद्येत्यादि सर्वकिल्बिषविमुक्तिकामो गङ्गायां स्नानमहं करिष्ये, इति गङ्गास्नानसङ्कल्पः। कौशिकीस्नानप्रकरणे, रामायणे आदिकाण्डे—

वैशाखे मासि काकुत्स्थ ! तृतीया या भवेत्तिथिः ।
शुक्लपक्षे नरः स्नात्वा अश्वमेधफलं लभेत् ॥
कृत्तिका ऋक्षसंयुक्ता राका या कार्तिके भवेत् ।
कोकामुखे तु कौशिक्यां स्नात्वा स्वर्गे वसेन्नरः ।

ॐ अद्येत्यादि अश्वमेधफलप्राप्तिकामः कौशिक्यां स्नानमहङ्करिष्ये इति तृतीयायां संकल्पः। वैशाखपूर्णिमामभिधाय विष्णुपुराणे—

कृष्णाजिनन्तिलान् कृष्णान्हिरण्यम्मधुसर्पिषी ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥ इति ॥

अस्यां गङ्गास्नाने ओं अद्येत्यादि गङ्गास्नानजन्यफलसहस्रगुणाधिकफलप्राप्तिकामो गङ्गायां स्नानमहङ्करिष्ये ।

## अथ ज्येष्ठकृत्यम्

ज्येष्ठामावस्यायां वटमूले सावित्रीपूजनम्। वटप्रदक्षिणं च स्त्रियः कुर्युः। इयममावस्या पूर्वयुतैव (१) ग्राह्या। तथाहि—

स्कान्दे—कृष्णाष्टमी चतुर्थी च सावित्री वटपैतृकी ।
शुक्ला त्रयोदशी रम्भा नोपोष्यास्स्युः परान्विताः ॥
स्मृतिश्च—शिवा च शिवदुर्गा च दूर्वा चैव हुताशनी ।

---

( १ ) तथा च तिथितत्त्वचिन्तामणौ म. म. महेशठक्कुराः

भूतविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा। वर्जयित्वा नरश्रेष्ठ ? सावित्रीव्रतमुत्तमम् ॥
इति ब्रह्मवैवर्ते । तथा—

भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत्। वर्जयित्वा तु सावित्रीव्रतं च शिखिवाहन ॥
तथा च-प्रतिपत्पञ्चमी भूता सावित्री वटपूर्णिमा । नवमी दशमी चैव नोपोष्या परसंयुता ॥

गोपूजा च वटच्छाया कर्तव्या प्रथमे दिने ॥ (१)

अथ तिथीनां वेधविचारः-तत्र प्रातःकाले द्विमुहूर्तवेधः । 'द्विमुहूर्त्तोऽपि वेधः स्याद्या तिथिर्वृद्धिगामिनी इति दक्षोक्तेः । सायङ्काले त्रिमुहूर्त्तवेधः ।

पक्षद्वयेऽपि तिथयः तिथिपूर्वान्तथोत्तराम् ।
त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ॥

इति पैठीनसिवचनात् ।

यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः ।
सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्तैव या भवेत् ॥

इतिस्कान्दोक्तेश्च । इति तिथितत्त्वचिन्तामणौ ठक्कुराः ।

ज्येष्ठशुक्लतृतीयायां पञ्चाग्निव्रतं राजमार्तण्डे—

भद्रे ! कुरु प्रयत्नेन रम्भाख्यं व्रतमुत्तमम् ।
ज्येष्ठशुक्लतृतीयायां स्नाता नियमतत्परा ॥

एतद्व्रतोद्यापनं पञ्चवर्षं समाचारः इयमेव रम्भाख्या तृतीया सा च द्वितीयायुतैव कार्या, युग्मा २ ग्नि ३ कतु ४ भूतानि ५ षण् ६ मुन्यो ७ र्वसु ८ रन्ध्रयोः ९ । रुद्रेण ११ द्वादशी १२ युक्ता चतुर्दश्य १४ ऽथ पूर्णिमा १५ ॥ प्रतिपदात्वमावस्या तिथ्योर्युग्मं माहाफलम् । व्यस्तमेतन्महाघोरं हन्ति पुण्यं पुराकृतम्, इति निगमात् । रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम ! । अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते ॥ इति ब्रह्मवैवर्त्तवचनाच्च ॥

---

(१) अथ सोमवत्यमावास्याव्रतमुक्तं **कृत्यशिरोमणिधृतभारते** यथा—

अमावस्या यदा पार्थ ? सोमवारसमन्विता । तस्यामश्वत्थमागत्य पूजयित्वा जनार्दनम् ।
अष्टोत्तरशतं कृत्वा तस्मिन् वृक्षे प्रदक्षिणम् । तावत्संख्यानुपादाय रत्नधातुफलानि च ।
व्रतराजमिदं राजन् विष्णोः प्रीतिकरं परम् ॥

तथा च **स्मृत्यन्तरे**—

सोमवत्या अमायास्तु व्रतं कृत्वा सती भवेत् । पतिपुत्रधनैः पूर्णा जन्मजन्मनि निश्चितम् ॥
विधवा चेत्करोतीदं न पुनर्विधवा क्वचित् । तस्मात्स्त्रिया सुभगया कर्त्तव्य खलु तद्व्रतम् ॥

अत्र मासनियमो नास्ति। यदा कदा सोमवारयुक्ताऽमा भवेत्तदैव सोमवतीयोगः । अयं दिनान्तर्गत एव कर्त्तव्यः । केवलसोमवारव्रतमपि शिवप्रीतिकरमुक्तं **मत्स्यपुराणादौ**-तद्दिवाऽभोजनपूर्वकरात्रिभोजनरूपम् । तथाच **स्कान्दे**—

सोमवारे विशेषेण प्रदोषादिगुणैर्युते । केवलं वाऽपि ये कुर्युः सोमवारे शिवार्चनम् ॥
न तेषां विद्यते किञ्चिदिहामुत्र च दुर्लभम् । उपोषितः शुचिर्भूत्वा सोमवारे जितेन्द्रियः ॥
वैदिकैर्लौकिकैर्वापि विधिवत्पूजयेच्छिवम् । ब्रह्मचारी गृहस्थो वा कन्या वाऽपि सभर्तृका ॥
विभर्तृका वा सम्पूज्य लभते वरमीप्सितम् ।

एतद्व्रतकथाऽपि तत्रैव वर्त्तते—ग्रन्थविस्तृतिभीत्याऽत्र न निवेशितेति । इदं विशेषतया श्रावणे मासि प्रशस्तमिति । **शातातपस्तु** योगान्तरमाह—

अमा वै सोमवारेण रविवारेण सप्तमी । चतुर्थी भौमवारेण विषुवत्सदृशं फलम् ॥
अमावास्यां भवेद्वारो यदाभूमिसुतस्य वै । जाह्नवीस्नानमात्रेण गोसहस्रफलं लभेत् ॥

अथ दशहरा। राजमार्त्तण्डे—

ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता।
हरते दश पापानि तस्माद्दशहरा (१) स्मृता ॥

कुजहस्तयुतां दशमीमभिधाय तत्रैव 'पुण्यन्दद्यादपि दशगुणं वाजिमेधायुतस्येति, एतद्दशमीमभिधाय स्कान्दे—

यां काञ्चित्सरितं प्राप्य दद्यादर्ध्यतिलोदकम्।
मुच्यते दशभिः पापैः स महापातकोपमैः ॥

दद्यादिति पितृभ्यः। इत्यादि योगाधिक्ये फलाधिक्याद्यत्रैव योगबाहुल्यं तत्रैवेयं ग्राह्या, ज्येष्ठे मलमासे सत्यपि दशहराप्रशंसा न तु शुद्धसमय एवेति नियमो निबन्धनात्रे, तथा 'दशहराः शुभोत्कर्षाश्चतुर्ष्वपि युगादिषु इति ऋष्यशृङ्गः। इति तिथितत्त्वचिन्तामणौ, महेशठक्कुरलिखनम्। दशपापान्याह राजमार्तण्डे—

पारुष्यमनृतञ्चैव पैशुन्यं चापि सर्वतः।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः।
परदारोपसेवा च कायिकं त्रिविधं मतम् ॥
परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्।
वितथाभिनिवेशश्च मानसन्त्रिविधं स्मृतम् ॥

अस्यां गङ्गास्नाने सङ्कल्पः 'ॐ अद्येत्यादि दशविधपापक्षयकालो गङ्गायां स्नानमहङ्करिष्ये इति। अस्यामेव सेतुबन्धे रामेश्वरदर्शनम्। अस्यां स्थापितत्वात्। तथाहि—

दशयोगे सेतुमध्ये लिङ्गरूपधरं हरम्।
रामो वै स्थापयामास शिवलिङ्गमनुत्तमम् ॥

## अथाषाढकृत्यम्

मैथिलस्मार्त्तमते एकादश्यामेव हरिशयनम्। दाक्षिणात्यमते द्वादश्याम्। गौडमते चोभयमिति बोध्यम्। तथा भारते—

अषाढे तु सिते पक्षे एकादश्यामुपोषितः।
चातुर्मास्यव्रतङ्कुर्याद्यत्किंचिदखिलो नरः।

नित्यमेतद्व्रतम्। दैवादकरणे कार्तिकमात्रेऽपि कर्त्तव्यम्। तथाहि भारते—

---

(१) स्कान्दे सेतुबन्धमाहात्म्ये—
ज्येष्ठमासे सिते पक्षे दशमी बुधहस्तयोः। गरान्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ ॥
दशयोगे सेतुमध्ये लिङ्गरूपधरं हरम्। रामो वै स्थापयामास शिवलिङ्गमनुत्तमम् ॥
अत्र वृषे रवावित्यनेन ज्येष्ठस्य मलमासे तत्रैव वृषादित्यसम्भवाच्छुद्धज्येष्ठशुक्लदशम्यां मिथुनादित्यनिश्चयान्मलमासशुक्लदशम्यामेव दशहरेति।

वार्षिक्याश्चतुरो मासान्वाहयेत्केनचिन्नरः ।
व्रतेन नो चेदाप्नोति किल्बिषं वत्सरोद्भवम् ॥
असम्भवे तुलार्केऽपि कर्त्तव्यं तत्प्रयत्नतः ।

आषाढशुक्लपक्षे रविवारे पुलिकमूलबन्धनमुक्तम् । ज्योतिःसारे—

शुचिसितदिनकरवारे करमूले बद्धपुलिकमूलस्य ।
नागारेरिव नागाः प्रयान्ति किल दूरतस्तस्य ॥(१)

तन्मन्त्रोऽप्ययमेव । बृहद्वशिष्ठः—

अकृत्वा पुलिकैर्बन्धं प्रायश्चित्तीयते नरः ।
चातुर्मास्ये व्यतीते तु मुक्तिस्तस्य कराद्भवेत् ॥

## अथ श्रावणकृत्यम्

राजमार्तण्डे—

सिंहकर्क्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानन्न कुर्वीत वर्जयित्वा समुद्रगाः ॥

सिंहो भाद्रः । कर्क्कटः-श्रावणमासः । मासश्चात्र सौरो ग्राह्यः । द्वैतपरिशिष्टे तथैवाभिधानात् । नद्यश्चाष्टसहस्रधनुःप्रमाणं यासां ताः । तन्न्यूनं गर्तः । तथाहि—

धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवाच्या गर्तास्ते परिकीर्तिताः ॥

चतुर्हस्तदण्डो धनुः । तथाहि विष्णुधर्मोत्तरे—'द्वादशांगुलिकः शंकुस्तद्द्वयं तु शयः स्मृतः । तच्चतुष्कन्धनुः प्रोक्तं क्रोशो धनुः सहस्रिकः-इति । शयो हस्तः । समुद्रगाः साक्षात्प्रत्यभिज्ञायमानसमुद्रगामिन्यः, तासु गङ्गा

---

(१) तथाचोक्तं **शब्दकल्पद्रुमे**—

अर्कस्य दुग्धेन शिरीषबीजं त्रिर्भावितं पिप्पलीचूर्णमिश्रम् ।
एषोऽगदो हन्ति विषाणि कीटभुजङ्गलूतोन्दुरुवृश्चिकानाम् ॥

तूलद्रुपत्रस्य रसं सार्धद्वितोलसम्मितम् । पाययेत्तद्रसैर्लेपस्तत्पत्रैः सेकबन्धनम् ॥

रम्भास्तम्भरसं पीत्वा सर्पदष्टः सुखी भवेत् ॥

**मात्स्ये**—पन्नगान् ये न हिंसन्ति तान्न हिंसन्ति पन्नगाः ।

येषु नक्षत्रेषु सर्पेण दष्टो न जीवति तान्याह **वसिष्ठः**—

मघाविशाखाऽनलसार्पयाम्यनैर्ऋत्यरौद्रेषु च सर्पदष्टः ।
सुरक्षितो विष्णुरथेन सोऽपि प्राप्नोति कालस्य मुखं मनुष्यः ॥

अत्र विष्णुरथेन गरुडेन 'नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः' **इत्यमरः** ॥

**स्मृतिः**-आर्द्रायाः प्रथमे पादे क्षीरमश्नाति यो नरः । अपि रोषयुतस्तस्य तक्षकः किं करिष्यति ॥

क्षीरमत्र पायसं परमान्नम् । अथार्द्राप्रथमचरणं यावदम्बुवाचीत्युच्यते—तत्र नवोदकश्राद्धं न करणीयमिति—रघुनन्दनीयाष्टाविंशतितत्त्वे लिखितम् । तत्र साधारणतया श्राद्धवर्ज्यतिथिदिननक्षत्राणि व्याख्यानि । **शातातपः**—

नवोदके नवान्ने च गृहप्रच्छादने तथा । पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥

महानदी, तापी, कृष्णा, वेणी, गोदावरी, तुङ्गभद्रा, ताम्रपर्णी, कावेरी, रेवा, सिन्धुर्गोमतीत्येकादशाहुस्त एव शिष्टाः ।

तपनस्य सुता गङ्गा गोमती च सरिद्वरा ।
रजसा च न दुष्यन्ति ये चान्ये नदसंज्ञकाः ।

तपनस्य सुता यमुना, कालविशेषे रजोयोगेऽपि स्नाने दोषाभावमाह देवलः—

उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥

उपाकर्म यज्ञोपवीतसंस्कारविशेषः । स च दक्षिणदेशे प्रसिद्धः । नदीतीरवासिनान्तु रजोयोगेऽपि सर्वदा नदीस्नाने दोषाभावमाह निगमः—'न दुष्येत्तीरवासिनाम्' इति । व्याघ्रपादोऽपि—

अभावे कूपवापीनामन्येनापि समुद्धृते ।
रजोदुष्टेऽपि पयसि ग्राम्यभोगो न दुष्यति ॥ इति ।

अन्येनेति कुम्भादिनेति स्मार्ताः ।

**श्रावणशुक्लतृतीयायां (१)मधुश्रावणीव्रतम्—**

'तृतीया नभसः शुक्ला मधुश्रावणिका स्मृता' ॥

इति ठक्कुरधृतवचनात् । इदञ्च परयुतायामेव कार्यमिति दिवोदासः । स्मृतिश्च--

आद्या मधुश्रावणिका कज्जली हरितालिका ।
चतुर्थीमिश्रिता स्त्रीभिर्दिवानक्ते विधीयते ॥ इति ।

'रम्भाख्यां वर्जयित्वा तु तृतीये' त्यादिवचनैः चतुर्थीयुतेयं कार्या ।

अथ गणेशचतुर्थीनिर्णयः--श्रावशुक्लचतुर्थी गणेशचतुर्थी सा च पूर्वविद्धा ग्राह्या । तथाहि—

तृतीयासंयुता या तु सा चतुर्थी फलप्रदा ।
कर्तव्या व्रतिभिस्तात ! गणनाथसुतोषिणी ॥ इति ।

गणनाथं सुतरां तोषयतीति गणेश्वरव्रते तृतीयायुता चतुर्थी विधेया । अन्यदेवताव्रते हि 'गणनाथसुतोषिणी' त्यसङ्गतं स्यात् । तस्माद्विनायकव्रते

---

(१) अत्र श्रावणकृष्णद्वितीयायाम**शून्यशयनव्रत**मुच्यते । न शून्यं शयनं पर्यङ्को भवति येनाचरितेन तत्सा तु विद्धा चेत्प्रतिपद्युतैव ग्राह्या । तथाचाह **संवर्तः**—

कृष्णाष्टमी बृहत्तल्पा सावित्री वटपैतृकी । कामत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ॥

बृहत्तल्पा अशून्यशयनद्वितीया । एवमेव म० म० **वाचस्पतिमिश्र**कृततिथिनिर्णये । अत्र विष्णोः प्रार्थनायां पुरुषकर्तृकप्रतीत्या स्त्रीरहितपुरुषकर्तृकमिदं व्रतमवगम्यते । तथाचोक्तं **मत्स्यपुराणे**—

यथा न लक्ष्म्या शयनं तव शून्यं जनार्दन । शय्या ममाप्यशून्याऽस्तु कृष्ण ! जन्मनि जन्मनि ॥

इत्यादि साहचर्यात् स्त्रियाऽपि क्रियते । इति ।

चतुर्थी तृतीयायुतैवोपोष्या, वत्सपूजाधेनुपूजयोः पृथगुपादानादिति तिथिचन्द्रिकायां पक्षधरमिश्राः । बृहस्पतिः—'चतुर्थीगणनाथस्य मातृविद्धा प्रशस्यते' इति । एतच्चोभयदिने मध्याह्नव्याप्तौ उत्तरदिनमात्रे, मध्याह्नव्याप्तौ तु उत्तरदिन एव 'मध्याह्न यापिनी चेत् स्यात् परतश्च परेऽहनि' इति बृहस्पतेः ॥

अथ नागपञ्चमी—श्रावणशुक्लपञ्चमी नागपूजादौ षष्ठीयुता । अन्यपञ्चम्यस्तु चतुर्थीयुताः कार्याः । तथाहि चमत्कारचिन्तामणौ स्मृतिः—

पञ्चमीनागपूजायां कार्या षष्ठीसमन्विता ।
तस्यान्तु तुषिता नागा इतरासु चतुर्थिका ॥ इति ।

इतरासु एतद्भिन्नपञ्चमीषु चतुर्थिकेतियोगः प्रशस्त इति शेषः । स्मृतिः—

श्रावणे पञ्चमी शुक्ला सम्प्रोक्ता नागपञ्चमी ।
तां परित्यज्य पञ्चम्यश्चतुर्थीसहिताः स्मृताः ॥ इति ।

इयञ्च शुक्ला पञ्चमी(१)माण्डरब्राह्मणमात्रपूज्या । शूद्रैरपि पूज्या । कृष्णा तु पञ्चमी सदसन्मान्याऽतिप्रशस्तेति सर्वस्मार्तराद्धान्त इति तिथितत्त्वचिन्तामणौ महेशठक्कुराः ॥

अथ रक्षिकाबन्धनम् । श्रावणपूर्णिमायां भद्राशून्यायां (२)रक्षार्थं रक्षिकाबन्धनम् । भद्रायां तन्निषेधमाह स्मृतिः—

भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा ।
श्रावणी नृपतिं हन्ति ग्रामं हन्ति च फाल्गुनी ॥ इति ।

इयं तु पूर्वविद्धा ग्राह्या—

श्रावणी दौर्गनवमी दूर्वा चैव हुताशिनी ।
पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनम् ॥

इति बृहद्यमवचनात् ।

## अथ भाद्रकृत्यम्

भाद्रकृष्णचर्थ्यां बहूलापूजा । सा च तृतीयायुता ग्राह्या, परयुक्ताया दोषश्रवणात् । तथाहि दिवोदसः—

गौरी चतुर्थी वटधेनुपूजा दुर्गार्चनं दुर्भरहोलिका च ।
गोवत्सपूजा शिवरात्रिरेताः परा विनिघ्नन्ति नृपं सराज्यम् ॥ इति ।

---

(१) तथाचोक्तं तिथितत्त्वचिन्तामणौ—

श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ! द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः ॥
पूजयेद्विधिवद्वीर दधिदूर्वाङ्कुरैः कुशैः । गन्धपुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणैः ॥
ये तस्यां पूजयन्तीह नागान्भक्तिपुरःसराः । न तेषां सर्पतो वीर ! भयं भवति कुत्रचित् ॥

(२) तद्दिने चन्द्रग्रहणे सति भद्रारहितसमये रक्षिका बन्धनीया ग्रहणस्य बाधकत्वाभावात् । तथोक्तं निर्णयसिन्धौ—

नित्ये नैमित्तिके जप्ये होमे यज्ञक्रियासु च । उपाकर्मणि चोत्सर्गे ग्रहदोषो न विद्यते ॥

अत्र ग्रहदोषो ग्रहणदोषः ।

अथ बहुलापूजासङ्कल्पः--ओमद्येत्यादि सर्वपापक्षयपर्वकधनधान्यसुतान्वितगोसमृद्धिपूर्वकदिव्यविमानारोहणगोलोकप्राप्तिकामोऽद्यादि यावज्जीवम्प्रतिभाद्रकृष्णचतुर्थ्याम्बहुलापूजनव्रताचरणमहङ्करिष्ये । इति प्रथमारम्भे सङ्कल्पः । ( पूजा ) तत्र पञ्चदेवता विष्णुगौरीकुलदेवतारोहितपर्वतचन्द्रसेनसोमिलगोपकामरूपिव्याघ्रसवत्सबहुला एतेषां पूजां कृत्वा कथां श्रुत्वा गोग्रासं दत्वा आचाराद्यवान्नभक्षणं कुर्यादिति ॥

अथ भाद्रे गोप्रसवे दोषमाह । नारदः--

भानौ सिंहगते चैव यस्य गौस्सम्प्रसूयते ।
मरणन्तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः ॥
तत्र शान्तिम्प्रवक्ष्यामि येन सम्पद्यते शुभम् ।
प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत् ।
ततो होमम्प्रकुर्वीत घृताक्तै राजसर्षपैः ।
आहुतीनां घृताक्तानामयुतं जुहुयात्ततः ॥
सोपवासः प्रयत्नेन दद्याद्विप्राय दक्षिणाम् ।
वस्त्रयुग्मं यवं चैव समवर्णं प्रदापयेत् ॥
इष्टदैवतमन्त्रेण ततः शान्तिर्भवेद्द्विज ॥

तथा- सिंह(१)राशौ गते सूर्ये गोप्रसूतिर्यदा भवेत् ।
पौषे च महिषी सूते दिवंवाश्वतरी तथा ॥
तदाऽनिष्टम्भवेत्किंचित्तच्छान्त्यै शान्तिकं चरेत् ॥
अस्य 'वामेति' सूक्तेन 'तद्विष्णो' रिति मन्त्रतः ।
जुहुयाच्च तिलाज्येन शतमष्टोत्तराधिकम् ॥
मृत्युञ्जयविधानेन जुहुयाच्च तथाऽयुतम् १०००० ।
श्रीसूक्तेन तथा स्नायाच्छान्तिसूक्तेन वा पुनः ॥
मध्यरात्रे निशीथे वा यदा गौः क्रन्दते सदा ॥
ग्रामे वा स्वगृहे वाऽपि शान्तिकं पूर्ववद्दिशेत् ॥

गार्ग्यपरिशिष्टे-माघे बुधे च महिषी श्रावणे वडवा दिवा ।
सिंहे गावः प्रसूयन्ते स्वामिनो मृत्युदायकः ॥

तत्रापि शान्तिः कार्या ।

---

( १ ) अनेन कर्ककन्याऽर्कयुक्ते भाद्रे न दोषः । तथा च—
जङ्गमे स्थावरं जातं स्थावरे वाऽथ जङ्गमम् ।
तस्मिन् योनिविपर्यासे परचक्रागमो भवेत् ॥
त्यागो विवासो दानं वा कृत्वाऽप्याशु शुभं लभेत् ॥
तथा च—वडवा हस्तिनी गौर्वा यदि युग्मं प्रसूयते ।
वैजात्यं विकृतं वाऽपि षड्भिर्मासैश्च म्रियते ।
वियोनिषु च गच्छन्ति मैथुने देशनाशनम् ॥

अथ भाद्रकृष्णाष्टम्यां कृष्णजन्माह, तिथितत्त्वचिन्तामणौ—

चैत्रे तु शुक्लपञ्चम्यां भगवान्मीनरूपधृक् ।
ज्येष्ठशुक्ले तु द्वादश्यां कूर्मरूपधरो हरिः ॥
चैत्रकृष्णनवम्यान्तु हरिर्वाराहरूपधृक् ।
नरसिंहश्चतुर्दश्यां वैशाखे शुक्लपक्षके ॥
मासि भाद्रपदे शुक्लद्वादश्यां वामनो हरिः ।
राधे कृष्णतृतीयायां रामो भार्गवरूपधृक् ॥
चैत्रशुक्लनवम्यान्तु रामो दशरथात्मजः ।
नभस्ये तु द्वितीयायां बलभद्रोऽभवद्धरिः ॥
श्रावणे बहुलेऽष्टम्यां कृष्णोऽभूल्लोकरक्षकः ।
ज्येष्ठशुक्लद्वितीयायां बौद्धः कल्की भविष्यति ॥

श्रावणोऽत्र शुक्लादिश्चान्द्रमासः तेन कृष्णादिरीत्या भाद्रएव इति ।

अथ भाद्रकृष्णाष्टम्यां कृष्णस्य पूजनं व्रतं च स्त्रीपुंससामान्याधिकारमिति समयप्रदीपः । एतच्च नित्यम् ।

अकुर्वन्निरयं याति यावदिन्द्राश्चतुर्दश । इति ।
नरो वा यदि वा नारी कृष्णजन्माष्टमीव्रतम् ।
न करोति तदा घोरा व्याली भवति कानने ॥

इति च भविष्यपुराणवचनाभ्यामकरणे दोषश्रवणात् । नित्यतया चात्र सङ्कल्पो नास्तीति व्रतपद्धतिः । वस्तुतस्तु-'अकुर्वन्निरयम्'इत्यादि 'यथेष्टं फलमाप्नुयात्' इति वचनाभ्यान्नित्यकाम्यमिदमिति कृत्यमहार्णवः । इयमष्टमी चन्द्रोदयव्यापिनी यदा तदा जयन्ती व्रतम् , उभयदिने चन्द्रोदयव्यापित्वे तूत्तरदिने । तथाहि-अग्निपुराणे—

वर्ज्जनीया प्रयत्नेन सप्तम्या संयुताऽष्टमी ।
सऋक्षाऽपि न कर्त्तव्या सप्तम्या संयुता यदि ॥

पद्मपुराणे—पञ्चगव्यं यथा शुद्धं न ग्राह्यं मद्यदूषितम् ।
रविविद्धा(१)तथा त्याज्या रोहिण्याऽपि युताऽष्टमी ॥ इति ।

यद्युत्तरदिने चन्द्रोदयव्यापिनी नाष्टमी तदा सप्तमीसंयुता ग्राह्या । तदुक्तं विष्णुपुराणे —

कार्या विद्धाऽपि सप्तम्या रोहिणीसंयुताऽष्टमी ।
जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते ॥
कृतोपवासस्तिथ्यन्ते तत्र कुर्यात्तु पारणम् इति ।

यदा चोदये किञ्चिन्मात्रमष्टमी तदुपरि सकला नवमी, तदा जयन्ती व्रतेऽष्टमी स्वल्पाऽप्युपोष्या । तदुक्तं पद्मपुराणे —

उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।

---

( १ ) रविविद्धा रविदैवततिथ्या सप्तम्या विद्धेत्यर्थः ।

भवेद्बुधेन संयुक्ता प्राजापत्यर्क्षसंयुता ॥
अपि वर्षशतेनापि लभ्यते वा न वा विभो ? ।

इति तिथिचन्द्रिकायां पद्मधरमिश्रलिखनम् ॥

पूर्वविद्धाऽष्टमी या तु उदये नवमी दिने ।
मुहूर्त्तमपि संयुक्ता सम्पूर्णा साऽष्टमी भवेत् ।
कला काष्ठा मुहूर्त्ताऽपि यदा कृष्णाष्टमी तिथिः ।
नवम्यां सैव ग्राह्या स्यात्सप्तमीसंयुता नहि ॥

इति पद्मपुराणाभिधानात् । एवमेव म० म० वाचस्पतिमिश्रद्वैतनिर्णये, रुद्रधरवर्षकृत्ये । गौडदाक्षिणात्यग्रन्थमात्रे बहुव्यवस्था बोध्येति शिवम् । तिथितत्त्वचिन्तामणौ महेशठक्कुरलिखनान्नवमीयुक्तायामेवाष्टम्याञ्जयन्तीव्रतम् ।

अथमहालक्ष्मीपूजनादिविधिः--एतदष्टमीमारभ्याखिलकृष्णाष्टमीं यावप्रत्यहं महालक्ष्मीपूजाव्रतं कथाश्रवणं च षोडशवर्षपर्यन्तम् ।

अथ कुशोत्पाटनम्(१) । भाद्रामावास्यायां कुशोत्पाटनमाह मरीचिः-

मासे नभस्यमावास्या तस्यां दर्भश्च यो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥ इति ।

नभसि श्रावणे । अत्रापि शुक्लादिश्चान्द्रमासः । तेन श्रावणी पूर्णिमोत्तरामावास्यायां कुशोत्पाटनमायाति । कुशोत्पाटनमन्त्रस्तु—

कुशाग्रे वसते रुद्रः कुशमध्ये तु केशवः ।
कुशमूले वसेद्ब्रह्मा कुशान्मे देहि मेदिनि ! ॥ इति ।

कुशप्रतिनिधीनाह स्नानसूत्रभाष्ये—

कुशाः काशामया दूर्वा उशीराश्च सकुन्दराः । इति । कुशाः कुशकार्यकारिण इति संख्यापरिमाणम् । निषिद्धकुशानाह लघुहारीतः—

चितिदर्भाः पथिदर्भा ये दर्भा यज्ञभूमिषु ।

---

(१) भाद्रीयामावास्योद्धृताः कुशाः वर्षपर्यन्तं कर्मयोग्याः इति मूल एवोक्तम् । अन्यामावास्योद्धृताः कुशाः एकमासपर्यन्तं कर्मयोग्याः । तथा चोक्तं पृथ्वीचन्द्रोदये यमः—

मासि मास्युद्धृता दर्भा मासि मास्येव चोदिताः ॥

तथा षट्त्रिंशन्मते चास्ति—

मासेन स्यादमावास्या दर्भो ग्राह्यो नवः स्मृतः ।

तथा यस्मिन् कस्मिन्दिने उद्धृतास्तद्दिनमात्रकर्मयोग्या इति पुरोलिखितहारीतवचनबोधितदैनिककृत्यत्वादिति ।

अथ कुशोत्पाटनेऽन्यस्मृतिलिखितमन्त्रः—

ॐ विरञ्चिना सहोत्पन्न ! परमेष्ठिनिसर्गज ! । नुद सर्वाणि पापानि दर्भ ! स्वस्तिकरो भव ॥

अन्यद्वारा शूद्रद्वारा च कुशग्रहणमनुचितमुक्तं हारीतेन—

समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् । शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ॥

सधवायाः कुशस्पर्शे दोष उक्तो ब्राह्मणसर्वस्वे—न स्पृशेत्तिलदर्भांश्च सधवा तु कथञ्चन ॥

स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ॥
पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम् ।
मूत्रोच्छिष्टे धृता ये च तेषां त्यागो विधीयते ॥ इति ।

अथ हरितालिका--भाद्रशुक्लतृतीया हरितालिका । तथाहि दिवोदासीये—

भाद्रस्य कज्जली कृष्णा शुक्ला च हरितालिका ।

सा च परयुता ग्राह्या तथाहि माधवः—

मुहूर्त्तमात्रसत्वेऽपि दिने गौरीव्रतम्परे ।
शुद्धाधिकायामप्येवं गणयोगप्रशंसनात् ॥

स्कान्दे—कला काष्ठा मूहूर्त्ताऽपि द्वितीया यदि दृश्यते ।
सा तृतीया न कर्त्तव्या कर्त्तव्या गणसंयुता ॥ इति ।

ब्रह्मवैवर्तेऽपि—

"रम्भाख्यां वर्जयित्वा तु तृतीयामि"त्यादि ।

पुराणसमुच्चयेऽपि—

द्वितीयाशेषसंयुक्तां या करोति विमोहिता ।
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः ॥ इति ।

संयुक्तामिति तृतीयामिति शेषः । अत्र पार्वतीशिवयोः पूजा ॥

अथ चतुर्थ्यां चन्द्रदर्शने दोषमाहमार्कण्डेयः—

सिंहादित्ये शुक्लपक्षे चतुर्थ्यां चन्द्रदर्शनम् ।
मिथ्याभिशापङ्कुरुते तस्मात्पश्येन्न तं तदा ॥(१)

तदेति चतुर्थ्यां न तच्चन्द्रं पश्येदित्यर्थः । तेन तत्रोदितस्य पञ्चम्यां दर्शने न दोष इति तात्पर्यम् । अत्र चतुर्थ्यामेव दर्शननिषेधस्तस्यामेव चन्द्रपूजनं दर्शनं च व्यवहारसिद्धमतो दोषशान्त्यर्थं (२)'सिंहः प्रसेनमवधीत्' इत्यादि धात्रेयिकावाक्यं प्राङ् मुख उदङ् मुखो वा पठेत् ।

'पठेद्धात्रेयिकावाक्यं प्राङ्मुखो वाऽप्युदङ्मुखः' । इति ।

---

(१) सिंहादित्य इत्यनेन सौरभाद्रशुक्लचतुर्थ्यां चन्द्रदर्शनं दूषितम् । यदा भाद्रपदोऽधिमासस्तदा सिंहादित्यस्य मलमासे गतत्वाच्छुद्धभाद्रपदशुक्ले चतुर्थ्यां चन्द्रदर्शननिषेधस्तथाचोक्तं **पराशरेण**—कन्यादित्ये चतुर्थ्यान्तु शुक्ले चन्द्रस्य दर्शनम् ।

मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा ॥

इति **तिथितत्त्वचिन्तामणौ** द्रष्टव्यम् ।

(२) सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः । सुकुमारक ! मा रोदीस्तव ह्येष स्यमन्तकः ॥

इति संपूर्णमन्त्रेण फलपुष्पपोलिकापकान्नपूरितवंशपात्रं समर्पयेत् । ततो नमो—

दधिशङ्खतुषाराभं क्षीरोदार्णवसम्भवम् । नमामि शशिनं भक्त्या शम्भोर्मुकुटभूषणम् ॥

इति मन्त्रेण दधिपात्रं समर्पयेत् । ततोऽन्ते—

'रूपं देहि यशो देहि भाग्यं भगवन् ? प्रदेहि मे । पुत्रान्देहि धनं देहि सर्वान् कामान् प्रदेहि मे॥

इत्यनेन वरं प्रार्थयेत् ।

प्रदोषव्यापिनीयं ग्राह्या उभयदिने प्रदोषव्याप्तौ पञ्चमी युक्ता 'युग्माग्निकृतुभूतानी'त्यादि निगमात्(१)।

अथ भाद्रशुक्लषष्ठी सूर्यषष्ठी सा च सर्वमते स्कन्दव्रतातिरिक्ता परयुता ग्राह्या, युग्मात्। "नागविद्धा न कर्तव्या षष्ठी चैव कदाचन" इति स्कान्दाच्च। अत्रैव राधाव्रतं, तच्च सप्तमीयोगेन कार्यम्।

अथ भाद्रशुक्लाष्टमी—दूर्वाख्या। सा च पूर्वयुता ग्राह्या तथाह बृहद्यमः-

श्रावणी दुर्गनवमी दूर्वा चैव हुताशिनी।
पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनम्॥ इति।

अथ भाद्रशुक्लचतुर्दश्यामनन्तव्रतम्। सा च त्रिमुहूर्त्ताऽप्यौदयिकी-ग्राह्येति माधवाचार्यः। तथाहि—

"उदये त्रिमुहूर्ताऽपि ग्राह्याऽनन्तव्रते तिथिः" इति घटिकामात्राऽप्यौदयिकी ग्राह्या, इति निर्णयामृतः। तथाह—

'पौर्णमास्या समायोगाद्व्रतं चानन्तकं चरेत्' इति भविष्ये।
द्व्यहेऽप्यौदयिकत्वे पूर्णत्वात्पूर्वविद्धा ग्राह्येति स्मार्त्ताः(२)।

---

(१) तिथियुग्मप्रतिपादकवचनस्यार्थः—

द्वितीयातृतीययोः। चतुर्थीपञ्चम्योः। षष्ठीसप्तम्योः। अष्टमीनवम्योः। एकादशीद्वादश्योः। चतुर्दशीपौर्णमास्योः। प्रतिपद्दर्शयोर्मेलनम्। अर्थाद्द्वितीयाव्रतन्तूभयदिने द्वितीयायां सत्यां तृतीयायुक्तायां कर्त्तव्यम्। तथा तृतीयाव्रतं तु द्वितीयायुक्तायां तृतीयायां कर्त्तव्यम्। यत्र च विशेषवचनं न युग्मत्वबाधकं, तत्र तत्र नियमेन युग्मादरः। विशेषवचनस्य बाधकत्वे न युग्मादरः। यथा हरितालिका तृतीयानिर्णये—

'कला काष्ठा मुहूर्त्ताऽपि द्वितीया यदि दृश्यते। सा तृतीया न कर्त्तव्या कर्त्तव्या गणसंयुता'।
इति स्कन्दपुराणवचनात्।

(२) **भविष्ये**—तथा भाद्रपदस्यान्ते चतुर्दश्यां द्विजोत्तम ?।
पूर्णिमायाः समायोगे व्रतं चानन्तकं चरेत्।
**स्कान्दे**—मुहूर्त्तमपि चेद्भाद्रे पूर्णिमायां चतुर्दशी।
सम्पूर्णां तां विजानीयात्पूजयेद्विष्णुमव्ययम्॥

इति **तिथिचन्द्रिकायां पक्षधरमिश्राः** लिलिखुः।
**पुनश्च तत्रैव**—अनन्तस्य व्रते राजन् ? घटिकैका चतुर्दशी।
उदये घटिकाऽर्धं वा सैव ग्राह्या महाफला॥
**दिवोदासः**—चतुर्दश्युदये किञ्चित्पूर्णिमा सकला यदि।
तत्र कुर्यादनन्तस्य महाविष्णोः प्रपूजनम्॥
**स्मृतिः**—व्रतोपवासनियमे घटिकैका यदा भवेत्।
सा तिथिस्तद्दिने पूज्या विपरीता तु पैतृके॥
**अग्निपुराणे**—वारुणेन समायुक्ता स्यादनन्तचतुर्दशी।
तत्राक्षयफलं प्रोक्तमनन्तार्चनसम्भवम्॥

अथ भाद्रशेषदिनत्रयेऽगस्त्यार्घदानम् (१)। तत्र प्रमाणम् ब्रह्मवैवर्त्ते—

अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः।
अर्घं दद्युरगस्त्याय गौडदेशनिवासिनः॥

नारसिंहे—शङ्खे तोयं विनिःक्षिप्य सितपुष्पाक्षतैर्युतम्।
मन्त्रेणानेन वै दद्याद्दक्षिणाभिमुखः स्थितः॥

अनेन 'शंखं पुष्पं फलं तोयम्' इत्यादि मन्त्रेण। अत्र दिनत्रये मन्त्र-त्रयं यथा—

कुम्भयोनिसमुत्पन्न ! मुनीनां मुनिसत्तम !।
उदयं ते लङ्काद्वारेऽर्घोऽयम्प्रतिगृह्यताम्॥ १॥

शङ्खं पुष्पं फलं तोयं रत्नानि विविधानि च। उदयन्ते' इत्यादि॥ २॥
काशपुष्पप्रतीकाश ! वह्निमारुतसम्भव !। उदयन्ते लङ्केत्यादि॥ ३॥

इति केचित्। रसमालायां तु प्रथमदिने तृतीयमन्त्रः, द्वितीये—प्रथम इति भेदः।

## अथाश्विनकृत्यम्

तत्र मनुः—अश्वयुक्कृष्णपक्षे तु श्राद्धं देयन्दिने दिने।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा॥

दिने दिने प्रतिदिने, न तु तिथौ तिथौ मुख्यार्थत्यागापत्तेः। श्राद्धविवेकादयोऽप्येवम्। तथा च प्रतिपदाद्यमावास्यान्तः पार्वणकालो मुख्यः। तदशक्तस्य पञ्चम्याद्यमावास्यान्तः। तत्राप्यशक्तस्य अष्टम्याद्यमावास्यान्तः। ततोऽप्यशक्तस्य दशम्याद्यमावास्यान्त इति चत्वारः कल्पा इति तात्पर्यम्। एतत्पक्षचतुष्टयाशक्तेनैकस्मिन्नपि दिने पार्वणं कर्त्तव्यम्। तथाहि—

यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे।
तस्य संवत्सरं यावत्संतृप्ताः पितरो ध्रुवम्॥ इति।

अकरणे दोषमाह स्मृतिः—

सूर्ये कन्यागते श्राद्धं यो न कुर्याद् गृहाश्रमी।
धनं पुत्राः कुतस्तस्य पितृनिश्श्वासपीडनात्॥

---

तथाच—पूर्वाह्णो वै देवानां मध्यंदिनं मनुष्याणामपराह्णः पितॄणाम्। इति श्रुतिवाक्यबला-त्तथा च पूजनादेः प्रातःकालिककृत्यत्वादुदयव्यापिनी एव ग्राह्या। **निर्णयसिन्धौ** तु—'मध्याह्ने भोज्यवेलायाम्' इति कथान्तर्गतपद्यप्रमाणेन 'माध्याह्निकी तिथि' रियं ग्राह्येति **कमलाकरभट्टेन** लिखितम्। तन्**मैथिलस्मृतिविरुद्ध**मस्तीति। मध्याह्नव्यापिनी तिथिरेकोद्दिष्टविधौ भोजनविधौ वोपयुक्ता भवति, न क्वापि पूजनादौ, तेन तन्मतं सम्यङ्नेति।

(१) अनेन सौरभाद्रस्य शेषदिनत्रयेऽर्घदानविधिः सिद्ध्यति। **व्यवहारस्तु**-कृष्णादिचान्द्र-मासस्यान्तिमदिनेऽर्घदानस्य दृश्यते। **राजमार्त्तण्डे**ऽगस्त्यस्य काशपुष्पप्रतिमां विधायार्घ-दानविधिविशेषः प्रतिपादितः, स च द्रष्टव्यः **परिशिष्टे**।

अतो नित्यमिदम्पार्वणम् । 'नन्दा(१) यां भास्करदिने' इत्यादि नन्दादिश्राद्धनिषेधवचनानि पक्षश्राद्धव्यतिरिक्तविषयाणि बोध्यानीति ठक्कुराः। सर्वेष्वप्येषु पक्षेषु चतुर्दशीत्यागः । यथा मनुः—

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रसिद्धास्तिथयो यथैता न तथेतराः ॥

अथ शस्त्रादिहतानामेव चतुर्दश्यां श्राद्धम् । तथाहि देवीपुराणे ।

आहवेषु विपन्नानां जलाग्निभृगुपातिनाम् । (२)
चतुर्दश्यां भवेत्पूजाऽमावास्यायान्तु कामिकी ॥ इति ।

वायुपुराणेपि–युवानस्तु गृहे यस्य मृतास्तेषान्तु दापयेत् ।
शस्त्रेण वा हता ये वै तेषां दद्याच्चतुर्दशीम् ॥ इति [शस्त्रहतश्राद्धमेकोद्दिष्टविधिना कर्तव्यम् । तथाहि—

चतुर्दश्यान्तु यच्छ्राद्धं सपिण्डीकरणे कृते ।
तदेकोद्दिष्टविधिना कर्त्तव्यं शस्त्रघातिनाम् ॥ इति ।

युवानः षोडशवर्षमारभ्य त्रिंशद्वर्षपर्यन्तवयस्का विवक्षिता इति रत्नाकरः। शस्त्रघातिनां शस्त्रेण हतानामित्यर्थः ॥

अथ महालक्ष्मीपूजनं व्रतञ्च । भाद्रकृष्णाष्टमीमारभ्याश्विनकृष्णाष्टमीं यावन्महालक्ष्मीपूजनं व्रतञ्च । इयमष्टमी चन्द्रोदयव्यापिनी ग्राह्या, तत्रैव पूजोक्तेः। परदिने चन्द्रोदयादूर्ध्वं त्रिमुहूर्त्तव्यापित्वे परैव, अन्यथा पूर्वैव, तथा च स्मृतिः—

---

(१) तिथितत्त्वचिन्तामणौ वशिष्ठः—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु । एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥
तथाच–भानौ भौमे त्रयोदश्यां नन्दासु च मघासु च । पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्॥

तथा हेमाद्रौ वृद्धपराशरः—

युगादिषु मघायां च विषुवत्ययने तथा । भरणीषु च कुर्वीत पिण्डनिर्वपणं नहि ॥

वृद्धगर्गः–प्राजापत्ये च पौष्णे च पित्र्यर्क्षे भार्गवे तथा। यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति॥

अत्राश्विनस्य मलमासे कन्यास्थसूर्यस्यावसरो मलमासान्तर्गत एव । तत्र शुद्धाश्विनकृष्णपक्षे सिंहादित्यसंभवादपि सकलस्मृतिसम्मत्या "कन्यां गच्छतु वा न वा–" इत्यादिना च । श्राद्धं कर्त्तव्यमित्येवमेव मैथिलसम्प्रदायोऽपि । पितॄणां चान्द्रमासमिताहोरात्रस्य कृष्णपक्षरूपमेव दिनं भवत्यतो रात्रिभोजनापेक्षया दिनभोजनस्य प्राशस्त्यात्तेषां श्राद्धं कृष्णपक्षे सर्वसम्मतम् । तत्रापि तेषां दर्शे दिनार्धसमयत्वात्तत्रातिप्रशस्तम् । "पश्यन्ति तेऽर्कं निजमस्तकोर्ध्वे दर्शे यतोऽस्मादद्युदलं च तेषाम्" इति सिद्धान्तशिरोमण्युक्तत्वात् ।

(२) अत्र चतुर्दश्यां येऽपमृत्युमन्तस्तेषामेव श्राद्धमुक्तं मरीचिना—

विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम् । चतुर्दश्यां क्रिया कार्या चान्येषान्तु विगर्हितम् ॥
वृक्षारोहणलोहाद्यैर्विषज्वालाविषाग्निभिः । नखीदंष्ट्रीविपन्नानां तेषां शस्ता चतुर्दशी ॥

तथा ब्राह्मेऽपि—युवानः पितरो यस्य मृताः शस्त्रेण चाहताः ।
तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता ॥

पूर्वा वा परविद्धा वा ग्राह्या चन्द्रोदये सदा ।
त्रिमुहूर्तापि सम्पूज्या परतश्चोर्ध्वगामिनी ॥ इति ।

अथ जीवत्पुत्रिकाऽष्टमी–

आश्विनकृष्णाष्टमी जीवत्पुत्रिकाख्या । तथाहि भविष्ये—

इषे मास्यसिते पक्षे चाष्टमी या तिथिर्भवेत् ।
पुत्रसौभाग्यदा स्त्रीणां ख्याता सा जीवपुत्रिका ॥
शालिवाहनराजस्य पुत्रो जीमूतवाहनः ।
तस्यां पूज्यः स नारीभिः पुत्रसौभाग्यलिप्सया ॥

इयमष्टमी प्रदोषव्यापिन्युपोष्या ।

प्रदोष(१) समये स्त्रीभिः पूज्यो जीमूतवाहनः ।
पुष्करिणीं विधायाथ प्राङ्गणे चतुरस्त्रिकाम् ॥

इति भविष्यपुराणात् । यद्युभयदिने प्रदोषव्याप्तिस्तदाऽपरेऽहन्येव प्रधानकालानुरोधात्, नवम्यधिकरणकपारणानुरोधाच्च पूर्वदिने व्रते तु वक्ष्यमाणवचनेन अष्टम्यां पारणे दोषश्रवणेन तदन्ते निशिपारणनिषेधेन च उपवासद्वयापत्तिः । यदि पूर्वेद्युः प्रदोषव्याप्तिर्न परेद्युरिति तदा पूर्वेद्युरेव प्रदोषानुरोधबोधकपूर्वोक्तवचनात् ।

पूर्वेद्युरपरेद्युर्वा प्रदोषे यत्र चाष्टमी ।
तत्र पूज्यस्सदा स्त्रीभी राजा जीमूतवाहनः ॥

इति विष्णुधर्मोत्तरीयाच्च । तिथिचन्द्रिकायां पक्षधरमिश्रोऽप्येवम् । यत्तु ठक्कुरैः सप्तमीयुताऽष्टमी कर्तव्येत्यभिहितं तदपि गुरुमिश्रैकवाक्यत्वानुरोधेन पूर्वदिनमात्रे प्रदोषव्यापिन्यष्टमीविषयकमेव विधेयम् । पारणन्तु परदिने तिथ्यन्ते(२)कार्यम् ।

आश्विनस्यासिताष्टम्यां याः स्त्रियोऽन्नञ्च भुञ्जते ।
मृतवत्सा भवेयुस्ता विधवा दुर्भगा ध्रुवम् ॥

इति भविष्यात् । विष्णुधर्मोत्तरे नवम्यां पारणविधानाच्च । उभयदिने प्रदोषे तदव्याप्तौ ( वा ) उदयगामिन्यां ( सूर्योदयगामिन्यां ) व्रतम् ।

लक्ष्मीव्रतञ्चाभ्युदिते शशाङ्के यत्राष्टमी चाश्विनकृष्णपक्षे ।
यत्रोदयं वै कुरुते दिनेशस्तदा भवेज्जीवितपुत्रिका सा ॥

इति दामोदरमिश्रधृतवचनात् । दिनेशः सूर्यः । तथाचोभयदिने प्रदोषेऽष्टम्यलाभे सूर्योदयकालीना यद्दिनेऽष्टमी तद्दिने जीमूतवाहनव्रतमिति तात्पर्यम् । एवैव व्यवस्था परमानन्दठक्कुरकृतवर्षपद्धतावपि, इति तिथिचन्द्रिकायां म० म० पक्षधरमिश्राः ॥

---

( १ ) प्रदोषो रजनीमुखमित्यमरः । ( २ ) अष्टम्यन्ते ।

अथ अन्वष्टका(१)श्राद्धम् ।

नवम्यामन्वष्टकाश्राद्धम् । तत्र कात्यायनः—
अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम् ।
पित्रादि मातृमध्यञ्च ततो मातामहान्तकम् ॥ इति ।

---

(१) वृद्धवसिष्ठः—

मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि । पतिपुत्रान्विता भव्या योषितोऽष्टौ मुदाऽन्विताः ॥

तिथितत्त्वचिन्तामणौ स्मृतः—

अन्वष्टकासु वृद्धौ च गयायाञ्च क्षयेऽहनि । अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥

दत्तैपापस्तम्बस्मृतौ—

अन्वष्टका तथा मातृश्राद्धं चैव मृताहनि । एकोद्दिष्टं तथा मुक्त्वा त्रिषु नान्यत्पृथग्भवेत् ॥

तथा च शातातपः—

अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा । अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥
एकमूर्तित्वमायाति सपिण्डीकरणे कृते । पत्नी पतिपितॄणां तु तस्मादंशेषु भागिनी ॥

बृहस्पतिरपि—

स्वेन भर्त्रा समं श्राद्धं माता भुंक्ते सुधासमम् । पितामही च स्वेनैव स्वेनैव प्रपितामही ॥

षट्त्रिंशन्मतेऽपि—

एकत्वं सा गता भर्तुः पिण्डे गोत्रेऽथ सूतके । न पृथक् पिण्डदानन्तु तस्मात्पत्नीषु विद्यते ॥

तथा चतुर्विंशन्मतेऽपि—

क्षयाहं वर्जयित्वैकं स्त्रीणां नास्ति पृथक्क्रिया । केचिदिच्छन्ति नारीणां पृथक् श्राद्धं महर्षयः ॥

तथा कात्यायनः—

न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते । स्वभर्तृपिण्डमात्राभ्य तृप्तिरासां यतः स्मृता ॥

आवश्यकं श्राद्धकरणमाह कात्यायनः—

अमावास्याव्यतीपातपौर्णमास्यष्टकासु च । विद्वान् श्राद्धमकुर्वाणो नरकं प्रतिपद्यते ॥

येषां पिण्डादिकं पितरो नाश्नन्ति तानाह यमः—

नाश्नन्ति पिशुने देवा नाश्नन्त्यनृतवादिनि । भार्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे ॥
न खरैरुपयातस्य न रक्ताम्बरवाससः ॥ इति ।

अत्र देवा इत्युपलक्षणम्, पितरोऽप्येवम्, स्मृत्यन्तरे दर्शनात् ।

श्राद्धसमये शुक्लवस्त्रं धार्यमित्याह प्रचेताः—'श्राद्धकृच्छुक्लवासाः स्यादिति' ।

तत्र कुशनियममाह बृहस्पतिः—

ऋजून् सव्येन कृत्वा तु दैवे दर्भान् प्रदक्षिणान् । द्विगुणानपसव्येन दद्यात्पित्र्येऽपसव्यवत् ॥

ऋजून् सरलान्, द्विगुणान् मोटकान् । तत्रोपवेशनक्रममाह कात्यायनः—

दक्षिणं पातयेज्जानु देवान् परिचरन् सदा । पातयेदितरद् जानु पितॄन् परिचरन् सदा ॥

पितृप्रदक्षिणनिषेधमाह कात्यायनः—

प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम् । देवानां सयवा दर्भाः पितॄणां द्विगुणास्तिलैः ॥

श्राद्धोपकरणाभावकालिककर्त्तव्यतामाह मार्कण्डेयपुराणे—

सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः । सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति ॥
न मेऽस्ति वित्तं न धनं न चान्यच्छ्राद्धोपयोगि स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य ॥

इत्येवं पितृभिर्गीतं भावाभावप्रयोजकम् । यः करोति कृतं तेन श्राद्धं भवति पार्थिव ! ॥

ब्राह्मपुराणे—पितृणाम्प्रथमन्दद्यान्मातृणान्तदनन्तरम्।
ततो मातामहादीनामन्वष्टक इति क्रमः॥

तथाच प्रथमं पित्रादित्रयाणां ततो मात्रादितिसृणाम्, ततो मातामहादित्रयाणामेवं नवपुरुषश्राद्धमन्वष्टकायाम्भवतीति भावः।

अथ गजच्छाया—कृष्णपक्षे त्रयोदश्यां मघायुक्तायां हस्तनक्षत्रगते सूर्ये गजच्छाया भवति। तथाहि वायुपुराणे—

हस्ते सूर्यस्थिते या तु मघायुक्ता त्रयोदशी।
तिथिर्वैवस्वती नाम सा छाया कुञ्जरस्य तु॥

अन्यच्च— कृष्णपक्षे त्रयोदस्यां मघास्विन्दुः करे रविः।
यदा तदा गजच्छाया श्राद्धं पुण्यमवाप्यते।

अत्र वारनियमो नास्ति प्रापकाभावात्, दिवस एवैतादृशयोगे गजच्छाया, न तु रात्रौ। तथाहि महाभारते—

'दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन।' इति।

अत्र मधुघृतयुतपायसेन श्राद्धम्। तथाहि—

सोऽस्माकञ्च कुले जायाद्यो नो दद्यात्त्रयोदशीम्।
पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च॥

पितृणामुक्तिरियम्। ब्रह्मपुराणे—

अश्वयुज्यां तु कृष्णायां त्रयोदश्यां मघासु च।
प्रावृड्तौ यमः प्रेतान् पितॄंश्चापि यमालयात्॥
विसर्ज्जयति मानुष्ये कृत्वा शून्यं स्वकम्पुरम्।
क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतन्तु स्वयं कृतम्।
पायसं पुत्रपौत्रेभ्यः कांक्षन्तो मधुसंयुतम्।
तस्मात्तत्र विधानेन तर्प्पयेत्पायसेन च॥
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा।
ग्रासमात्रं परगृहाद्दृयक्तं यः प्राप्नुयान्नरः।
भिक्षामात्रेण यः प्राणान् सन्धारयति वा स्वयम्।
यो वा संवर्द्धयेद्देहं प्रत्यहञ्चात्मविक्रयात्।
श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः स्वसञ्चितैः॥
नास्मात्परतरः कालः श्राद्धेष्वन्यत्र विद्यते।
यत्र साक्षाद्धि पितरो गृह्णन्त्यमृतमक्षयम्।

ज्येष्ठपुत्रवता पिण्डरहितमेव श्राद्धमत्र कर्त्तव्यम्। मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यतीत्यनिष्टश्रवणात्। ज्येष्ठपदमत्र सर्वज्येष्ठपरमिति रस-

---

इत्येवं पितृयज्ञस्य यदा कर्तुं न शक्नुयात्। स तदा वाचयेद्विप्रान् शाकल्यात्सिद्धिरस्त्विति॥
सति विभवे एवं कृते वंशधननाशोऽपरश्च दुर्गतिरिति।

माला। अत्र मघाऽधिकरणकश्राद्धमात्रेण पिण्डदाननिषेधः। सपिण्डनदिने मघासत्वे सपिण्डनपर्य्युदासापत्तेः, किन्तु मघानिमित्तके। तथा च मघापुरस्कारेण पार्वणं ज्येष्ठपुत्रिणा पिण्डरहितं कर्त्तव्यमिति शास्त्रार्थः, इति कृत्यमहार्णवः। ब्रह्मपुराणे—

सूतके मृतके चैव ग्रस्तयोश्चन्द्रसूर्ययोः।
छायायां कुञ्जरस्याथ भुक्त्वा तु नरकं व्रजेत्॥
प्रमादाद्ब्राह्मणो भुक्त्वा चरेच्चान्द्रायणं व्रतम्।

एतेन ब्राह्मणस्य तत्र भोजने चान्द्रायणम्, क्षत्रियादीनां पादहीनं तदेव।

विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम्।

इति बृहद्विष्णुवचनात्। विशेषतो ब्राह्मणस्यैवोपादानाद्ब्राह्मणस्यैव-प्रायश्चित्तमिति केचित्। चान्द्रायणप्रकारो मत्कृतप्रायश्चित्तव्यवस्थायामवलोकनीयः (१)।

अथ श्राद्धकालः—

शुक्लपक्षस्य पार्वणम्पूर्वाह्णे कृष्णपक्षस्य चापराह्णे, तथा च मार्कण्डेयः—

शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्य्याद्विचक्षणः।
कृष्णपक्षेऽपराह्णे च रौहिणं न तु लङ्घयेत्॥

इति तिथितत्त्वचिन्तामणौ। अक्षयतृतीयाप्रकरणे रौहिणमित्येकोद्दिष्टपरमिति श्राद्धरत्ने लक्ष्मीपतिः॥

अथ श्राद्धकालमाह—

पूर्वाह्णे मातृकं श्राद्धं पराह्णे तु पैतृकम्।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥

पूर्वाह्णे इति सार्द्धप्रहरं यावत्। तच्च गोपूजाप्रकरणे वक्ष्यते। मातृकमन्वष्टका पैतृकम्पार्वणम्, एकोद्दिष्टमाद्यश्राद्धादीति श्राद्धरत्ने लक्ष्मीपतिः। मध्याह्ने कुतुपे। कुतुपकालमाह—

द्वौ यामौ घटिकान्यूनौ द्वौ यामौ घटिकाऽधिकौ।
स कालः कुतुपो ज्ञेयः पितॄणां दत्तमक्षयम्॥

विशेषमाह रत्नमालायाम्—

(२)'दिनस्य यः पञ्चदशो विभागो रात्रेस्तथा तद्धि मुहूर्तमानम्'। इति

---

(१) चान्द्रायणव्रतविधानं परिशिष्टप्रकरणे द्रष्टव्यम्।

(२) म० म० नरहरिकृतद्वैतनिर्णये—"मुहूर्त्तमत्राह्नः पञ्चदशो भागस्तेन पञ्चदशधाविभक्तस्याह्न अष्टमो मुहूर्त्तस्त्रिंशद्दण्डात्मकदिने चतुर्दशदण्डानन्तरं दण्डद्वयात्मकः कालः कुतुपस्तत्रैकोद्दिष्टारम्भोऽनन्तफलद इत्यर्थः"। तथा चोक्तं ब्रह्माण्डपुराणे—

समाहनि तथा रात्रौ मुहूर्त्ता वै द्विनाडिकाः। ह्रासवृद्धी त्वहर्भागैर्दिवसानां यथाक्रमात्॥
सन्ध्या मुहूर्त्तमात्रा तु ह्रासवृद्धिस्तु सा स्मृता॥ अ० २१ श्लो० ११७

एभिः प्रमाणैरिष्टदिनमानस्य पञ्चदशोंऽशो मुहूर्त्तः, स च त्रिंशदधिके दिनमाने दण्डद्वया-

तथा च दिनमानस्य पञ्चदशमो विभागो दिनमुहूर्त एवं रात्रावपीत्यर्थः । तत्राष्टमो मुहूर्त्तः कुतुपः । नवमो रौहिणः । तथाहि—

अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा ।
तत्राष्टमो मुहूर्त्तो यः सः कालः कुतुपः स्मृतः ॥

प्रातःकालादिमाह—

प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव हि ।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततः परम् ॥
सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत् ।

ततः परमिति मुहूर्त्तत्रयमिति शेषः । उभयदिने कुतुपस्य लाभे, अथवा पूर्वदिने रौहिणस्योत्तरदिने कुतुपस्तदोभयत्र पूर्वदिन एवैकोद्दिष्टं, विहितत्वाविशेषात् कपालाधिकरणन्यायात् । यदि च कुतुपमुहूर्त्ते एकस्मिन्नपि दिने क्षयतिथिर्न लभ्यते तदा रौहिणे श्राद्धं रौहिणमुल्लङ्घ्य न कर्तव्यम् । "रौहिणन्तु न लङ्घयेत्" इति वचनादिति ॥

अथ हस्ताऽर्के खञ्जनदर्शनम् । तत्र दर्शनमन्त्रौ—

नीलकण्ठ ! शुभग्रीव ! सर्वकामफलप्रद ! ।
पृथिव्यामवतीर्णोऽसि खञ्जरीट ! नमोऽस्तु ते ॥
त्वं योगयुक्तो मुनिपुत्रकस्त्वमदृश्यतामेषि शिखोद्गमेन ।
संदृश्यसे प्रावृषि निर्गतायां त्वञ्जनाश्चर्य्य ? नमो नमस्ते ॥

दर्शनफलमाह तिथितत्त्वे—

अब्जेषु गोषु गजबाजिमहोरगेषु राज्यप्रदः कुशलदः शुचिशाद्वलेषु ।
भस्मास्थिकेशतुषलोमनखेषु दृष्टो दुःखं ददाति बहुशः खलु खञ्जरीटः ॥

---

धिकः । त्रिंशदल्पे तु दण्डद्वयाल्पो न तन्मानमेकरूपं दिनस्य न्यूनाधिकत्वात् । केवलं सायनविषुवदिने दिनरात्र्योः समत्वाद्घटिकाद्वयपरिमितो भवत्यन्यत्र नेति **श्राद्धयात्रादौ** एवमेव कर्त्तव्यमिति ।

यदि पूर्वदिने नवम ( रौहिण ) मुहूर्त्तानन्तरं क्षयतिथिः, परदिने कुतुप (अष्टम) मुहूर्त्तात्प्रागेव विरमति, तदोभयदिनेऽपि कुतुपरौहिणमुहूर्त्तयोरपतनात्परदिने सङ्गमेऽपि कर्त्तव्यम् । 'रौहिणं न त लङ्घये'दित्यनेन रौहिणान्तावध्येव मुख्यश्राद्धसमयकथनात्, तथा मुख्यस्य कुतुपस्यालाभे तत्पूर्वकाले गौणेऽपि कर्त्तव्यमेवेति **सकलस्मृतिसम्मतिः** ॥ तथोक्तं श्राद्धविवेके—

ऊर्ध्वं मुहूर्त्तात्कुतुपाद्यन्मुहूर्त्तचतुष्टयम् । मुहूर्त्तपञ्चकं चापि स्वधावाचनमिष्यते ॥

मुहूर्त्तपञ्चकं कुतुपात्पूर्वं कुतुपात्परं मुहूर्तचतुष्टयं कुतुपश्चेत्येवं दश मुहूर्त्ताः श्राद्धकालः । उभयदिने कर्मयोग्यकाललाभे पूर्वदिन एव कार्यन्तथोक्तं **स्मृतिसारे**—

दर्शञ्च पौर्णमासञ्च पितुः सांवत्सरं दिनम् । पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥

अथ **निर्णयसिन्धूद्धृतदक्षवचनम्**—

मुण्डनं पिण्डदानं च प्रेतकर्म च संशयः । न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव च ॥

श्राद्धे कृष्णतिला एव प्रशस्ता इत्युक्तं **मात्स्ये**—

विष्णोर्देहसमुद्भूताः कुशाः कृष्णास्तिलास्तथा । श्राद्धस्य रक्षणायालमेतत्प्राहुर्दिवौकसः ॥

वित्तं ब्रह्मणि कार्य्यसिद्धिरतुला शक्रे हुताशे भयं
याम्यामग्निभयं सुरारिकलहो लाभस्समुद्रालये ।
वायव्यां वरमन्नवस्त्रविभवं दिव्याङ्गना चोत्तरे
ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने ॥

ब्रह्मणि आकाशे 'खम्ब्रह्म' इति श्रुतेः, शक्रे पूर्वदिशि, दर्शने इति शेषः, हुताशेऽग्निकोणे, याम्यां दक्षिणे, सुरारिर्नैर्ऋत्यकोणः, समुद्रालये पश्चिमे (१) ॥

---

( १ ) अथ खञ्जनप्रथमदर्शने **बृहत्संहितोक्तविशेषविचारः**—

खञ्जनको नामाऽयं यो विहगस्तस्य दर्शने प्रथमे ।
प्रोक्तानि यानि मुनिभिः फलानि तानि प्रवक्ष्यामि ॥ १ ॥

तत्र खञ्जनस्य **चत्वारो** भेदाः—भद्रसम्पूर्णरिक्तगोपीतसंज्ञकाः । तल्लक्षणम्—यः स्थूल उन्नतकण्ठः कृष्णग्रीवः स भद्रसंज्ञः कल्याणं करोति । यस्य गलान्मूर्द्धपर्यन्तं कृष्णवर्णः स सम्पूर्णसंज्ञो दृष्टः सँल्लोकस्याशां पूरयति । यस्य च गले कृष्णः कृष्णो बिन्दुः, करटान्तौ सितौ स रिक्तसंज्ञो रिक्तकृदसावशुभः । यः पीतवर्णः स गोपीसंज्ञको दृष्टः सन्क्लेशकरः ।

अथ कुत्र दृष्टः श्रियं दिशति—मधुर–सुरभि–फल–कुसुम–तरु–जलाशय–करि–तुरग–भुजगानां शिरसि, देवप्रसादोद्यान–हर्म्येषु गो–गोष्ठ–सत्सङ्गस्थल–यज्ञोत्सवभूपविप्रसमीपे गजाश्वशालाच्छत्रध्वजचामरोपरि हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तभूमिषु दधिपात्रधान्यराशिषु दृष्टो लक्ष्मीं ददाति

अथ स्थलभेदेन फलभेदाः—पङ्के स्वाद्वन्नप्राप्तिः । गोमये दुग्धदधिलाभः । शाद्वले वस्त्राप्तिः । शकटोपरि दृष्टो देशभ्रंशकरः । गृहपटले धननाशः । चर्मतन्तौ बन्धनम् । अपवित्रस्थले रोगः । अजमेषपृष्ठे प्रियजनसङ्गः । महिषोष्ट्रखरोपरि, अस्थिश्मशानगृहकोणशर्कराट्टप्राकारभस्मकेशेषु दृष्टो मरणरोगभयदो भवति ।

'पक्षौ धुन्वन्नशुभः पिबन् वारि निम्नगानिकटे ।
सूर्योदये प्रशस्तो नेष्टफलः खञ्जनोऽस्तमये' ॥

यत्र स मैथुनं करोति, तत्र भूमितले निधिः । यत्र वमति, तत्र काचोस्ति । यत्र मलत्यागं करोति, तत्राङ्गारम् । मृतखञ्जनदर्शने मरणम् । विकले दृष्टेऽङ्गवैकल्यम् । छिन्नशरीरे दृष्टेऽङ्गच्छेदः । रोगिते रोगः । ालयं प्रविशन् धनकृत् । वियत्युड्डीयमानेऽवलोकिते बन्धुसमागमो भवेत् । आदौ यस्मिन्दिने तद्दर्शनं जातं तत्फलं वर्षपर्यन्तम् । प्रतिदिनं यद्दर्शनफलं तत्तद्दिनशेषसमय एव भवतीति **कश्यपेनोक्तम्** ।

"प्रथमे दर्शने पाकमावर्षात् प्रवदेद्बुधः । प्रतिदैवसिके वाच्यं दर्शनेऽस्तमये फलम्" ॥

अथ **दुष्टदिक्स्थानदृष्टखञ्जनस्य शान्तिः**—

'अशुभमपि विलोक्य खञ्जनं द्विजगुरुसाधुसुरार्चने रतः ।
न नृपतिरशुभं समाप्नुयान्न यदि दिनानि च सप्त मांसभुक् ॥
नृपतिरपि शुभं शुभप्रदेशे खगमवलोक्य मही॰ले विदध्यात् ।
सुरभिकुसुमधूपयुक्तमर्घं शुभमभिनन्दति चैवमेति वृद्धिम् ॥'

तथाचानिष्टखञ्जनदर्शने कर्त्तव्यतोक्ता **संख्यापरिमाणे**—

'मांसं न भुञ्जीव शयीत भूमौ स्त्रियं न सेवेत दिनानि सप्त ।
स्नायाज्जपेत्संजुहुयाच्च वह्नौ पैष्टं पुमान् खञ्जनमर्चयेच्च' ॥ इति ।

अथ आश्विनशुक्लप्रतिपदि कलशस्थापनम्। तच्च पूर्वाह्णे, उभयदिने पूर्वाह्णे प्रतिपल्लाभे द्वितीयायुक्तायामेव तत्कार्यम्। नत्वमावास्यायुक्तायां प्रतिपदि, तथाहि देवीपुराणे—

यो मां पूजयते भक्त्या द्वितीयायां गुणान्विताम्।
प्रतिपच्छारदीम्पूजां सोऽश्नुते सुखमव्ययम्॥
यदि कुर्यादमायुक्तप्रतिपत्स्थापनं मम।
तस्मै शापायुतं दत्वा तस्य शेषं करोम्यहम्॥
आग्रहात्कुरुते यस्तु कलशस्थापनं मम।
तस्य सम्पद्विनाशः स्याज्ज्येष्ठपुत्रो विनश्यति॥ इति।

द्वितीयायां द्वितीयायुतायाम्। अमा अमावास्या। तिथितत्त्वचिन्तामणौ—

अमायुक्ता न कर्त्तव्या प्रतिपच्चण्डिकार्चने।
मुहूर्त्तमात्रा कर्त्तव्या द्वितीयायां गुणान्विता॥ इति।

द्वितीयायां द्वितीयायुक्तायां, मुहूर्त्तमात्रा मुहूर्त्तान्यूना, तत्रैव परदिने प्रतिपदोऽत्यन्तासत्त्वे दर्शयुक्ता पूर्वैव ग्राह्या इति ठक्कुराः। अत्यन्तासत्त्वं मुहूर्त्तोनत्वम्, मुहूर्त्तपर्यन्तमपि उत्तरदिने प्रतिपल्लाभे उत्तरदिने एव कार्यम्। पूजा तु तत्र सङ्क्षेपतोऽपि कार्य्या।

'सम्यक्कल्पोदिता पूजा यदि कर्त्तुं न शक्यते'।

इत्यादि 'सङ्क्षेपपूजा कथिते'त्यन्तकालिकापुराणात्। तिथिमले तु न कार्यम्।

षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणेऽपरे।
अकर्मण्यं तिथिमलं विद्यादेकादशीं विना॥

इति वचनात्। अपरे परदिने, तथा च पूर्वदिने षष्टिदण्डात्मिका भूत्वा परदिने सैव तिथिः किञ्चिद्दण्डात्मिका सैव द्वितीयदिने तिथिमलत्वात्त्याज्येति भावः। द्वितीयायोगनिषेधकानि यानि यानि वचनानि पठन्ति तानि तानि मुहूर्त्तन्यूनप्रतिपद्विषयाणि तिथिमलप्रतिपद्विषयाणि च बोध्यानि, मुहूर्त्तन्तु दिनमानस्य पञ्चदशो भाग इत्युक्तम्प्राक्॥

अथ चण्डीपाठफलमाह वाराहीतन्त्रे—

ईश्वर उवाच-चण्डीपाठफलं देवि! शृणुष्व गदतो मम।
ग्रहोपशान्त्यै कर्तव्यं पञ्चावृत्तं वरानने!॥
महाभये समुत्पन्ने सप्तावृत्तमुदीरयेत्।
अर्कावृत्तेः काम्यसिद्धिर्वैरिहानिश्च जायते॥
मन्वावृत्त्या रिपुर्वश्यस्तथा स्त्री वश्यतामियात्।
सौख्यं पञ्चदशावृत्ताच्छ्रियमाप्नोति मानवः॥
कलावृत्तात्पुत्रपौत्रधनधान्यादिकं विदुः।
राज्ञां भीतिविमोक्षाय वैरस्योच्चाटनाय च॥
कुर्य्यात्सप्तदशावृत्तं तथाऽष्टादशकं प्रिये!।

महात्रणविमोक्षाय विंशावृत्तं पटेन्नरः॥
पञ्चविंशावर्त्तनाच्च भवेद् बन्धविमोक्षणम्।
सङ्कटे समनुप्राप्ते दुश्चिकित्सामये तथा॥
जातिध्वंसे कुलच्छेदे आयुषो नाश आगते।
वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये॥
तथैव त्रिविधोत्पाते तथा चैवातिपातके।
कुर्याद्यत्नाच्छ(१)तावृत्तं ततः सम्पद्यते शुभम्॥

---

(१) अथ शतचण्डीविधानम्—

तत्र दशसंख्यका अर्थज्ञविप्रा निमन्त्रयितव्याः। शिवालयसमीपे वा देवीमन्दिरनिकटे मण्डपं रचयित्वा तं पल्लवकदलीस्तंभपताकातोरणादिभिर्विभूष्य तथा प्रारम्भः कर्तव्यो यथा पक्षान्ते समाप्तिर्वाऽष्टम्यां नवम्यां भवेत्। तत्रादौ प्रत्येकद्वारेषु तदङ्ग-देवतापूजनं विधाय वस्त्रालङ्करणादिभिर्दशब्राह्मणान् वृणुयात्प्रथमदिने एकैकामावृत्तिम्। द्वितीयदिने सर्वे द्वे द्वे आवृत्ती, तृतीयदिने तिस्रस्तिस्रः। चतुर्थदिने चतस्र एवं दशभिर्विप्रैः शतावृत्तिपाठो भवति। तत्रायं **विशेष,ः** पाठादौ पाठान्ते च सर्वैः शतं शतं **नवार्णमन्त्रजपः** कार्यः। एतद्भिन्नस्तन्मन्त्रस्यायुतसंख्यकजपोऽपि प्रतिदिनं कर्त्तव्य इत्युक्तं **मन्त्रमहोदधौ—**

शङ्करस्य भवान्या वा प्रासादनिकटे शुभम्। मण्डपं द्वारवेद्याढ्यं कुर्यात्सध्वजतोरणम्॥
तत्र कुण्डं प्रकुर्वीत प्रतीच्यां मध्यतोऽपि वा। स्नात्वा नित्यक्रियां कृत्वा वृणुयाद्दश वाडवान्॥
जितेन्द्रियान् सदाचारान् कुलीनान् सत्यवादिनः। व्युत्पन्नाँश्चण्डिकापाठरतान् लज्जादयावतः॥
मधुपर्कविधानेन स्वर्णवस्त्रादिदानतः। जपार्थमासनं मालां दद्यात्तेभ्योऽपि भोजनम्॥
ते हविष्यान्नमश्नन्तो मन्त्रार्थगतमानसाः। भूमौ शयानाः प्रत्येकं जपेयुश्चण्डिकास्तवम्॥
मार्कण्डेयपुराणोक्तं दशकृत्वः सचेतसः। नवार्णं चण्डिकामन्त्रं जपेयुश्चायुतं पृथक्॥

अत्र वाडवा ब्राह्मणाः। पृथगिति सम्पुटीकरणादिति शेषः। अष्टमीनवमीचतुर्दशीपौर्णमासीषु यथा शतावृत्तिसमाप्तिर्भवति तथाऽऽरम्भः कर्त्तव्य इति **साम्प्रदायिकाः।** अपि चात्राऽन्यकर्त्तव्यमाह-

यजमानः पूजयेच्च कन्यानां नवकं शुभम्। द्विवर्षाद्यादशाब्दान्ताः कुमारीः परिपूजयेत्॥ इति।

अथ साधारणतया **पाठविधिः—**

न मानसं पठेत्स्तोत्रं वाचिकं तु प्रशस्यते। पुस्तके वाचनं शस्तं सहस्रादधिकं यदि॥
ततो न्यूनस्य तु भवेद्वाचनं पुस्तकं विना। सकामैः सम्पुटो जाप्यो निष्कामैः सम्पुटं विना॥
चरितं मध्यमं चैव जपेद्वा चण्डिकाद्वयम्। एकेन वा मध्यमेन नैकेनेतरयोरिह॥
चरितार्धं न तु जपेज्जपेच्छिद्रमवाप्नुयात्। यावन्न पूर्यतेऽध्यायस्तावन्न विरमेत्सुधीः॥
यदि प्रमादादध्याये विरामो भवति प्रिये?। पुनरध्यायमारभ्य पठेत्सर्वंमुदारधीः॥
अनुक्रमात्पठेदेवं शिरः कम्पादिकं त्यजेत्। पठ्यमानाध्यायमध्ये विरामो यदि वा भवेत्॥
पुनरध्याय. ारभ्य पठेत्सर्वमुदारधीः। आधारे स्थापयित्वा तु पुस्तकं वाचयेत्ततः॥
हस्ते संस्थापनाद्देवि! हन्त्यर्धं हि फलं यतः। इति।

**अत्र नवार्णमन्त्रस्तु—**ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे॥ इति॥

तत्र पाठक्रमस्तूक्तः **शिक्षायाम्—**

गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः। अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः॥
माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः। धैर्यं लयसमर्थश्च षडेते पाठकागुणाः॥ इति॥

श्रियो वृद्धिश्शतावृत्ताद्राज्यवृद्धिस्तथा प्रिये ! ।
मनसा चिन्तितं देवि ! सिद्ध्येदष्टोत्तराच्छतात् ॥
शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते ! ।
सहस्रावर्त्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा ॥
भुक्त्वा मनोरथान् सर्वान्नरो मोक्षमवाप्नुयात् ॥

अर्कावृत्तिर्द्वादशावृत्तिः । मनुश्चतुर्दश । कालः षट् ।

यथाऽश्वमेधः क्रतुराड् देवानां च यथा हरिः ।
स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः ॥
अथवा बहूनोक्तेन किमेतेन वरानने ! ।
चण्ड्याः शतावृत्तिपाठात्सर्वाः सिद्ध्यन्ति सिद्धयः ॥

अत्र पठनश्रवणवत् पाठनश्रावणेऽपि कार्ये प्रयोजयिता अनुमन्ता कर्त्ता चेति सर्वे स्वर्गनरकभोक्तारो यो भूय आरभते तस्मिन्फले विशेष इत्यापस्त-म्बेनाप्रवृत्तप्रवर्त्तकलक्षणप्रयोजकस्यापि फलश्रुतेः, इति तिथितत्त्वे स्मार्ताः । द्विजानां पठनश्रवणयोश्शूद्रस्य श्रवणमात्रेऽधिकारः इत्यपि तत्रैवेति । तिथित-त्त्वचिन्तामणौ प्रतिपदादिनवम्यन्तम्पाठक्रमस्त्वयम् ।

ऋषिच्छन्दोऽन्वितं न्यस्य पठेत्स्तोत्रं विचक्षणः ।
स्तोत्रं न दृश्यते यत्र प्रणवं तत्र विन्यसेत् ॥
सर्वत्र पाठो विज्ञेयस्त्वन्यथा विफलं भवेत् । इति ।

अथ सप्तमीनिर्णयः । (१)उपवासादौ सप्तमी उदयकालीना ग्राह्या, न तु युग्मवाक्यादरात्पूर्वा—

---

पुस्तकविषये तु **तिथितत्त्वचिन्तामणौ—**

स्वयञ्च लिखितं यच्च शूद्रेण लिखितं भवेत् । अब्राह्मणेन लिखितं तच्चापि विफलं भवेत् ॥

तत्परं **देवीपुराणोक्तो वृद्धिपाठक्रमोऽ**प्यस्ति—

यदाऽऽद्ये दिवसे कुर्याच्चण्डिका पूजनादिकम् । द्विगुणं तद्द्वितीयेऽह्नि त्रिगुणं तत्परेऽहनि ।
नवमीतिथिपर्यन्तं वृद्ध्या पूजाजपादिकम् ॥ **कैः पठितव्यं कैर्नेत्यप्याह तत्रैव—**

अध्येतव्यं न चान्येन ब्राह्मणक्षत्रियैर्विना । श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन ॥**इति**॥

नवरात्रे पूजैव प्रधानमुपवासादि तु अङ्गमात्रमिति सूक्ष्मरीत्या विवेकः, इति ति०त० **चिन्तामणौ** ।

सरस्वतीपूजनादौ तु विशेषस्तिथितत्त्वचिन्तामणौ । **रुद्रयामले—**

मूल ऋक्षे सुराधीश ! पूजनीया सरस्वती । पूजयेत्प्रत्यहं देवीं यावद्वैष्णवमृक्षकम् ।
नाध्यापयेन्न च लिखेन्नाध्ययीत कदाचन । पुस्तके स्थापिते देव ! विद्याकामो द्विजोत्तमः ॥

मूलस्य प्रथमे पादे देव्या आवाहनमित्यत्र तिथिनियमो नास्ति यस्यां तिथौ **मूलनक्षत्रं** तस्यां सरस्वतीमावाहयेत् । अत एव—'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्' **इति स्मृता**-वुक्तम् । परन्तु नक्षत्रापेक्षया तिथिरेव प्रशस्ता नक्षत्रयोगः प्रायिकः ।

(१) **अथ षष्ठीतिथिनिर्णयः** । आश्विनशुक्ला षष्ठी बिल्वाभिमन्त्रणे सायन्तनी ग्राह्या । तथोक्तं **भविष्ये—**

षष्ठ्यां बिल्वतरौ बोधं सायं सन्ध्यासु कारयेत् ॥ **तथा च ब्रह्माण्डपुराणे—**

षष्ठीप्रवेशात्पूर्वेद्युः सायाह्ने विन्ध्यवासिनीम् । चण्डीमामन्त्रयेद्विद्वान्नात्र षष्ठी पुरस्क्रिया ।

युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया।
रवेरुदयमिच्छन्ति न तत्र तिथियुग्मता ॥ इति कृत्यतत्त्वोक्तेः।
भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः।
तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः ॥ इति तिथितत्त्वोक्तेश्च।
दुर्गाभक्तितरङ्गिण्यां घटिकातो न्यूना परा न कार्य्या।
'व्रतोपवासनियमे घटिकैका यदा भवेत्'।

इति देवलोक्तेः। घटिकान्यूना मुहूर्त्तन्यूनेत्यर्थः। पूर्वैकवाक्यत्वात्। पत्रिका नवपत्रिकापूजा पूर्वाह्ण एव, न तु मूलानुरोधान्मध्याह्नादाविति कृत्यतत्त्वोक्तेः।

अथ महाष्टमीनिर्णयः। महाष्टमीव्रतेऽष्टमी नवमीयुता ग्राह्या।
'अष्टमी नवमीयुक्ता नवमी चाष्टमीयुता'। इति पाद्मोक्तेः।
शरन्महाष्टमी पूज्या नवमीसंयुता सदा।
सप्तमीसंयुता नित्यं शोकसन्तापकारिणी ॥
जम्भेन सप्तमीविद्धा पूजिता तु महाष्टमी।
इन्द्रेण निहतो जम्भस्तस्माद्दानवपुङ्गवः ॥
इति स्मृतिसंग्रहोक्तेश्च ॥ (१)

---

तथा तिथितत्त्वे—
सायं षष्ठ्यां तु कर्त्तव्यं पार्वत्या अधिवासनम्। षष्ठ्यभावेऽपि कर्त्तव्यं सप्तम्यामपि मानद! ॥

यदोभयदिने सायन्तनव्यापिनी षष्ठी, तदा युग्मादरेण सप्तमीयुक्तायां षष्ठ्यामर्थात्परदिने बिल्वाभिमन्त्रणं कार्यम्। यदि पूर्वदिने सायङ्कालादुपरि षष्ठ्याः प्रवृत्तिः, परदिने सायङ्कालात्पूर्वमेव विरामस्तदा षष्ठ्यभावेऽपीति, तिथितत्त्ववचनाद्युग्मादरेण च परदिने सप्तम्या सहिते सायङ्काले कार्यम्। तत्र सन्ध्यालक्षणम्—'अर्धादस्तमनात्सन्ध्या व्यक्तीभूता सतारका। यावदिति'......स्मृत्यन्तरे। अत्र देवीपुराणे तु—
ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम्। सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम् ॥
पूर्वाषाढयुताष्टम्यां पूजाहोमाद्युपोषणम्। उत्तरेण नवम्यान्तु बलिभिः पूजयेच्छिवाम् ॥
श्रवणेन दशम्यां तु प्रणिपत्य विसर्जयेत्।

अत्र तिथिनक्षत्रयोगेन मुख्यः कालः। तयोरसंयोगे तिथिरेव ग्राह्या, तथोक्तं स्मृत्यन्तरे—
तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनम्। योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्मणि ॥

इति म० म० पं० राजनाथमिश्रकृततिथिनिर्णयात् ॥ यदि दैवात्पूर्वदिने सायं नक्षत्रयोगस्तदा विशेषयोगलाभात्पूर्वदिन एव कर्त्तव्यमिति।

(१) म० म० पं० राजनाथकृततिथिनिर्णये तु—आश्विनशुक्लाऽष्टमी निशापूजायां महानिशाव्यापिनी ग्राह्या। 'कर्मणो यस्येत्या' दिस्मृतेः।

उभयदिने महानिशाव्याप्तौ परा ग्राह्या। नवमीयोगप्राशस्त्यात्। अत्र पूर्वदिन एव महानिशाव्यापिनी नोत्तरत्र तत्र पूर्वदिने सप्तमीयुतैव ग्राह्या। यदाह विश्वरूपनिबन्धे—
महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी। सप्तम्या संयुता कार्या मूलेन न विशेषतः ॥
महाष्टम्यां भगवती भद्रायामपि पूजिता। ददाति चायुरारोग्यं यतो भद्रास्वरूपिणी ॥
कुलं पुत्रं धनं धान्यं राज्यमायुस्तथैव च। प्रथमा चाष्टमी पूज्या यः कांक्षति सदा शुभम् ॥

अथ नवमीनिर्णयः। नवमी तु व्रतादौ पूर्वविद्धा ग्राह्या।

'अष्टी नवमीयुक्ता नवमी चाष्टमीयुता'। इति पाद्मोक्तेः।
'युग्माग्निकृतुभूतानि षण्मुन्योर्वसुरन्ध्रयोः।

इति निगमवचनाच्च। देवीपुराणे—

भूमौ शयीत चामन्त्र्य कुमारीं पूजयेन्मुदा।
वस्त्रालङ्कारदानैश्च सन्तोष्य प्रतिवासरम्॥
बलिं च प्रत्यहं दद्यादोदनं मांससंयुतम्॥ इत्यादि। (१)

अथ विजयादशमी। दशम्यामपराजितापूजा देवीविसर्जनादि उदयगामिन्यां दशम्यामेकादशीयुतायामेव। तथाहि नन्दिकेश्वरे—

प्रातरावाहयेद् देवीं प्रातरेव विसर्ज्जयेत्।
ततः प्रातश्च सम्पूज्य प्रातरेव विसर्जयेत्॥

प्रातरिति मुहूर्त्तान्न्यूनकाल इति शेषः। रत्नकोशे नारदः—

इषस्य दशमीं शुक्लां पूर्वविद्धां न कारयेत्।
श्रवणेनापि संयुक्तां राज्ञां पट्टाभिषेचने॥
सूर्योदये यदा राजन्! दृश्यते दशमी तिथिः।
आश्विने मासि शुक्ले तु विजयां तां विदुर्बुधाः॥

नन्दिकेश्वरे 'भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः-'इत्यादि। तत्रापि यदि सम्यक्पूजाद्ययोग्यमुहूर्त्तन्यूनदशमीप्राप्तावाह कालिकापुराणे-

---

उपवासव्रते तूदयव्यापिन्येव ग्राह्या, यदाह **विष्णुधर्मोत्तरीये**—

अष्टम्यां नवमीयुक्ता नवम्यां चाष्टमीयुता। अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः॥ इति।
'सर्वेषु व्रतकार्येषु अष्टमी परतः शुभा।' **इति स्मृतेश्च।**

**(१) तथा भविष्ये—**

अश्वयुक्शुक्लपक्षे तु अष्टमी मूलसंयुता। सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा॥
नवमी पूर्वाह्णव्यापिनीचेदष्टमी विद्धा त्रिशूलिनीपूजादौ ग्राह्या। प्रभूततरबलिदाने तु **देवीपुराणे-**
अश्वयुक् शुक्लनवमी मुहूर्त्तं वा कला यदि। सा तिथिः सकला ज्ञेया लक्ष्मीविद्याजयार्थिभिः॥

**सौरधर्मे—**

सूर्योदये परा रिक्ता पूर्णा स्यादपरा यदि। बलिदानं प्रकर्त्तव्यं तत्र देशे शुभं भवेत्॥

'बलिदानं दशासु च'इति निषेधो नवम्ययुक्तासु वेदितव्यम्। तथा-'बलिदाने कृतेऽष्टम्यां पुत्रभ्रंशो भवेन्नृपेति' निषेधोऽपि प्रभूततर बलिदाने एव। पूजाऽङ्गबलिदानमष्टम्यां भवत्येवानवकाशत्वात्। **योगिनीतन्त्रे** 'दुर्गागारे वंशिवाद्यं मधुरीं न च वादयेत्' इति॥

द्विवर्षमारभ्य दशवर्षान्तं यावत् कुमारीवयः शुभफलजनकम्। तथाचोक्तम्—

एकवर्षा न कर्तव्या कन्या पूजाविधानतः। अज्ञाता सा तु भोगानां गन्धादीनां तु बालिका॥
कुमारिका च सा प्रोक्ता द्विवर्षा या भवेदिह। त्रिमूर्त्तिनी त्रिवर्षा च कल्याणी चतुरब्दिका॥
रोहिणी पञ्चवर्षा च कन्यका षष्ठवार्षिकी। चण्डिका सप्तवर्षा च अष्टवर्षा च शाम्भवी॥
नववर्षा भवेद्दुर्गा सुभद्रा दशवार्षिकी। प्रतिपदादिनवम्यन्तं क्रमात्ताञ्च प्रपूजयेत्॥
अत ऊर्ध्वं न कर्त्तव्या कन्या ताश्च विगर्हिताः। एभिश्च नामभिः पूजा कर्त्तव्या विधिसंयुतैः॥
इत्यादि-विस्तृतिभीत्या न लिखितम्। द्रष्टव्यं **कृत्यशिरोमणौ** विशेषविषयजिज्ञासुभिः।

सम्यक्कल्पोदिता पूजा यदि कर्तुं न शक्यते ।
उपचारांस्तथा दातुं पञ्चैतान्वितरेत्तदा ॥
गन्धं पुष्पं च धूपञ्च नैवेद्यं दीपमेव च ।
अभावे पुष्पतोयाभ्यां तदभावे तु भक्तितः ॥
संक्षेपपूजा कथिता तथा शास्त्रादिकं पुनः ।

तथा चोदयगामिन्यां मुहूर्त्तन्यूनायामल्पकालव्यापिन्यामप्येकादशी युतायामेव संक्षेपपूजादिभिरपि विसर्ज्जनं कार्य्यमिति भावः ।

दिनमानस्य पञ्चदशो भागो मुहूर्त्तमित्यनुपदमेवाभिहितं प्राक् । मुहूर्त्त-न्यूनदशम्या उत्तरदिने उदयगामिन्या अलाभे तु नवमीयुतायामेवापराजिता पूजा देवीविसर्जनञ्च, तथाहि शिवरहस्ये —

आश्विने शुक्लपक्षे तु दशम्यां पूजयेत्ततः ।
एकादश्यां न कुर्वीत पूजनं चापराजितम् ॥ इति ।

एकादश्यां एकादशी युतायां पूजनमत्र विसर्ज्जनस्याप्युपलक्षकम् ।एतद्वच-नस्योत्तरदिने मुहूर्त्तन्यूनदशमीलाभे उत्तरदिनकर्तव्यतानिषेधकत्वेनैव स्मार्ता-दिभिस्तिथितत्त्वादिग्रन्थे व्याख्यातत्वात्ताहशार्थपर्य्यवसानम् । 'श्रवणेन विसर्ज्जये'दिति श्रवणायोगस्तु रोहिणीयोगवदप्रयोजक इति ठक्कुराः । तेन श्रवणायोगो विसर्ज्जने नावश्यकः । 'श्रवणेन विसर्ज्जयेत्' इति वचनस्य श्रव-णाप्रशंसकत्वं प्रतीमः । अत्र सर्वत्र नक्षत्रादरान् मुख्यस्तदभावे तिथिरेव ग्राह्या युग्मात् ।

'तिथिः शरीरं देवस्य तिथौ नक्षत्रमाश्रितम् ।
तस्मात्तिथिं प्रशंसन्ति नक्षत्रं न तिथिं विना' ॥

इति विद्यापतिठक्कुराः ।

अथ यात्राविजयदशमी । तत्र यात्रां कृत्वा सीमानं लङ्घयेत् । तथाहि व्रतकाण्डे काश्यपः—

श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः ।
उल्लङ्घयेयुः सीमान्तं तद्दिनर्क्षे ततो नराः ॥ ( पूर्णायां दशम्याम् )

अथ शमीग्रहणम् । शमीमर्चयित्वा यात्राकरणम् । तत्र मन्त्रः—

"शमी शमयते पापं शमी लोहितकण्टका ।
धारिण्यर्ज्जुनबाणानां रामस्य प्रियदायिनी ॥
करिष्यमाणा या यात्रा यथाकालं सुखं मया ।
तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ! ॥

शमी वृक्षविशेषः, लोहितकंटकयुक्तः प्रागुक्तवचनलिङ्गात् ।

गृहीत्वा साक्षतां मालां शमीमूलगतो मृदम् ( भृशम् ) ।
गीतवादित्रनिर्घोषैरानयेत्स्वगृहं प्रति ॥

ततो भूषणवस्त्रादि धारयेत्स्वजनैः सह" । इति । (१)

अथ कोजागरा । तिथितत्त्वे--

कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम् ।
सुगन्धैर्निशि संवेशैश्चाक्षैर्जागरणं चरेत् ॥

तथा-निशीथे वरदा लक्ष्मीः को जागर्त्तीति भाषिणी ।
तस्मै वित्तं प्रदास्यामि अक्षैः क्रीडां करोति यः ॥

अत्र निशीथ इत्यभिधानाद्रात्रिकृत्यमिदम् । यद्दिने प्रदोषनिशीथोभयव्यापिनी पूर्णिमा तद्दिने कोजागराकृत्यम् । उभयव्याप्त्यनुरोधात् । यदा तु पूर्वदिने निशीथव्याप्तिः, परेद्युर्न प्रदोषव्याप्तिस्तदा सुतरां पूर्वदिने तत्कृत्यमिति ॥ (२)

## अथ कार्त्तिककृत्यम्

वायुपुराणे—तुलामकरमेषेषु प्रातः स्नानं विधीयते ।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम् ॥(३)

अत्र सौरमासक्रमो बोध्य इति ठक्कुराः । तथाहि—

दुर्लभः कार्त्तिको मासो मथुरायां नृणामिह ।
यत्रार्चितो हरी रूपं भक्तेभ्यः स्वं प्रयच्छति ॥

कार्त्तिकस्नानमन्त्रस्तु--

कार्त्तिकेऽहं करिष्यामि प्रातः स्नानं जनार्दन ! ।

---

(१) तिथितत्त्वचिन्तामणिधृतगोपथब्राह्मणे—

अमङ्गलानां शमनीं दुष्कृतस्य प्रणाशिनीम् । दुःस्वप्ननाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ।

(२) तथोक्तं भविष्ये—

दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः । स्त्रीबालवृद्धमूर्खैश्च भोक्तव्यं पूजितैः सुरैः ।

तथा च प्राणतोषिणीतन्त्रे—

नारिकेलोदकं पीत्वा अक्षैर्जागरणं निशि । तद्विभूतिं प्रयच्छामि को जागर्त्ति महीतले ॥

तथैव चोक्तं तिथितत्त्वचिन्तामणौ ठक्कुरैपि ।

(३) नारदीये—

कार्त्तिके वर्जयेत्तैलं कार्त्तिके वर्जयेन्मधु । कार्त्तिके वर्जयेन्मांसं कार्त्तिके शुक्तसन्धितम् ।

शुक्तं पर्युषितम् । सन्धितं लवणं शाकम् । तथाच—

एकभुक्तेन नक्तेन तथैवायाचितेन च । उपवासेन भैक्ष्येण व्रजते परम्पदम् ॥

तथाऽऽकाशदीपविधिः स्कान्दे—

तुलायां तिलतैलेन सायंकाले समागते । आकाशदीपं यो दद्यान्मासमेकं हरिं प्रति ॥
महतीं श्रियमाप्नोति रूपसौभाग्यसम्पदः । उच्चैः प्रदीपमाकाशे यो दद्यात्कार्त्तिके नरः ।
सर्वं कुलं समुद्धृत्य विष्णुलोकमवाप्नुयात् ॥ इति ।

अस्योद्यापनन्तु वृश्चिकसंक्रान्तौ शुद्धसमये सति कार्यम् । एकादशीव्रतोद्यापनन्त्वेकादश्यां शुद्धे सतीति विशेषम् । तथाच-धात्रीवृक्षच्छायायां ब्राह्मणभोजने फलमुक्तं कार्तिकमाहात्म्ये-धात्रीच्छायां समाश्रित्य भुंक्ते योऽन्नं हि मानवः । ब्राह्मणान् भोजयित्वा तु वार्षिकं किल्बिषं हरेत् ॥

प्रीत्यर्थं तव देवेश दामोदर ! मया सह ॥

**मया लक्ष्म्या ।** पद्मपुराणे--

धात्रीछायासु यः कुर्यात्पिण्डदानम्महामुने ! ।
मुक्तिम्प्रयान्ति पितरः प्रसादान्माधवस्य च ॥
धात्रीफलविलिप्ताङ्गो धात्रीफलविभूषितः ।
धात्रीफलकृताहारो नरो नारायणो भवेत् ॥
धात्रीच्छायां समाश्रित्य योऽर्चयेच्चक्रपाणिकम् ।
पुष्पे पुष्पेऽश्वमेधस्य फलं प्राप्नोति मानवः ॥

नारदीये--एकान्तरोपवासी वा त्रिरात्रोपोषितोऽपिवा ।
षड्वा द्वादश पक्षं वा मासं वा वरवर्णिनि ! ॥
एकभुक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन भैक्ष्येण व्रजते परमं पदम् ॥

**अथ हविष्यविचारः(१) ।** हविष्याण्याह भविष्ये—

हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ।
कलायं कङ्गुनीवारा वास्तूकं हिलमोचिका ॥
षष्टिका कालशाकं च मूलकं केमुकेतरत् ।

---

**( १ ) तथाऽगस्त्यसंहितायाम्—**

नारिकेलफलं चैव कदलीं लवलीं तथा । आम्रमामलकीं चैव पनसं च हरीतकीम् ॥
व्रतान्तरप्रशस्तं च हविष्यं मन्यते बुधः ॥

**निर्णयनिबन्धे तु**—"यत्नपक्वमपि ग्राह्यं कदलीफलमुत्तमम्" ।

**तथा चाह कात्यायनः--**

हविष्येषु यवा मुख्यास्तदनुव्रीहयो मताः । माषकोद्रवगौरादीन् सर्वाभावे विवर्जयेत् ॥
यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् । यवानामिव गोधूमा व्रीहीणामिव शालयः ॥
अलाबूं वर्त्तुलाकारं वार्त्ताकीं कुन्दसन्निभाम् । अन्नपाचितवार्त्ताकीं खादन् गोमांसभक्षणम्
कुन्दसन्निभां श्वेतामित्यर्थः ।
कुसुम्भं नालिकाशाकं वृन्ताकं पूतिकां तथा । भक्षयन् पतितः स स्यादपि वेदान्तगो द्विजः ॥

**कृत्यशिरोमणौ--**

यः करोति नरो नित्यं कार्त्तिके पत्रभोजनम् । न दुर्गतिमवाप्नोति यावदिन्द्राश्चतुर्दश ॥
भोजनं पद्मपत्रेषु महापातकनाशनम् । कार्त्तिके मुक्तिदं प्रोक्तं ब्रह्मपत्रेषु भोजनम् ॥
**ब्रह्मपत्रं** पलाशपत्रम् । **देवीपुराणे**--'कार्त्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसंगमे' ।

**महाभारते**--मांसवर्ज्यत्वमुक्तं यथा—

मासि मास्यश्वमेधेन यो यजेत्तु शतं समाः । न खादति च यो मांसं सममेतद्युधिष्ठिर ! ॥
यस्तु वर्षशतं पूर्णं तपस्तप्येत्सुदारुणम् । यश्च वै वर्जयेन्मांसं समौ तौ न च संशयः॥ **इत्यादि** ।
तथा च—कार्त्तिके सकलं मासं नित्यस्नायी जितेन्द्रियः ।
जपन् हविष्यभुक् शान्तः सर्वपापैः प्रमुच्यते ॥ **इत्यादि** ॥

कार्त्तिके तु राजमाष-पटोल-कदम्ब-शूरण-वृन्ताक-मूलक-श्वेतशिम्बि-मांस-मत्स्य-कोद्रव-नालिशाक-तुम्बीफल-कुसुम्भ-पूतिकाः वर्ज्याः ।

कन्दं सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ।
पिप्पली जीरकं चैव नागरं कङ्गु तिन्तिली ॥
कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥

हैमन्तिकं मार्गपौषोत्पन्नं धान्यं तस्यैव विशेषणं सितास्विन्नमिति सितं श्वेतम्, स्विन्नम् उसिना इति प्रसिद्धम्, तद्भिन्नमस्विन्नम्। कङ्गुः काउनि इति प्रसिद्धा। नीवार ओइरी इति प्रसिद्धा। षष्टिका शाठी इति प्रसिद्धा। मूलकमित्यस्य विशेषणं 'केम्बुकेतरत्' इति केम्बुकम् केउआ इति प्रसिद्धम्, तद्भिन्नम्। सैन्धवसामुद्रे इति लवणे इति शेषः। अगुडमिति ऐक्षवमित्यस्य विशेषणम्, तेन इक्षुसम्बन्धिषु गुडभिन्नं सिताशर्करादिकं सर्वमेव हविष्यमित्यर्थः।

अथ आमिषविचारः। आमिषाण्याह पाद्मे—

प्राण्यङ्गचूर्णं चर्माम्बु जम्बीरं बीजपूरकम् ।
अयज्ञशिष्टं माषादि यद्विष्णोरनिवेदितम् ॥
दग्धमन्नं मसूरं च मांसं चेत्यष्टधाऽऽमिषम् ।
गोछागीमहिषीदुग्धादन्यद्दुग्धं तथाऽऽमिषम् ॥
धान्ये मसूरिका प्रोक्ता अन्नं पर्युषितं तथा ।
द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा ॥
ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम् ।
आत्मार्थं पाचितं चान्नमामिषं तत्स्मृतं बुधैः ॥ इति ।

प्राण्यङ्गचूर्णं, शुक्तिकादिचूर्णम्।

अथामावस्यादिकृत्यम्—

वनस्पतिगते सोमेऽनड्वाहौ यस्तु वाहयेत् ।
नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च च ॥

इति वचनादमावास्यायां वृषवाहने महादोषः। तस्येति पिण्डादिकमिति शेषः। स्मृतिः—

येयं दीपान्विता राजन्! ख्याता पञ्चदशी भुवि ।
तस्यां देयं न चेद्दत्तं पितृणां तु महालये ॥ इति ।

दीपान्विता पञ्चदशी कार्त्तिकामावास्या, पितृणां महालये पितृपक्षे महालये, तथाच–पितृपक्षे येन श्राद्धं न कृतं, तेनात्र श्राद्धं कर्तव्यमिति तात्पर्यम्। अन्यच्च—

कन्याङ्गते सवितरि पितृराजानुशासनात् ।
तावत्प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम् ॥
ततो वृश्चिक आयाते निराशाः पितरो गताः ।
पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम् ॥ इति ।

तथा चामावास्यायामप्यकृते श्राद्धे पितरो निराशाः सन्तः शापं दत्वा यान्तीत्यतोऽपरपक्षे येन पार्वणं न कृतं तेनात्रावश्यमेव कर्तव्यमिति भावः ॥

अथ उल्काभ्रमणम् । स्कान्दे—

ततः प्रदोषसमये दीपान्दद्यान्मनोरमान् ।
ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च ॥ इति ।

ज्यौतिषे—तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः ।
उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ।

एतेन प्रदोषव्यापिन्याममावास्यायामुल्काभ्रमणमिति पर्यवसितम् । उभयदिने प्रदोषव्यापिन्या अमावास्याया लाभेऽलाभे च परदिन एव ।

दण्डैकरजनीयोगे दर्शः स्यात्परेऽहनि ।
तदा विहाय पूर्वेद्युः परेऽह्नि सुखरात्रिका ॥ इति ज्योतिर्वचनात् ।

तथा च—दर्शश्राद्धं भवेद्दर्शेऽपराह्णे प्रतिपद्यपि ।
प्रदीपोल्कादिकं कार्यं तत्प्रदोषे न दुष्यति ॥

इति म. म. शुभङ्करठक्कुरधृततिथिनिर्णये ।

भूताहे ये प्रकुर्वन्ति उल्काग्रहमचेतनाः ।
निराशाः पितरो यान्ति शापं दत्वा सुदारुणम् ॥

इति वचनाच्च । उत्तरदिने प्रदोषे दर्शाभावे, पूर्वदिने प्रदोषदर्शयोगे तु पूर्वदिन एव कर्मकालस्य मुख्यत्वात् । 'तुलासंस्थे सहस्रांशा'विति प्रागुक्तज्योतिर्वचनाच्च । 'भूताहे ये प्रकुर्वन्ती-'त्यादिवचनस्योभयदिने प्रदोषेऽमावास्याया लाभेऽलाभे च पूर्वदिने कर्तव्यतानिषेधकत्वं, तिथितत्त्वे स्मार्तोऽप्येवम् ।

उल्काग्रहणमन्त्रस्तु—

शस्त्राशस्त्रहतानां च भूतानां भूतदर्शयोः ।
उज्ज्वलज्योतिषा देहं निर्दहे व्योमवह्निना ॥

भ्रमणमन्त्रस्तु—

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम् ॥ इति ।

विसर्जनमन्त्रस्तु ब्रह्मपुराणे—

यमलोकं परित्यज्य आगता ये महालये ।
उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते ॥ इति (१)

---

(१) मदनरत्ने भविष्ये—( ति० त० चिन्तामणौ )
एवं गते निशीथे तु जने निद्रान्धलोचने । तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः ॥
निष्कास्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् ।
म० म० पं० राजनाथमिश्रधृतराजमार्त्तण्डे—
दण्डैकं रजनीं प्रदोषसमये दर्शो यदा संस्पृशेत् । कर्त्तव्या सुखरात्रिकात्र विधिना दर्शाद्यभावे तदा ॥

अथ दीपमालिकादानफलमाह—

यः कुर्यात्कार्त्तिके मासे शोभनां दीपमालिकाम् ।
घृतेन च चतुर्द्दश्याममायां च विशेषतः ॥
यावद्दीपप्रसंख्या तु घृतेनापूर्य्य बोधिता ।
तावद्युगसहस्राणि स्वर्गलोके महीयते ॥

अथ गोक्रीडादौ प्रतिपदमावास्यायुतैव ग्राह्या । तथाहि नारदः—

या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप ! ।
पूजनात्त्रीणि वर्द्धन्ते प्रजा गावो महीपतिः ॥

स्मृतिरपि—शिवा च शिवदुर्गा च दुर्भगा च हुताशिनी ।
गोपूजा च वटच्छाया कर्तव्या प्रथमे दिने ॥

देवलोऽपि—प्रतिपद्दर्शसंयोगे गवां वै क्रीडनं भवेत् ।
परविद्धासु करणात्पुत्रदारधनक्षयः ॥ इति ।

स्का एव—प्रतिपद्यग्निकरणं द्वितीयायां गवार्चनम् ।
क्षत्रक्षयं करिष्येतं वित्तनाशं कुलक्षयम् ॥ इति ।

---

पूज्या चाब्जधरा सदैव च तिथिः सैवाहनि प्राप्यते । कार्या भूतविमिश्रिता जगुरिति व्यासादिगर्गादयः॥

**अब्जधरा** लक्ष्मीः ।

अमावस्या यदा रात्रौ दिवाभागे चतुर्द्दशी । पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका ॥

अत्रैव निशीथे श्यामापूजामाह-**कामाख्यातन्त्रे**—

शरत्काले च देवेशि ! दीपयात्रादिने तथा । अमावास्यां समासाद्य मध्यरात्रौ बिचक्षणः ॥
मृन्मयीं पुत्तलीं कृत्वा दीपादिभिरलङ्कृताम् । बलिं नानाविधं दद्याद्वाद्यभाण्डसमन्वितम् ॥
नृत्यं गीतं कौतुकानि यावत्सूर्योदयं चरेत् । प्रातःकाले शुद्धतोये स्थापयेदविनाशिनीम् ॥

अत्र मध्यरात्रिश्रवणान्निशीथव्यापिनी श्यामापूजायां ग्राह्या । तथा च **भविष्येऽपि**—

प्रतिसंवत्सरं कुर्यात्कालिकाया महोत्सवम् । कार्त्तिके तु विशेषेण अमावास्यानिशार्द्धके ॥
तस्यां संपूजयेद्देवीं भोगमोक्षप्रदायिनीम् ।

उभयदिने निशीथव्याप्तौ यत्र प्रदोषे भवेत्तदैव । **तथोक्तं कुलसर्वस्वे**—

प्रदोषव्यापिनी यत्र महानिशि च सा भवेत् । तदैव कालिका पूज्या दक्षिणा मोक्षदायिनी॥

यदोभयदिने तदा चतुर्द्दशीयुता ग्राह्या—

अर्धरात्रे महेशानि ! अमावास्या यदा भवेत् ।
चतुर्द्दशीयुता ग्राह्या चामुण्डापूजने सदा ॥ इत्यागमात् ।

तथा—यत्रोभयदिने भूतयुक्तकुहां महानिशि । इमां यात्रां कारयित्वा चक्रवर्त्ती नृपो भवेत् ॥

शनिभौमदिनानुरोधात्प्रदोषाव्यापिन्यपि निशीथव्यापिनी ग्राह्या ।

चतुर्द्दशी प्रदोषे तु अमावास्या महानिशि । शनिभौमदिने देवि ! निशायां सर्वथा यजेत् ॥

तदतिरिक्तदिने यदि पूर्वदिने प्रदोषव्यापिनी उत्तरदिने प्रदोषनिशीथोभयव्यापिनी तदोत्तरैव ग्राह्या । तथा च कुलसर्वस्वे—

महानिशादिने देवि ! प्रतिपच्च यदा भवेत् । कालीकैवल्ययोगोऽयं तद्दिने कालिकार्चनम् ॥ इति ।

नारदोपि--'भद्रायां गोकुलक्रीडा स देशो वै विनश्यति'।

भद्रायां द्वितीयायुतायाम्। एतच्च द्वितीयदिने चन्द्रदर्शनसम्भावनायाम्। अत एव पुराणसमुच्चयेऽपि।

गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः।
सोमो राजा पशून् हन्ति सुरभीपूजकांस्तथा॥ इति।

प्रतिपदुत्तरं सूर्यास्तमनकालपर्यन्तं षण्मुहूर्त्तान्यूना (१) यदि द्वितीया तदा चन्द्रदर्शनसम्भावना सर्वसम्मता, अत्र यदा प्रतिपदि षण्मुहूर्त्तव्यापिनी द्वितीया तत्र चन्द्रदर्शनसम्भावना (२) गोक्रीडनं न कार्यमिति तिथिनिर्णयः। ठक्कुरैरपि 'या कुहू'रित्यादि पूर्ववचनान्यभिधाय एते विधिप्रतिषेधाः पूर्वदिने प्रतिपदः सायाह्नव्यापित्वे द्वितीयदिने चन्द्रदर्शनसम्भवे च ज्ञेयाः। दिनद्वये सायाह्नव्यापित्वे परैव ग्राह्येत्यभिहितम्। एवं च द्वितीयदिने यदि प्रतिपदुत्तरं सूर्यास्तमनकालपर्यन्तं षण्मुहूर्तन्यूनैव द्वितीया तदा चन्द्रदर्शनसम्भावनाया अभावात् द्वितीयायुतैव ग्राह्या। तत्रैव पुराणसमुच्चयः—

वर्द्धमानतिथौ नन्दा यदा सार्द्धत्रियामिका।
द्वितीया वृद्धगामित्वादुत्तरा तत्र बोध्यते॥ इति।

चन्द्रादर्शने तु द्वितीयायुतैव ग्राह्येति तिथिनिर्णयः।

सायाह्ने होलिकां कुर्यात्पूर्वाह्ने क्रीडनं गवाम्'॥ इति।

पूर्वाह्णः सार्द्धप्रहरं यावत्। तथाहि तिथिचन्द्रिकायां--

पूर्वाह्णः प्रहरं सार्द्धं मध्याह्नः प्रहरं तथा।
तत्तृतीयोऽपराह्णः स्यात्सायाह्नश्च ततः परम्॥ इति।

कुहूः प्रतिपद्युता यत्र गावस्तत्र न पूजयेत्। इत्यादि स्मृतयोऽपि।

---

(१) अधिकेति भावः।

(२) कार्त्तिकस्य सिते पक्षे प्रतिपच्छुभवासरे। हस्तस्वातौ च एतेषु गोपूजा शुभदा सदा॥
शनौ वारे तथाऽङ्गारे सूर्यवारे तथैव च। अन्यदृक्षगते वापि गोपूजां न च कारयेत्॥
यदि मोहात्कृता पूजा प्रायश्चित्तं भवेत्तदा। गवां नाशोऽर्थनाशश्च प्रजानाशो भवेद्ध्रुवम्॥
पापाहे च विशाखायां गोपूजां नैव कारयेत्॥ इति।

अत एव **तिथितत्त्वचिन्तामणौ म० महेशठक्कुरधृत**वचनम्—

प्रतिपत्तु त्रियामा स्यान्मैत्रर्क्षे बुधवासरे। तद्दिने पूर्वयामे तु गोपूजा परमा शुभा॥
स्वातौ तु मध्यमा प्रोक्ता अनुराधा शुभप्रदा। प्रातर्गोवर्द्धनः पूज्यो द्यूतञ्चापि समाचरेत्॥
पूजनीयास्तदा गावस्त्याज्या दोहनवाहने॥

गोमयेन गोवर्द्धनमूर्त्तिं विधाय पीतपुष्पाक्षतादिभिः सम्पूजयेत्। **तन्मन्त्रो यथा—**

गोवर्द्धन ! धराधार ! गोकुलत्राणकारक !। कृष्णबाहुकृतच्छाय ! गवां कोटिप्रदो भव॥

गोपूजामन्त्रस्तु **निर्णयामृते—**

लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता। धृतं वहति यज्ञार्थं सा मे पापं व्यपोहतु॥
अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः। गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्॥

अथ तद्दिने द्यूतक्रीडायां यस्य जयस्तस्य पूर्णं वर्षं यावत्सर्वत्र जय इति **स्मृत्यन्तरे** लिखितम्

द्वितीयदिने द्वितीयायाः षण्मुहूर्त्तान्न्यूनत्वे पूर्वयुक्तायाः कर्तव्यतानिषेधकत्वेन व्याख्येया इति सर्वं सुस्थम्। विशाखायां गोपूजानिषेधमाह राजमार्तण्डे—

विशाखायाममावास्या विशाखा प्रतिपद्युता।
आयुः पुत्रं धनं हन्ति सुरभीपूजकांस्तथा॥

सुरभी गौः।

अथ कार्त्तिकशुक्लद्वितीया यमद्वितीयाख्या, तस्यां कर्तव्यं स्कन्दपुराणे—

कार्त्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर!।
यमो यमुनया पूर्वम्भोजितः स्वगृहेऽर्चितः॥
अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता।
अस्यां निजगृहे विप्र! भोक्तव्यं न ततो नरैः।
स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्।
वस्त्रालङ्करणादीनि ताभ्यो देयानि यत्नतः॥

भगिन्या पठनीयो मन्त्रो यथा—

भ्रातस्तवानुजाताऽहं भुंक्ष्व भक्तमिदं शुभम्।
प्रीतये यमराजस्य यमुनाया विशेषतः॥

ज्येष्ठभगिन्यास्तु–'भ्रातर्ज्येष्ठाऽनुजाताऽहम्' इति शेषः। अन्यत्समानमिति स्मार्त्ताः। तत्र हे भ्रातरनुजाता वा ज्येष्ठाऽहमित्यन्वयः। ब्रह्माण्डपुराणे—

या तु भोजयते नारी भ्रातरं युग्मके तिथौ।
अर्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात्॥
भ्रातुरायुः क्षयो राजन्न भवेत्तत्र कर्हिचित्॥

युग्मके द्वितीयातिथौ। यमद्वितीया प्रतिपद्युता ग्राह्येति निर्णयामृतः। हेमाद्रौ तु द्वितीया मध्याह्नव्यापिनी पूर्वविद्धा चेति विशेषः॥

अथात्र चित्रगुप्तपूजनमाह गौडः—

यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत्।
अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्वयैः॥

इयं पूजा अपराह्णे आह स्कान्दे—

ऊर्ज्जशुक्लद्वितीयायामपराह्णेऽर्चयेद्यमम्।
स्नानं कृत्वा भानुजायां यमलोकं न पश्यति॥

भानुजायां यमुनायाम्। व्रतादौ दिवैवैकभुक्तम्। तथाहि तिथिचन्द्रिकायाम्—

दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्।
एकभुक्तमिति प्रोक्तं मतं स्यात्तद्दिवैव हि॥ (१)

---

(१) अथ कार्त्तिकशुक्लषष्ठीनिर्णयः। तदुक्तं तिथितत्त्वचिन्तामणौ—षष्ठी तु सर्वेषु उपवासादिषु स्कन्दव्रतातिरिक्ता सप्तमी युतैव ग्राह्या 'षणमुन्यो'रिति युग्मवाक्यात्। तथा माधवीये स्कान्दे—

नागविद्धा न कर्त्तव्या षष्ठी चैव कदाचन। सप्तमीसंयुता कार्या षष्ठी सर्वार्थचिन्तकैः॥

## अथ एकादशीनिर्णयः

एकादशी(१) द्वादशीयुतैव ग्राह्या। 'रुद्रेण द्वादशी युक्ते'ति निगमात्। तिथिमलरूपाया अपि द्वादशीयुक्तायाः प्राप्तौ सैव ग्राह्या।

---

तथा च-तिथिचन्द्रिकायां विष्णुधर्मोत्तरे—

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी। अमावास्या तृतीया च समुपोष्याः परान्विताः॥

तथाच-नागविद्धा तु या षष्ठी सप्तम्या च तथाऽष्टमी। दशम्येकादशीविद्धा न ग्राह्या मुनिपुङ्गव

तथाच-नागविद्धां तु ये षष्ठीमुपोष्यन्तीह मानवाः। वृद्धिः श्रेयश्च कल्याणं तेषां नश्यन्ति पूर्वज

सगरेण कृता पूर्वं पञ्चम्या सह भारत। हतं पुत्रसहस्रन्तु तस्माद्विद्धाञ्च कारयेत्॥

तथाच-नाग ५ विद्धा तु या षष्ठी रुद्र ११ विद्धो दिवाकरः १२।

काम १३ विद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः॥

इत्याद्यनेकनिबन्धधृतवचनबलात्षष्ठी सूर्यव्रते सप्तमीयुतैवोपोष्येति सिद्धम्। तत्रोदयकालेऽ ल्पाऽपि षष्ठी भवेत्तदुपरि सप्तमी तदा सैव ग्राह्या। तदुक्तं तिथिचन्द्रिकायाम्—

कला काष्ठा निमेषोऽपि यदि स्यादपरेऽहनि। षष्ठ्याः कथंचिद्विप्रेन्द्र सैवोपोष्या प्रयत्नतः॥

अनेन सायं सप्तम्यामपि प्रथमोऽर्घो विहितः। द्वितीयस्तूत्तरदिने सूर्योदये सप्तम्यां सिद्ध एव अत्र द्वितीयार्घस्य सप्तमीयुक्तसूर्योदये मुख्यतोक्ता। म० म० पं० राजनाथमिश्रकृततिथिनिर्णये "पूर्वदिने सायमर्घादिना पूजने षष्ठी वा सप्तमी ग्राह्येति न नियमः। प्रधानीभूतोत्तरत्रार्घदा नस्य तदङ्गोपवासस्य वाऽङ्गतयैव तदाचरणात्।" इति। अतएव सप्तम्याः क्षयावसरे उक्त

पुराणान्तरे—

षष्ठ्याश्चैका कला यत्र तत्र सन्निहितो रविः। तत्र क्रतुशतं पुण्यमष्टम्यां पारणेन तु॥

षष्ठी च सप्तमी चैव रात्रिशेषे यदाऽष्टमी। त्रिस्पृशा नाम सा प्रोक्ता तथा चैकादशी पुनः

शुद्धैव सप्तमी ज्ञेया उपोष्या फलकांक्षिभिः। अष्टम्यां पारणं कुर्याद्व्रतमेतन्नराधिप!॥

तथाचोक्तं द्वैतनिर्णये—

षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता। पतङ्गोपासनायाथ षष्ठ्यामाहुरुपोषणम्॥

एवं कृत्यशिरोमणौ—

उदयकाले यद्दिने षष्ठी तस्य सायं काले षष्ठ्यामसत्यामपि तत्रैव कार्यं सप्तम्यनुरोधात अथ यदा पञ्चम्या वृद्धिस्तत्परं षष्ठ्या दैवात् क्षयस्तत्रापि यद्दिने षष्ठीक्षयस्तद्दिने एव व्रतम्। तत्र सायं प्रथमोऽर्घः द्वितीयदिने सप्तम्यां द्वितीयोऽर्घः। इति स्पष्टम्।

यत्र तु षष्ठ्या वृद्धिस्तत्र परदिने सप्तमीविद्धायास्तस्या विहितत्वादपि एकादशीतिथिभिन्नति थिमलस्य व्रतादौ वर्जनीयत्वात्षष्टिदण्डात्मकषष्ठ्यां व्रतं सायन्तनोऽर्घश्च तदग्रिमोदयानन्त षष्ठ्यन्ते द्वितीयोऽर्घो देय इति। अत्र कला-काष्ठा-निमेष-इत्यादिवचनं तिथिमलरूपषष्ठीशेषभि परं बोद्धव्यम्। अस्य कथा वर्षकृत्ये द्रष्टव्येति।

अथ कार्त्तिकशुक्लाष्टम्यां गोपूजनमुक्तं शब्दकल्पद्रुमे—

शुक्लाष्टमी कार्त्तिकस्य स्मृता गोपाष्टमी बुधैः। तद्दिने वासुदेवोऽभूद्गोपः पूर्वन्तु वत्सपः॥

तत्र कुर्याद्गवां पूजां गोग्रासं गाः प्रदक्षिणम्। गवानुगमनं कुर्यात्सर्वकामानभीप्सता॥

(१) अथैकादश्यां विशेषो मात्स्ये—

विद्धाऽप्येकादशी कार्या परतो द्वादशी न चेत्।

कौर्मे-मुहूर्त्ता द्वादशी न स्यात् त्रयोदश्यां महामुने। उपोष्या दशमीविद्धा सदैवेकादशी त

नौकाकरिपि-एकादशीं दशाविद्धां व र्जयेत् विवर्जयेत्। क्षयमार्गस्थिते सोमे कुर्वीत दशमीयुता

षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणे परे।
अकर्मण्यन्तिथिमलं विद्यादेकादशीं विना॥ इति वचनात्।

दशमीयुक्ताया ग्रहणे दोषमाह स्मृतिः—

एकादशी दशाविद्धा गान्धार्या समुपोषिता।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत्॥ इति।

एतच्चोभयदिने एकादशीलाभे; यदि तु दशमीमात्रयुक्तैव सा, न द्वादशीयुक्ता, तदा दशमीयुता कर्त्तव्या; तथाहि स्मृतिः—

एकादशी न लभ्येत सकला द्वादशी भवेत्।
उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत्॥ इति।

न लभ्येतेति द्वादशीयुक्तेति शेषः। द्वैतनिर्णयद्वैतपरिशिष्टव्रतपद्धतिपक्षधरीयतिथिचन्द्रिकादिमैथिलग्रन्थेष्वप्येतादृशस्थले दशमीयुक्तायामेव कर्त्तव्यत्वं सिद्धान्तितं, न तु द्वादशीव्रतमिति। त्र्यहस्पर्शमाह स्मृतिः—

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
त्र्यहस्पृशमहोरात्रं तत्र साहस्रिकं फलम्॥ इति।

साहस्रिकं सहस्रगुणम्। हरिशयनादौ फलादिभक्षणनिषेधमाह भगवान्—

"मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने।
फलमूलपयोहारी हृदि शल्यं समार्पति॥

मच्छयने हरिशयने, मदुत्थाने देवोत्थाने पार्श्वपरिवर्त्तने भाद्रशुक्लैकादश्याम्। स्मृतिः—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।
सूतके मृतके चैव अन्यस्मिन्नप्यशौचके॥
सर्वथा न परित्याज्या इच्छता श्रेय आत्मनः। इति।

अशक्तौ त्वाह वायुपुराणे—

फलं मूलं पयस्तोयमुपभोग्यम्भवेच्छुभम्।
नत्वेवं भोजनङ्क्वचिदेकादश्यां प्रकीर्त्तितम्॥

प्रमादादितो व्रताकरणे व्रतभङ्गाभावमाह छागलेयः—

सर्वभूतभयं (१) व्याधिः प्रमादो गुरुशासनम्।
अव्रतघ्नानि कीर्त्यन्ते सकृदेतानि शास्त्रतः॥

प्रमादो विस्मरणम्। सकृदेकवारम्, वारं वारं तद्धेतुभिरप्यकरणे भङ्ग एव सकृदित्युक्तेः।

---

एकादशी दशाविद्धा परतो न च वर्धते। यतिभिर्गृहिभिश्चैव सैवोपोष्या सदा तिथिः॥
ऋष्यशृङ्गः–एकादशीं न लभते सकला द्वादशी भवेत्। उपोष्या दशमी विद्धा यतिभिर्गृहिभिस्तदा॥
(१) राज्ञां युद्धे महामार्यां देशनाशे जनक्षये। नगरग्रामदाहे च सर्वभूतभयं मतम्॥
स्त्रीणां रजोदर्शने तु प्रतिनिधिद्वारा व्रतं कार्यं, स्वयन्तु प्राणत्राणार्थं फलदुग्धादि सेवनीयम्।

स्मृतिः—एकादशीदिने यत्र भार्या ऋतुमती भवेत् ।
पितृश्राद्धं च तत्रैव उपायस्तत्र कथ्यते ॥
एकादशीव्रतं कुर्य्यात्पिण्डाघ्राणं च श्राद्धकृत् ।
अर्द्धरात्रे व्यतीते तु ऋतुन्दद्यान्न दोषभाक् ॥

ब्रह्मपुराणे--

एकादश्यान्तु शुक्लायां कार्त्तिके मासि केशवम् ।
सुप्तं प्रबोधयेद्रात्रौ भक्तिश्रद्धासमन्वितः ॥ इति(१) ।

अथ विष्णूत्थापनमन्त्राः--

ब्रह्मेन्द्ररुद्रैरभिवन्द्यमानो भवानृषिर्वन्दितवन्दनीयः ।
प्राप्ता तवेयङ्किल कौमुदाख्या जागृष्व जागृष्व च लोकनाथ ! ॥
मेघा गता निर्मलपूर्णचन्द्रः शारद्यपुष्पाणि मनोहराणि ।
अहन्ददानीति च पुण्यहेतोर्जागृष्व जागृष्व च लोकनाथ ! ॥
उत्तिष्ठोत्तिष्ठ गोविन्द ! त्यज्य निद्रां जगत्पते ! ।
त्वया चोत्थीयमानेन उत्थितं भुवनत्रयम् ॥

---

(१) उपवासपूर्वदिने निषेधमाह तिथितत्त्वचिन्तामणौ—

कांस्यं मांसं मसूरान्नं चणकं कोद्रवं तथा । शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥

एवं यत्र तत्र परान्नभोजननिषेधो दृश्यते, किन्तु—

गुर्वन्नं मातुलान्नं च श्वशुरान्नं तथैव च । पितुः पुत्रस्य चैवान्नं न परान्नमिति स्मृतिः ॥

इति शब्दकल्पद्रुमोक्तवचनेनैतेषामन्नभोजने न दोषः । व्रताशक्तिदशायां जीवनरक्षणार्थमुपायो वायुपुराणे—नक्तं हविष्यान्नमनोदनं वा घृतं तिलाः क्षीरमथाम्बुपानम् ।
यत्पञ्चगव्यं यदिवाऽथ वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च ॥

नक्तं दिनोपवासपूर्वकरात्रिभोजनरूपम् । भक्तरहितं हविष्यान्नम् । तेन रोटिकाचिपिटान्नभोजने न दोषः । शेषं स्पष्टम् । तथा चैकादशीव्रतं सूतकादिष्वपि न त्याज्यम्, तदुक्तं ति० त० चि० वायुपुराणे—

एकादश्यां न भोक्तव्यं पक्षयोरुभयोरपि । सूतके मृतके चैव अन्यत्किमप्यशौचके ॥

तत्र दुर्दिनयोगेनापि कर्त्तव्यतोक्ता विष्णुधर्मोत्तरे—

भृगुभानुदिनोपेता सूर्यसंक्रान्तिसंयुता । एकादशी सदोपोष्या पुत्रपौत्रप्रवर्द्धिनी ॥

तथा च भृगुभानुवासरे संक्रान्तौ तु पुत्रवतां तत्र ये व्रतनिषेधं कुर्वन्ति ते भ्रान्ता राक्षसा बोध्या इति महेशठक्कुरा आहुः । भविष्यपुराणे त्रयोदश्यां तिथावेकादशीव्रतस्य पारणनिषेधो यथा—

पारणां तु त्रयोदश्यां यः करोति नराधमः । द्वादश द्वादशीर्हन्ति नात्र कार्या विचारणा ॥

इदन्तूदयसमये द्वादशीसत्त्वे पारणोचितवेलालाभेऽपि कार्य्यान्तरवशात्तामतिक्रम्य त्रयोदश्यां पारणे कृते विज्ञेयम् । द्वादश्याः क्षयावसरे तु नियतमेकादशीव्रतोत्तरदिने सूर्योदयात् पूर्वत एव विद्यमानायां त्रयोदश्यां पारणविधानम् । तस्यां स्थितौ न दोषस्त्रयोदश्यां पारणे विशेषवचनसामर्थ्यात् । यथोक्तं वायुपुराणे—

कलाऽप्येकादशी यत्र परतो द्वादशी न चेत् । पुण्यं क्रतुशतं प्रोक्तं त्रयोदश्यां तु पारणे ॥ इति ।

(१)अथ हरिवासरमाह मत्स्यपुराणे—

द्वादशीशुक्लपक्षे तु नभस्ये श्रवणं यदि ।
उपोष्यैकादशीन्तत्र द्वादशीमप्युपोषयेत् ॥

ब्रह्माण्डे—द्वादश्यान्तु दिने भाद्रे हृषीकेशर्क्षसंयुते ।
उपवासद्वयं कुर्याद्विष्णुप्रीणनतत्परः ॥
द्वादश्येकादशी सौम्यः श्रवणं च चतुष्टयम् ।
देवदुन्दुभियोगोऽयं शतमन्युफलप्रदः ॥

नभस्ये भाद्रे, हृषीकेशर्क्षं श्रवणा, सौम्यो बुधः । मन्युर्यज्ञः । वराहपुराणे—

एकादशीमुपोष्यैव द्वादशीमप्युपोषयेत् ।
न चात्र विधिलोपः स्यादुभयोर्देवता हरिः ॥

अत्र तिथिचन्द्रिकायां—'पारणान्तं व्रतं ज्ञेयं समाप्तौ द्विजभोजनम् ।' इति । समाप्तिश्च पारणेन, तदभावे उपवासद्वये क्रियमाणे पूर्वव्रतस्यासमाप्तेर्विधिलोपः प्राप्नोति सोऽप्येकदेवत्वेन न विधिलोप इति पक्षधरमिश्राः पठन्ति ।

---

(१) हरिवासरसम्भवेषु आषाढभाद्रकार्त्तिकमासेषु बुधवासरयुक्तायामपि द्वादश्यां सूर्योदयसमये क्रमेणानुराधाश्रवणारेवतीनक्षत्राणां योगाभावे पूर्वदिनैकादश्या व्रतस्य पारणोचितसमयलाभात् प्राचीनमतेन नहि हरिवासरयोगः सम्भवति । तथाचोक्तं सारसंग्रहे—म० म० उमापत्युपाध्यायेन 'उदयकाले नक्षत्रयोगं हरिवासरपदं पारिभाषिकम् ।' इति ।

तिथितत्त्वचिन्तामणौ म० म० महेशठक्कुरास्तु देवोत्थानैकादशीप्रसङ्गे लिखितवन्तः—कार्त्तिकशुक्लद्वादश्यां रेवतीनक्षत्रयोगरहितायां पारणं कुर्यात् । तदुक्तम्—

"आभाकासितपक्षेषु मैत्रश्रवणरेवती । सङ्गमे नहि भोक्तव्यं द्वादश द्वादशीर्हरेत् ॥

यदि तु रेवतीरहिता द्वादशी न लभ्यते तदा रेवत्याश्चतुर्थपादं वर्जयेदिति" । अनेन हरिवासरयोगे घटितेऽपि पारणविधानमार्त्तजनत्राणकारणमेवोक्तम् । अथैकादशीव्रतपारणं द्वादश्याः प्रथमचरणमतिक्रम्य कर्त्तव्यमित्युक्तं शब्दकल्पद्रुमे—

द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः । तमतिक्रम्य कुर्वीत पारणं हरिभक्तिमान् ॥

तिथितत्त्वचिन्तामणौ—कार्त्तिकशुक्लैकादश्यां भीष्मपञ्चकव्रतारम्भ उक्तो नारदेन—

अतो नरैः प्रयत्नेन कर्त्तव्यं भीष्मपञ्चकम् । कार्त्तिकस्यामले पक्षे स्नात्वा सम्यक् यतव्रतः ॥
एकादश्यान्तु गृह्णीयाद्व्रतं पञ्चदिनात्मकम् ।

भीष्मपञ्चकविधिर्यथा—मौनी दृढव्रतः सन् प्रथमं गोमयेन ततः पञ्चामृतेन पञ्चगव्यैर्विष्णुं संस्नाप्य सम्पूज्य पायसं निवेद्य द्वादशाक्षरमष्टोत्तरशतं जप्त्वा 'ॐ नमो विष्णवे' इति षडक्षरेण घृताक्तान् यवान् व्रीहींश्चाष्टोत्तरशतं हुत्वा भूमौ स्वपेत् । एवं पञ्चसु दिनेषु कुर्यात् ।

विशेषस्तु—तत्र प्रथमेऽह्नि कमलैर्हरेः पादौ सम्पूज्य त्रिर्गोमयं प्राश्य, द्वितीये बिल्वपत्रैर्जानुनी सम्पूज्य गोमूत्रं प्राश्य, त्रयोदश्यां भृङ्गराजेन नाभिं सम्पूज्य क्षीरं प्राश्य, चतुर्दश्यां करवीरैः स्कन्धं सम्पूज्य दधि प्राश्य, चतुर्दश्यां हिमान्ते लौहमयीं पापप्रतिमां शङ्खचक्रहस्तां कृष्णवस्त्रवेष्टितां प्रस्थमिततिलोपरि स्थितां कृत्वा धर्मराजनामभिः करवीरैः सम्पूज्य—

यदन्यजन्मनि कृतमिह जन्मनि वा पुनः । तत्सर्वं प्रशमं यातु मत्पापं तव पूजनात् ॥

अनेन पुष्पाञ्जलिं दत्त्वा द्विजान् भोजयेत् । तस्मै प्रतिमां दद्यादिति शिष्टाचारः ।

आभाकासितपक्षे च मैत्रश्रवणरेवती ।
द्वादशी बुधवारेण हरेर्वासिर उच्यते ॥

तथा चाषाढशुक्लद्वादशी बुधवारानुराधायुता, भाद्रशुक्लद्वादशी बुधश्रवणायुता, कार्तिकशुक्लद्वादशी बुधरेवतीयुता हरिवासर इत्यर्थः पर्यवसितः ॥

अथैकादशीपारणायां मासभेदेन वस्तुभेदमाह—

गोमूत्रेण च गोमयेन पयसा दध्ना गवां सर्पिषा
सद्दर्भोदककार्तवीर्ययवजैश्चूर्णैस्तथा दूर्वया ।
कुष्माण्डेन गुडेन बिल्वतुलसीपत्रेण वा पारणं
द्वादश्यां गदितं क्रमान्मुनिवरैर्मार्गादितस्तत्फलम् ॥

पयसा दुग्धेन, कार्तवीर्यस्तिलः । बिल्वतुलसीपत्रयोर्विकल्पः । मार्गादिद्वादशमासेषु क्रमेण द्वादशवस्तुभिः पारणमिति । पद्मपुराणे क्रियायोगे—

दशम्यां विप्रशार्दूल ! द्वादश्यां चैव वैष्णवः ।
सम्यग्व्रतफलं प्रेप्सुर्न कुर्यान्निशि भोजनम् ॥
दशम्यामेवमादीनि निषिद्धानि द्विजोत्तम: ।
द्वादश्यामपि तान्येव निषिद्धानि न संशयः ।

तथाच दशमीविहितानि सर्वाण्येव मांसभक्षणाकरणादीनि द्वादश्यामपि कुर्यादिति भावः ॥ कार्त्तिकीपूर्णिमायां (१) कौशिकीस्नाने फलमाह-रामायणे—

कृत्तिकाऋक्षसंयुक्ता राका या कार्त्तिके भवेत् ।
कोकामुखे तु कौशिक्यां स्नात्वा स्वर्गे वसेन्नरः ॥

ओमद्येत्यादि कौशिकीस्नानमहं करिष्ये । इतिसंकल्पः । स्नानमन्त्रस्तु—

गाधिराजसुते ! देवि ! विश्वामित्रमुनेः स्वसः ! ।
ऋचीकभार्ये ! सत्तोये ! पापं मे हर कौशिकि ! ॥

## अथाग्रहणकृत्यम् ।

तत्र नवान्नभक्षणम् (२) । वृश्चिकत्रयोदशांशाभ्यन्तरे नवान्नभक्षणम् ।

वृश्चिके पूर्वभागे तु नवान्नं शस्यते बुधैः ।
अपरे क्रियमाणे तु धनुष्येव कृतं भवेत् ॥
धनुषि यत्कृतं श्राद्धं मृगनेत्रासु रात्रिषु ।
पितरस्तन्न गृह्णन्ति नवान्नामृतकांक्षिणः ॥ इति वचनात् ।

---

(१) कार्त्तिकीपूर्णिमायां पद्मयोग उक्तो ब्रह्मपुराणे—
"विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः ।
स योगः पद्मको नाम पुष्करेष्वतिदुर्लभः॥" इति ।
यदा कार्तिकशुक्लप्रतिपदूर्ध्वं विशाखायां सूर्यस्य सञ्चारस्तदा कार्त्तिकीपूर्णिमायां प्रायः कृत्तिकानक्षत्रसंयोगादयं योगस्तस्मिन् वर्षे भवेदिति ।
(२) अत्रत्यविशेषः परिशिष्टे द्रष्टव्यः ।

पूर्वभागे त्रयोदशांशाभ्यन्तरे। अपरे च चतुर्दशांशादौ, तत्राविहिततिथ्यादीन्याह ज्यौतिषे—

सूर्ये चैव विशाखगे स्मरतिथौ तारे त्रिजन्मान्विते
नन्दामन्दमहीजकाव्यदिवसे पौषे मधौ कार्तिके।
भेषु उग्राहिशिवेषु विष्णुशयने कृष्णे शशिन्यष्टमे
श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम्॥

स्मरतिथिः त्रयोदशी, नन्दा प्रतिपत्षष्ठ्येकादश्यः, मन्दः शनिः, महीजो मङ्गलः, काव्यः शुक्रः, मधौ चैत्रे, भेषु नक्षत्रेषु, उग्रः पूर्वात्रयमघाभरण्यः, अहिरश्लेषा, शिव आर्द्रा एतानि निषिद्धानि।

आश्लेषाकृत्तिकाज्येष्ठामूलाजपदभेषु च।
भृगुभौमदिने रिक्तातिथौ नाद्यान्नवौदनम्॥

इति श्राद्धशेषाभोजिमात्रपरम्। अजपदं पूर्वभाद्रपदमिति। तिथितत्त्वे विहितानि नक्षत्रादीन्याह भोजराजः—

ब्रह्मा विष्णुबृहस्पती शशधरो मार्तण्डपौष्णादिति-
मैत्रे चित्रविशाखवायुधनभे मूलाश्विवह्नौ तथा।
शक्रे वारुणऋक्षके शुभदिने श्राद्धं नवं शस्यते
नन्दाभार्गवभूमिजेषु न भवेच्छ्राद्धं नवान्नोद्भवम्।

ब्रह्मा रोहिणी, विष्णुः श्रवणः, बृहस्पतिः पुष्यः, शशधरो मृगशिराः, मार्तण्डो हस्तः, पौष्णो रेवती, अदितिः पुनर्वसू, मैत्रमनुराधा, चित्रं चित्रा।

अन्यच्च—हरियुगलेऽदितियुगले पूषायुगले विरञ्चियुगले च।
करपञ्चकोत्तरेषु च नवान्नफलभक्षणं शस्तम्॥

तथा च रोहिण्यादिद्वयम्पुनर्वस्वादिद्वयम्, उत्तरत्रयं, हस्तादिपञ्चकम्, श्रवणाद्वयं रेवत्यादिद्वयं, एतानि नक्षत्राणि, शुक्रशनिमङ्गलभिन्नवाराः। नन्दारिक्तात्रयोदशीभिन्नतिथयः। तृतीयजन्मभिन्नताराः। अष्टमभिन्नचन्द्रमाः। विशाखाभिन्ननक्षत्रस्थसूर्यः। पौषचैत्रकार्तिकभिन्नमासाः। शुक्लपक्षः। हरिशयनभिन्नकालः प्रशस्तः(१)।

---

(१) अथ सौरव्रतं सूर्याब्जाहस्करे—
मार्गे मासि तथा माघे वैशाखाषाढयोरपि। शुक्लपक्षे व्रतं कुर्यात्सम्यग्देवस्य भास्वतः॥
तथा च विष्णुधर्मोत्तरे—
ये त्वादित्यदिनं प्राप्य नक्तं कुर्वन्ति मानवाः। सप्तजन्मनि ते प्राप्य सम्भवन्त्यवियोगिनः॥
तत्र सौरनक्तपरिभाषाऽन्यनक्तभिन्ना, यथा नरसिंहपुराणे—
आत्मनो द्विगुणच्छायां यदा सन्तिष्ठते रविः। सौरं नक्तं विजानीयान्न नक्तं निशि भोजनम्॥
अत्र द्विगुणच्छाया पूर्वाह्णेऽपराह्णे च भवति, तत्र मुहूर्त्तोनं दिनमिति भविष्यपुराणवचनात्तथा 'मन्दीभूते दिवाकरे' इत्यपि दर्शनान्मध्याह्नोत्तरसमये यदाऽऽत्मन उत्थितदण्डाकारशरीरस्य द्विगुणा छाया पूर्वमुखी भवेत्तदा सौरं नक्तं ज्ञेयम्। तथोक्तं भविष्ये—

## अथ पौषकृत्यम्

अथाकालवृष्ट्यादिविचारः । स्मृतिः—

पौषादिचतुरो मासान् ज्ञेया वृष्टिरकालजा ।
व्रतयात्राविवाहादि वर्जयेत्सप्तवासरान् ॥

एतच्च निरन्तरदिनत्रयवृष्ट्यां, तृतीयेन तु सप्ताहमिति वक्ष्यमाणवचनैकवाक्यत्वाद् । विशेषमाह—

एकेनैकदिनन्त्याज्यं द्वितीयेन दिनत्रयम् ।

---

ये त्वादित्यदिने ब्रह्मन्नक्तं कुर्वन्ति मानवाः । दिनान्ते ते तु भुञ्जीरन्निषेधो रात्रिभोजने ॥

अपरार्के—यदा तु प्राङ्मुखी छाया पुरुषाद्द्विगुणा भवेत् ।
तदा नक्तं विजानीयादनक्तं त्वन्यथा भवेत् ॥

निर्णयसिन्धौ मार्गादिमासेषु रविव्रतभक्ष्याण्युक्तानि—

पत्रत्रित्वं तुलस्यास्त्रिपलमथ घृतं मार्गशीर्षादिभक्ष्यं
मुष्टीनां त्रिस्तिलानां त्रिपलदधि तथा दुग्धकं गोमयं च ।
त्रित्वं तोयाञ्जलीनां त्रिमरिचकमथो त्रिःपलाः शक्तवः स्युः
गोमूत्रं शर्करा सद्भविरिति विधिना भानुवारे क्रमेण ॥

तत्र मार्गमासे शुक्लपक्षीयप्रथमरविवासरादौ रविव्रतारम्भः । वैशाखमासे तच्छुक्लपक्षीयान्तिमरविवासरे तद्व्रतविराम इति स्मृतिप्रमाणम् । तथा च—

आदौ वृश्चिकमेषान्ते रविवारो यदा भवेत् । तदा रविव्रतारम्भविसर्गौ शास्त्रसम्मतौ ॥

तथा साम्बपुराणे—

अलिमेषगते भानौ भगवत्यर्कवासरे । शुक्लपक्षे स विधिवद्व्रतं शाम्ब ! समाचरेत् ॥
धनुर्वृषगते भानौ यः कुर्यात्सवितुर्व्रतम् । सप्तजन्मनि कुष्ठी स्याद्दरिद्रश्चोपजायते ॥
देवोत्थानात्परं ग्राह्यं व्रतं देवस्य भास्वतः । कदाचिदलिमेषार्के कृष्णपक्षे न कारयेत् ॥

अत्र धनुर्वृषगते भानावित्यनेन दोषश्रवणात्कदाचिद्वैशाखमासस्य मलमासत्वे तच्छुद्धकृष्णपक्षस्य मीनार्कत्वात्तच्छुद्धवैशाखशुक्लपक्षस्य वृषादित्यत्वान्मलमासीयशुक्लपक्षे एव मेषार्के रविव्रतं, रवेरुच्चराशिकत्वात् । तथैवोक्तं ज्योतिषे—

सूर्यव्रतं च वैशाखे मलमासो यदा भवेत् । तदा तत्रैव कर्त्तव्यं वृषादित्ये न कारयेत् ॥

एवं भाद्रस्य मलमासत्वे मलमास एव सिंहादित्यसंभवात्सौरं व्रतं तत्रैव कार्यमिति । तत्र रविवारे वर्ज्यानाह सर्वसारसंग्रहे—

क्षौरं तैलं जलं चोष्णमामिषं निशि भोजनम् । रतिः स्नानञ्च मध्याह्ने रवौ सप्त विवर्जयेत् ॥
आमिषं निम्बकाष्ठं च तप्तवारि हरीतकी । तैलमामलकीस्नानं वर्जयेद्रविवासरे ॥
किन्तु—तैलाभ्यङ्गो न दोषाय प्रत्यहं क्रियते यदि । उत्सवे वातरोगे वा यत्र वाचनिकोऽपि वा ॥
मन्त्रितं कथितं तैलं सार्षपं पुष्पवासितम् । द्रव्यान्तरयुतं वाऽपि नैव दुष्येत्कदाचन ॥

रविव्रते वर्ज्याणि—पद्मपुराणे सृष्टिखण्डे अ० ७७ श्लो० ६९—

वर्जयेच्च शिलापिष्टं शृङ्गवेरं च शाककम् । कोरदूषकपत्रं च रम्भां छागीघृतं तथा ॥
केशकीटादिकं वर्ज्यमुष्णोदकस्नानमेव च । अल्पबीजादिकं सर्वं व्रते सूरस्य वर्जयेत् ॥

शिलापिष्टं गोधूमादिचूर्णं, शृङ्गवेरमार्द्रकम्, कोरदूषकपत्रं कोद्रवान्नपत्रं रम्भां कदलीं, छागीघृतं तथेत्यनेन दुग्धदध्याद्यपि । केशकोटसंकुलमन्नं, उष्णजलेन स्नानं च अल्पबीजादिकं फलं बीजपूरकमेतानि सूरस्य सर्वस्य व्रते वर्जयेत् ।

तृतीयेन तु सप्ताहन्त्यजेदाकालवर्षणे ॥

एकेनैकदिनस्पृशा वृष्ट्या द्वितीयेन दिनद्वयस्पृशा, एवमग्रेऽपि एकदिनमिति तदग्रिमदिनमित्यर्थः। एवं दिनत्रयमित्यत्रापि वृष्टिदिनानन्तरदिनत्रयमित्यर्थः। एवमग्रेऽपि वृष्टिदिनत्यागो दण्डापूपन्यायात्। तथा च वृष्ट्यधिकरणदिनं तदुत्तरमेकत्रिसप्तदिनानि च त्याज्यानि, एवं निरन्तरदिनचतुष्टयादिवृष्ट्या वृष्ट्यधिकरणदिनचतुष्टयादिकम्, तदनन्तरं सप्तदिनानि च त्याज्यानि, तत्रापि तृतीयेन तु सप्ताहमेतद्विषयत्वात्, "अधिकं तु प्रविष्टन्न तु तद्धानिरिति न्यायेन" दिनचतुष्टयादिवृष्टौ अवश्यं दिनत्रयवृष्टिसत्वात्। अत्र द्वैतपरिशिष्टे एकेनैकदिनस्पृशा वृष्ट्या एकं दिनं, तदग्रिमं च दिनं त्याज्यम्। द्वितीयेनाव्यवहितदिनद्वयस्पृशा वृष्ट्या तदुत्तरं त्र्यहः। वृष्ट्यधिकरणदिनस्याशुद्धत्वं तु, न शुद्धिं निर्दिशेत्तावदिति यावत्तावत्पदसमभिव्याहारात्। वृष्टिदिनमादाय एकद्वित्रि गणने तृतीयार्थकारणत्वानुपपत्तिः। द्वितीयेन दिनत्रयमित्यत्र दिनैकमित्येव ब्रूयादिति केशवमिश्राः। नाडीजङ्घस्तु पौषादि चतुरो मासानित्यत्र मासपदं पक्षपरमाह तथाहि—

मासान् मार्गप्रभृति मुनयो व्यासवाल्मीकिगर्गा-
श्चैत्रं यावद्वर्षणविधौ नेति कालं वदन्ति ।
नाडीजङ्घः सुरगुरुमुनिः प्राह वृष्टेरकालं
मासावेतावशुभफलदौ पौषमाघौ न शेषौ ॥

इति पठित्वा "पौषादिचतुरो मासा"नित्यत्र पक्षा वै मासा इति वदन्ति। अकालवृष्ट्याऽपि यदि नरपशुचरणचिह्नं भुवि सम्पद्यते तदाऽशुद्धिर्नान्यथा, तथाहि—

वृत्तेऽप्यकालवर्षे नाशुद्धिन्निर्दिशेत्तावत् ।
यावन्न भवति याने नरपशुचरणाङ्किता वसुधा ॥ इति ।

अत्र नरपशुर्वानर इति मेधातिथिः ।

अथ ग्रहणादावशुद्धिमाह—

एकरात्रं परित्यज्य कुर्यात्पाणिग्रहं ग्रहे ।
प्रयाणे सप्तरात्राणि त्रिरात्रं व्रतबन्धने ॥

पाणिग्रहो विवाहः। ग्रहे ग्रहणे, व्रतबन्धने उपनयने, एतच्च प्रौढकन्याप्रौढमाणवकविवाहोपनयनविषयमतो वक्ष्यमाणवचनाद्विरोधः।

दिग्दाहे दिनमेकं स्याद् ग्रहे सप्तदिनानि च ।
भूकम्पे च समुत्पन्ने त्रिरात्रं परिवर्जयेत् ।
दृश्यते सिंहिकासूनुरुदितो गगने यदि ।
यत्रादौ मङ्गले कार्ये सप्तरात्रं विवर्जयेत् ॥
अरिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने ।
सप्तरात्रं न कुर्वीत यज्ञोद्वाहादिमङ्गलम् ॥

दर्शनादर्शनाद्राहोः केतोः सप्तदिनन्त्यजेत् ।
यावत्केतूदयस्तावदशुद्धः समयो भवेत् ॥
धूमकेतौ समुत्पन्ने ग्रहणे सूर्यचन्द्रयोः ।
ग्रहाणां सङ्करे चैव न कुर्यान्मङ्गलक्रियाम् ॥

यदाऽम्बुवृष्टिः कुलिशं पतत्यधो धराप्रकम्पोऽसुरकेतुदर्शनम् ।
तदा विवाहव्रतबन्धनेषु विवर्जयेत्सप्तदिनानि शास्त्रतः ॥

अम्बुवृष्टिः दिनत्रयमकालवृष्टिः ।

ग्रहे रवीन्द्वोरवनीप्रकम्पे केतूदयोल्कापतनादिदोषे ।
व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित् ॥

अत्रादिपदेन करकावज्रपातादेरुपग्रह इति द्वैतनिर्णयप्रदीपे गोकुलनाथोपाध्यायाः । ग्रहणभूकम्पोल्कापातकरकापातादिसमाहारे त्रयोदशाहमशुद्धम् । किञ्चिदूनसमाहारे दशाहम् । ग्रहणाद्येकैकोपग्रहे त्र्यहमिति द्वैतनिर्णयः । एतत्समुदायार्थपर्यालोचनया ऽयमर्थः पर्यवसितः, ग्रहणेऽत्यन्तप्रौढकन्याविवाहे तद्दिनमात्रमशुद्धम् । प्रौढमाणवकोपनयने ग्रहणदिनमारभ्य दिनत्रयम्, प्रौढभिन्नकन्याविवाहे तादृशमाणवकोपनयनादिमङ्गलकर्मसु ग्रहणानन्तरं सप्तदिनमशुद्धम् । दिग्दाहे च मङ्गलकर्ममात्रे एकदिनमशुद्धम् । भूमिकम्पे दिनत्रयम् । तद्दिनमारभ्य ग्रहणभूकम्पोल्कापातवज्रकरकापातादिसमुदाये एकस्मिन्दिने जाते उपनयने त्रयोदशदिनमशुद्धम्, किञ्चिन्न्यूनतत्समुदाये जाते दशाहमशुद्धम्, अन्यत्सुगमम् । भूमिदारणे वज्रमात्रपाते वा मङ्गलकर्ममात्रे तद्दिनानन्तरन्दिनमेकमशुद्धमिति द्वैतपरिशिष्टाद्यनुमारीयः पन्थाः ।

व्रताह्नि पूर्वसन्ध्यायां वारिदो यदि गर्जति ।
तद्दिनं स्यादनध्यायं व्रतं तत्र न कारयेत् ॥

व्रतमुपनयनम् । पूर्वसन्ध्या प्रातः सन्ध्या । अत्र प्रमाणं विष्णुपुराणम्—

ततोऽखिलजगत्पद्मबोधायाच्युतभानुना ।
देवकीपूर्वसन्ध्यायामाविर्भूतं महात्मना ॥ इति ।

"प्रभातसन्ध्यासमये च गर्जिते तदा ह्यनध्यायमुशन्ति सूरयः ।"

इति रत्नसारशतकं च । तथा च उपनयनदिने प्रातः सन्ध्यागर्जे तद्दिनमुपनयनेऽशुद्धमित्यर्थः पर्यवसितः । पद्मधरमिश्रीयमानबोधसारसंग्रहेऽप्येवमेव । तथाहि—"व्रताह्नि पूर्वसन्ध्यायाम्" इत्यादिवाक्यस्य उक्तत्वात् ।

अथ अर्द्धोदयः (१) । महाभारते—

अमाऽर्कपातश्रवणैर्युता चेत्पौपमाघयोः ।
अर्द्धोदयस्सविज्ञेयः कोटिसूर्यग्रहैस्समः ।

(१) तथा च स्मृतिकौस्तुभे वशिष्ठः—
सूर्यस्यार्धोदये काले ह्येते योगाः प्रकीर्त्तिताः । अर्धोदय इति ख्यातः कोटिसूर्यग्रहैः समः ॥

अमा अमावास्या, पौषमाघयोरित्यनेनान्वयः, अर्को रविवारः पातो व्यतीपातयोगः ।

श्रवणार्कव्यतीपातैरमा चेत्पौषमाघयोः ।
अर्द्धोदयः स विज्ञेयः किञ्चिन्न्यूने महोदयः ॥

योगोऽयं दिवैव शस्तः । तथाहि तिथितत्त्वचिन्तामणिधृतवचनम्—
"दिवैव योगश्शस्तोऽयं न तु रात्रौ कदाचन ।" इति ।
फलमाह—अर्द्धोदये तु सम्प्राप्ते सर्वं गङ्गासमं जलम् ॥
शुद्धात्मानो द्विजास्सर्वे भवेयुर्ब्रह्मसन्निभाः ।
यत्किञ्चिद्दीयते दानं तद्दानं मेरुसन्निभम् ॥

अत्र सङ्कल्पः—ओमद्य पौषे मासि कृष्णे पक्षे अमावास्यायां तिथावमुकगोत्रस्यामुकशर्मणो मम सूर्यग्रहणकालीनगङ्गास्नानजन्यफलकोटिगुणप्राप्तिकामोऽर्द्धोदये गङ्गायां स्नानमहं करिष्ये । एवं माघेऽपि, तत्र पौषस्थाने माघे मासीत्येव विशेषः । एतन्मासे महिषीप्रसवे दोषशान्तिर्भाद्रेऽभिहिता ।

वैशाखादौ तु कौशिकीस्नाने प्रमाणमभिहितं प्राक् । पौषीपूर्णिमायां तत्स्नाने प्रमाणाभावेऽपि शिष्टाचारात्स्नानं कर्त्तव्यम् । तत्र सङ्कल्पमाह सङ्कल्पावली—'ओमद्येत्यादि पृथिव्यधिकरणकसकलतीर्थस्नानजन्यफलप्राप्तिकामः कौशिक्यां स्नानमहङ्करिष्ये' इति सङ्कल्प्य—

---

दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन ॥

**तथा जयसिंहकल्पद्रुमे—**

पातस्यान्तः पूर्वभागस्त्वमायाः श्रोणामध्यंभास्करस्योदये च ।
भानोर्वारे पुण्यमर्धोदयः स्यात् किञ्चिन्न्यूने तं महत्पूर्वमाहुः ॥

योगतिथिनक्षत्राणां मानानि त्रिधा विभज्य पातयोगस्य तृतीयो भागः तिथेरमावास्यायाः पूर्वभागः । श्रवणनक्षत्रस्य मध्यभागः । एतेषां यदा संयोगः सूर्योदयसमये भवेत्तदाऽर्धोदययोगो भवतीति युक्तं लक्षणं चिरकालघटनयोग्यमिति । **अथ तिथितत्त्वचिन्तामणिधृतस्कन्दपुराणवचनम्—**

माघीयामाव्यतीपाते आदित्ये विष्णुदैवते । अर्धोदयं तदित्याहुः सहस्रार्कग्रहैः समम् ॥
**तथा च**—माघमासे कृष्णपक्षे पञ्चदश्यां रवेर्दिने । वैष्णवेन तु ऋक्षेण व्यतीपाते सुदुर्लभे ॥

व्रतं कुर्यादिति शेषः । **अत्र मैथिल**निबन्धेषूदयव्यापित्वे एव योगोऽयमिति न दृश्यते । केवलं **स्मृतिकौस्तुभादौ** दृश्यते ।तच्चिन्त्यमिति ।

**जयसिंहकल्पद्रुमोक्तलक्षणेनार्धोदययोगस्वरूपमेवम्—**

रविवासरे—उदयसमयः ।

| | | | | | |
|---|---|---|---|---|---|
| **योगः** | १ भाग | २ भाग | ३ भाग | | |
| | नक्षत्रम् | १ भाग | २ भाग | ३ भाग | |
| | | तिथिः | १ भाग | २ भाग | ३ भाग |

ॐ गाधिराजसुते ! देवि ! विश्वामित्रमुनेस्स्वसः ।
ऋचीकभार्ये ! सत्यार्ये ! पापं मे हर कौशिकि ! ॥
इति पठित्वा स्नायात् ॥

## अथ माघकृत्यम् ।

तत्र प्रातःस्नानकालमाह तिथितत्त्वचिन्तामणौ स्मृतिः—

उत्तमन्तु सनक्षत्रं लुप्ततारन्तु मध्यमम् ।
सवितर्युदिते भूप ! ततो हीनं प्रकीर्त्तितम् ॥

अरुणोदयवेलास्नानफलमाह—

यो माघमास्युषसि सूर्यकराभिताम्रे स्नानं समाचरति चारु नदीप्रवाहे ।
उद्धृत्य सप्त पुरुषान् पितृमातृवंश्यान् स्वर्गं प्रयात्यमरदेहधरो नरोऽसौ ॥

अत्र मासः सौरः । तेन मकरसंक्रमदिनमारभ्य प्रातःस्नाननियमः (१) ।

जलमात्रे तु पद्मपुराणे—

स्वर्गलोके चिरं वासो येषां मनसि वर्त्तते ।
यत्र क्वापि जले तैस्तु स्नातव्यं मृगभास्करे ॥

मृगभास्करे मकरस्थे रवौ । स्नानमन्त्रस्तु—

मकरस्थे रवौ माघे गोविन्दाच्युत ! माधव ! ।
स्नानेनानेन मे देव ! यथोक्तफलदो भव ॥ इति ।

नरसिंहपुराणे—

शीतकाले महावह्निं प्रज्वालयति यो नरः ।
सर्वसत्त्वहितार्थाय स्वर्गे चाप्सरसं लभेत् ॥

हितार्थाय शीतनिवारणायेत्यर्थः ।

अथ माघकृष्णचतुर्थी गणेशचतुर्थी । अस्यां गणेशोत्पत्तिमाह शिवधर्मे—

सर्वदेवमयः साक्षात् सर्वमङ्गलकारकः ।
माघकृष्णचतुर्थ्यान्तु प्रादुर्भूतो गणाधिपः ॥

इयं चतुर्थी तृतीयायुता ग्राह्या ।

गणेशगौरीबहुलाव्यतिरिक्ता प्रकीर्तिता ।

चतुर्थी पञ्चमीविद्धेत्यादिवचनात् गणेशचतुर्थीव्यतिरिक्तचतुर्थ्या एव पञ्चमीयोगप्राशस्त्याभिधानात् ।"मातृविद्धो गणेश्वर" इति वचनात् ।

चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।

इति बृहस्पतेश्च । एतच्चोभयदिने मध्याह्नव्याप्तौ उत्तरदिनमात्रे मध्याह्नव्याप्तौ वा उत्तरदिने एव—

---

(१) शब्दकल्पद्रुमे—

मकरे मूलकं चैव सिंहे चालावुभक्षणम् । कार्तिके शूरणं चैव सद्यो गोमांसभक्षणम् ॥

आलावु तुम्बीफलं सजमनीति प्रसिद्धम् । शूरणम् ओलः । संक्रान्तिनिर्णयः परिशिष्टे द्रष्टव्यः ।

मध्याह्नव्यापिनी चेत्स्यात् परतश्च परेऽहनि । इति बृहस्पतेः ।

माघे मासि गणेशदेवताका चतुर्थीति(१)निबन्धमात्रेऽपि प्रसिद्धेति, ठक्कुराः । अमावास्यायामर्द्धोदयः स पौषकृत्ये द्रष्टव्यः ।

अथ माघशुक्लपञ्चमी श्रीपञ्चमी सा च पूर्वयुतेति माधवाचार्यः । दिवोदासोऽपि 'माघशुक्ला पञ्चमी या पूर्वविद्धा प्रशस्यते' । इति मैथिलगौडसम्मतम् । हेमाद्रिमते परेति दाक्षिणात्याः ।

अथ माघशुक्लसप्तमी(२)अरुणोदयव्यापिनी ग्राह्या, तथा च विष्णुः—

सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥
अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
प्रयागे यदि लभ्येत कोटिसूर्यग्रहैः समा ॥
( गङ्गायां यदि लभ्येत शतसूर्यग्रहैः समा । )

इति क्वचित्पाठः । तत्र सप्तार्कपत्राणि, बदरीपत्राणि शिरसि निधाय वक्ष्यमाणमन्त्रेण स्नायात्—

यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोगञ्च शोकं च माकरी हन्तु सप्तमी ॥
ॐ एतज्जन्मकृतं पापं यच्च जन्मान्तरार्जितम् ।
मनोवाक्कायजं यच्च ज्ञाताज्ञातञ्च यत्पुनः ॥
इति सप्तविधम्पापं स्नानान्मे सप्तसप्तिके ।
सर्वव्याधिसमायुक्तं हर माकरि सप्तमि ! ॥

इति मन्त्रं पठेत् । रोकं च शोकं चेति तिथितत्त्वे पाठः, रोकं छिद्रमिति व्याख्यानञ्च ।

उभयदिने अरुणोदयकाले सप्तमीलाभे पूर्वदिने एव स्नानमधिककालव्यापित्वात् । अरुणोदयवेलामाह देवीभागवते—

---

(१) म० म० प० श्रीपद्मनाभमिश्रकृततिथिचन्द्रिकायां तु—
तृतीया संयुता या तु सा चतुर्थी फलप्रदा । कर्त्तव्या व्रतिभिस्तात ! गणनाथसुतोषिणी ॥
गणनाथं सुतरां तोषयतीति गणेश्वरव्रते तृतीयायुक्ता चतुर्थी विधेया । अन्यदेवताव्रते तु 'गणनाथसुतोषिणी' इत्यसङ्गतं स्यात् । तस्माद्विनायकव्रते चतुर्थी तृतीयायुतैवोपोष्या । वत्सपूजाधेनुपूजयोः पृथगुपादानाद्बहुलाचतुर्थी तृतीयोपेता मान्या । अतो गणेश्वरगौरीबहुलाचतुर्थीव्यतिरिक्ता देवतान्तरसम्बन्धिन्यश्चतुर्थ्यः पञ्चम्या विद्धा एव मान्याः । पञ्चमीयुक्तैव युग्मवाक्यात् । अन्यच्च-एकादशी तथा षष्ठी अमावास्या चतुर्थिका । उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः॥ इति
यदि पूर्वदिने चन्द्रोदयकालमतिक्रम्य प्रवृत्ता चतुर्थी नोत्तरदिने चन्द्रोदयकालं व्याप्नुयात्तत्र पूर्वैवेति **राजनाथकृततिथिनिर्णये** ।

(२) शुक्लपक्षस्य सप्तम्यां सूर्यवारो यदा भवेत् । सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥
**तथा भास्करपुराणे**—
शुक्लपक्षस्य सप्तम्यां यदा संक्रमते रविः । तदा महाजया प्रोक्ता सप्तमी भास्करप्रिया ॥
स्नानं दानं तपो होमः पितृदेवाभिपूजनम् । सर्वं कोटिगुणं प्रोक्तं भास्करस्य वचो यथा ॥

चतस्रो घटिकाः प्रातररुणोदय उच्यते । इति ।
पञ्च पञ्च उषः कालः सप्तपञ्चारुणोदयः ।
अष्टपञ्च भवेत् प्रातः शेषः सूर्योदयो मतः । इति ।

अथ माघशुक्लाष्टमी भीष्माख्या, तस्यां भीष्मतर्पणान्याह पाद्मे—
माघे मासि सिताष्टम्यां सतिलैर्भीष्मतर्पणम् ।
श्राद्धं च ये नराः कुर्युस्तेस्युः सन्ततिभागिनः ॥

भारते—शुक्लाष्टम्यान्तु माघस्य दद्याद्भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

एतत्तर्पणे सर्ववर्णानामधिकारः, इयानेव विशेषः ।

ब्राह्मणः पितृतर्पणानन्तरम्, क्षत्रियादयस्तु प्रथममेव भीष्मतर्पणं कुर्युरिति समाचारः । तर्पणमन्त्रो यथा—
वैयाघ्रपादगोत्राय सांकृतिप्रवराय च ।
अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे ॥
वसूनामवताराय सांकृतिप्रवराय च ।
अर्घं ददामि भीष्माय आबालब्रह्मचारिणे ॥

इति मन्त्राभ्यां सलिलाञ्जलिं दत्वा पठेत् ।
ओं भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ॥ इति(१) ॥

अथ माघीपूर्णिमा परयुता ग्राह्या, यथोक्तं ब्रह्मवैवर्त्ते—
भूतविद्धे न कर्तव्ये दर्शपूर्णे कदाचन ॥ इति । (२)

---

(१) भीष्मतर्पणाकरणे दोषमाह ति० त० चिन्तामणिधृतभारते—
ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलम् । संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम ? ॥

(२) माघी पूर्णिमा क्वचिन्महामाघी भवति, तदुक्तं तिथितत्त्वचिन्तामणौ ज्यौतिषे—
मेषराशौ यदा सौरिः सिंहे गुरुविधू तथा । भास्करः श्रवणर्क्षे च महामाघीति सा स्मृता ॥

अत्र शनेस्त्रिंशद्वर्षेण भगणभोगदर्शनाद्गुरोर्द्वादशाब्दकालेन मध्यगत्या भगणभोगादस्य योगस्य षष्टिषष्टिवर्षेषु सम्भवो युक्त्या सिद्ध्यति, तत्र यदा स च योगस्तस्मादयं समयनियम इति।

एवं महाफाल्गुनी फल्गुनीनक्षत्रयुक्तपूर्णिमायामपि सिंहस्थिते गुरौ, महाचैत्री तु चैत्रीपूर्णिमायां चित्रास्थचन्द्रगुरुयोगयुक्ता भवत्येवमेव सर्वेषु मासेषु, तथाचोक्तं राजमार्त्तण्डे—

माससंज्ञे यदा ऋक्षे चन्द्रः सम्पूर्णमण्डलः । गुरुणा याति संयोगं सा तिथिर्महती स्मृता ॥

अत एव विष्णुना—"तस्यां स्नानोपवासादि चाक्षयं प्रोक्तम्" इत्युक्तम् । परन्तूक्तवचने शनेर्मेषादिस्थत्वं न वर्त्तते ॥ महामाघीयोगे तिथितत्त्वचिन्तामणिधृतज्यौतिषवचने, मेषस्थशनिग्रहोल्लेखो दृश्यते, यदि च चन्द्रगुरू एव योगकारकौ स्यातां, तदा प्रतिवर्षं गुरुग्रहाधिष्ठितराशियुक्तपूर्णिमायां प्रायस्तस्य सम्भवः ।

अथ हरिद्वारतीर्थे कुम्भयोग उक्तः कृत्यमञ्जर्याम्—
पद्मिनीनायके मेषे कुम्भराशिगते गुरौ । गङ्गाद्वारे भवेद्योगः कुम्भनामा तदोत्तमः ॥

## अथ फल्गुनकृत्यम् ।

स्मृतिः—फाल्गुनस्य च मासस्य कृष्णाष्टम्यां महीसुता ।
जाता दाशरथेः पत्नी तस्मिन्नहनि जानकी ॥
उपोषितो रघुपतिस्समुद्रस्य तटे तदा ।
रामपत्नी च सम्पूज्या सीता जनकनन्दिनी ॥ इति ॥

अथ फाल्गुनकृष्णचतुर्दश्यां शिवरात्रिव्रतम् । तच्च प्रदोषनिशीथोभयव्यापिन्यां चतुर्दश्याम् । तथाहि स्कान्दे—

त्रयोदशी यदा देवि ! दिनुभुक्तिप्रमाणतः ।
जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥ इति ।

दिनुभुक्तिरस्तमनकालः । निशीथमाह—

'महानिशी द्वे घटिके रात्रेर्मध्यमयामयोः ।' इति । तथा च द्वितीयप्रहररात्रिशेषदण्डः तृतीयप्रहररात्रिप्रथमदण्ड इति दण्डद्वयनिशीथ इति भावः। यदि पूर्वदिने निशीथव्यापिनी, परदिने प्रदोषमात्रव्यापिनी, तदा पूर्वदिने व्रतम्, "निशीथव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।" इति वचनात् । यदि तु पूर्वदिने निशीथानन्तरं परदिने निशीथपूर्वकालपर्यन्तं चतुर्दशी, तदा परदिने व्रतम्, प्रदोषव्यापिनी ग्राह्येति वचनात् । प्रदोषमाह ठक्कुरः—प्रदोषो घटिकाचतुष्टयरूप इति, एतत्पारणन्तु चतुर्दश्यन्ते, तथाहि—

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणम्भवेत् ॥ इति ॥

पारणकाले चतुर्दश्यन्तासम्भवे चतुर्दश्यामपि पारणमाह पाद्मे—

उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम् ।
कृतैः सुकृतलक्षैस्तु लभ्यते वा नवा नरैः ॥

अथ शिवरात्रिव्रतारम्भप्रकारः । फाल्गुनकृष्णचतुर्दश्यां प्रातःस्नानादिराचान्त उत्तराभिमुखो वारिपूर्णताम्रपात्रमादाय 'भगवन्सूर्यभगवत्योर्देवता अद्यादि चतुर्दशवर्षं यावत् प्रतिफाल्गुनकृष्णचतुर्दश्यां शिवरात्रिव्रतमहङ्करिष्ये, इति निवेद्य कुशादिकमादायामुकगोत्रस्यामुकशर्मणो ममान्तकालीनशिवानुचरत्वशिवलोकसहितत्वदेवसाहित्यसुरालयभ्रमणभूपालत्वसार्वदिकशिवभक्तिरूपबुद्धिविवेकाऽनाहताज्ञत्वलक्ष्मीगोधनप्राप्तिकामोऽद्यादिचतुर्दशवर्षं या-

---

यदा बृहस्पतिः कुम्भराशौ भवेत्तस्मिन् वर्षे मेषसंक्रान्तौ त्वयं योगः ।

अथ गोदावरीतीर्थे कुम्भयोगः—

कर्के गुरुस्तथा भानुश्चन्द्रश्चन्द्रक्षयस्तथा । गोदावर्यां तदा कुम्भो जायतेऽवनिमण्डले ॥

अयं योगस्तदा यदा गुरुः कर्कराशौ भवेत्तस्मिन् वर्षे श्रावणामावास्यायां सम्भवति ॥

अथ प्रयागतीर्थे कुम्भयोगः—

माघामायां मृगे भानौ मेषराशिगते गुरौ । कुम्भयोगो भवेत्तत्र प्रयागे ह्यतिदुर्लभः ॥

वत् प्रतिफाल्गुनकृष्णचतुर्दश्यां शिवरात्रिव्रतमहङ्करिष्ये इति सङ्कल्प्य व्रतारम्भः। चतुर्दशवर्षपर्यन्तं व्रतं समाप्य उद्यापनं गोदानं कुर्यात्। उद्यापनाशक्तौ गोदानं कृत्वा यथाशक्ति ब्राह्मणान् भोजयेत्।

अथ नक्तव्रतन्तु—दिनोपवासपूर्वकरात्रिभोजनरूपम्। तत्र दिवारात्र्युभयव्यापिन्यां चतुर्दश्याम्, उभयव्याप्त्यसम्भवे प्रदोषव्यापिन्यां, तथाहि स्कान्दे—दिवारात्रिव्रतं यच्च एक एव तिथौ स्मृतम्।

तस्यामुभयव्यापिन्यां कुर्यादेव व्रतं व्रती॥

व्यासः—प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः।

यदि च्चोभयदिने प्रदोषव्यापिनी चतुर्दशी तदा परदिने—

यदि स्यादुभयोरह्नोः प्रदोषव्यापिनी तिथिः।

तत्रोत्तरत्र नक्तं स्यादुभयत्रैव सा यतः।

इति जाबालवचनात्। उभयत्र दिवसे रात्रौ च। प्रदोषोऽत्र त्रिमूहूर्तः। 'त्रिमुहूर्तः प्रदोषः स्याद्भानावस्तङ्गते सति'। इति व्यासोक्तेरिति ठक्कुराः। प्रदोषोऽस्तमयादूर्ध्वं घटिकाद्वयमिष्यते।

इत्युक्त्वा अत्र घटिका दण्डद्वयरूपेति गौडाः। (१)

अथ नक्तव्रतारम्भप्रकारमाह व्रतपद्धतौ—ओमद्य भगवन्सूर्यभगवत्यो देवता अद्यादिवर्षं यावत् प्रतिकृष्णचतुर्दशीषु नक्तेतरभोजननिवृत्तव्रतमहङ्करिष्ये। फाल्गुनकृष्णचतुर्दश्यामेतत्व्रतारम्भः। एवं द्वित्रिवर्षादि व्याप्य करणे सङ्कल्प ऊहेन करणीयः।

सन्ध्यामतीत्य भोजनमाह मार्कण्डेयः—

चत्वारि यानि कर्माणि सन्ध्यायां परिवर्जयेत्।

आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम्॥ इति।

अत्र सन्ध्या प्राक् प्रातरेव हि। तिष्ठेदासूर्यदर्शनात्॥' इति किञ्चिदालक्ष्य तारकाकालात् सूर्यदर्शनविधिः सन्ध्याकाल इति अस्तमयादूर्ध्वं सन्ध्या,

---

(१) अथ त्रयोदशीव्रतनिर्णयः। पद्मधरीयतिथिचन्द्रिका लिखितो विलिख्यते—कृष्णपक्षे या त्रयोदशी सा परोपोष्या—

षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी। एताः परयुताः कार्याः पराः पूर्वेण संयुताः॥

इति निगमवाक्यात् परिशेषाच्छुक्ला द्वादश्युपेता मान्या, अत्र यद्युभयदिने प्रदोषव्यापिनी त्रयोदशी भवेत्तदा कृष्णे चतुर्दशीविद्धाऽर्थात्परदिने, 'शुक्ले तु द्वादशीविद्धा'ऽर्थात्पूर्वदिने त्रयोदशीप्रदोषव्रतमाचरणीयम्। अत्र प्रदोषमानमाह व्यासः—

त्रिमुहूर्त्तः प्रदोषः स्याद्भानावस्तङ्गते सति। नक्तं तत्र प्रकर्त्तव्यमिति शास्त्रविनिश्चयः॥

तत्र मुहूर्त्तमानन्तु रात्रिमानस्य पञ्चदशांशपरिमितं विशेयम्। यदि च पूर्वदिने प्रदोषानन्तरं त्रयोदशी, परदिनेऽस्तमयात्प्रागेव वा ऽस्तमयावधि भवेत्तदा नक्तव्रतस्य दिवाऽनशनपूर्वकरात्रिभोजनरूपस्य पूर्वदिने घटितत्वान्न परदिने तद्व्रतम्।

सा च नक्षत्रदर्शनविधेः पूर्वमिति सन्ध्यायाश्चात्यल्पत्वात् घटिकात्रयात्मकः सन्ध्याकालस्तडिद्गर्जितादिनिमित्तयोर्विधिप्रतिषेधयोः स एव गृह्यते इति सन्ध्याद्वयप्रमाणमुक्तवन्तस्तिथिचन्द्रिकायां भट्टधरमिश्राः ॥

अथ अशक्त्यादिना स्वयं व्रताद्यकरणे (१) प्रतिनिधिद्वाराऽपि कारयितव्यमाह पराशरः—

उपवासं व्रतं होमं तीर्थयात्राजपादिकम् ।
विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तत्फलम् ॥

स्कन्दपुराणे—असामर्थ्ये शरीरस्य व्रते च समुपस्थिते
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ॥
भ्रातरं भगिनीं शिष्यं ब्राह्मणं दक्षिणादिभिः ॥

कात्यायनः—पितृमातृपतिभ्रातृगुर्वर्थे च विशेषतः ।
उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ।
भार्या भर्तुर्व्रतं कुर्याद्भार्यायाश्च पतिस्तथा ।
असामर्थ्ये तयोरेवं व्रतभङ्गो न जायते ॥
राज्ञश्च क्षत्रियस्यार्थे एकादश्यामुपोषितः ।
पुरोधाः क्षत्रिणा सार्द्धं फलमाप्नोति निश्चितम् ॥
उपवासफलं ताभ्यां सममेवमवाप्यते ।

अथ स्त्रीणां तु स्वाम्याज्ञां विना व्रतादि न कार्यम् । तथाहि—
नारी या त्वननुज्ञाता पित्रा भर्त्रा सुतेन वा ।
निष्फलन्तु भवेत्तस्या यत्करोति व्रतादिकम् ॥

---

(१) उपवासासमर्थस्योपायः पुराणान्तरे—
उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् । तावद्धनादि वा दद्याद् भुक्तस्य द्विगुणं तथा ॥
सहस्रसंमितां देवीं ( गायत्रीं ) जपेद्वा प्राणसंयमान् ।
कुर्याद् द्वादशसंख्याकान्यथाशक्त्याऽऽतुरो नरः ॥
मात्स्ये—उपवासेष्वशक्तानां नक्तं भोजनमिष्यते ।
वायवीये—द्रव्यदातोपवासस्य फलं प्राप्नोत्यसंशयम् ॥
देवलः—ब्रह्मचर्यं तथा शौचं सत्यमामिषवर्जनम् । व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः ॥
नन्दिपुराणे-व्रतस्योद्यापनावश्यकत्वम्—
कुर्यादुद्यापनं तस्य समाप्तौ यदुदीरितम् । उद्यापनं विना यत्तु तद्व्रतं निष्फलं भवेत् ॥
यदि वोद्यापनं नोक्तं व्रतानुगुणतश्चरेत् । वित्तानुसारतो दद्यादनुक्तोद्यापने कृते ॥
गाश्चैव काञ्चनं दद्याद्व्रतस्य परिपूर्त्तये ॥
अपरार्केऽपि—
यो गृहीत्वा व्रतं मोहादेकादश्यादिकं नरः । न समापयेत् तस्य गतिः पापीयसी भवेत् ॥
अथ गृहीतव्रतभङ्गे प्रायश्चित्तमुक्तं वायुपुराणे—
लोभान्मोहात्प्रमादाद्वा व्रतभङ्गो यदा भवेत् । उपवासत्रयं कुर्यात्कुर्याद्वा केशमुण्डनम् ।
प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् ॥ प्रा० म० ।

सङ्कल्पितव्रतमाशौचेऽपि कर्तव्यम् । तथा च विष्णुः "न व्रतिनां व्रते" इति व्रतीनामारब्धव्रतानां न व्रते इत्याशौचमित्यशौचप्रतिरोधक इति शेषः । विष्णुः--

व्रतयज्ञविवाहेषु श्राद्धे होमार्चने जपे ।
आरब्धे सूतकन्न स्यादनारब्धे तु सूतकम् ॥

अरम्भ उक्तो हारीतेन-

आरम्भो वरणं यज्ञे सङ्कल्पे व्रतजापयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ इति ।

श्राद्धे दर्शश्राद्धविषयमिति स्मार्ताः । सङ्कल्पमाह हारीतः--

"मनसा सङ्कल्पयेति वाचा अभिलपति कर्मणा चोपपादयतीति" ।

भविष्ये-सङ्कल्पेन विना राजन् ! यत् किञ्चित् कुरुते नरः ।
फलं चाल्पाल्पकं तस्य धर्मस्यार्धक्षयो भवेत् ॥ इति ।

भविष्ये-शुक्तिशङ्खाश्महस्तैश्च कांस्यरूप्यादिभिस्तथा ।
सङ्कल्पो न च कर्तव्यो मृन्मयेन कदाचन ॥
गृहीत्वोदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
दर्भत्रयं साग्रमूलं फलं पुष्पं तिलान्वितम् ॥ इति ।

अथ व्रते प्रारब्धे स्त्रिया रजोयोगे (१) अन्यद्वारा पूजां कारयेत्, तथा मात्स्ये 'यदात्वशुद्धा तदान्येन कारयेत् ।' इति ।

---

(१) अथ रजोवत्यधिकारः । तत्राद्यरजोदर्शनतः प्राक् स्त्रीसंगो न विधेयस्तदुक्तं भविष्ये-
रजोदर्शनतः पूर्वं न स्त्रीसंसर्गमाचरेत् । संसर्गं यदि कुर्वीत नरकं परिपच्यते ॥

**अथ रजोधर्मे शुद्धिसमय उक्तो भारद्वाजेन—**

प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्धयति ॥
भर्तुः स्पृश्या चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला । पञ्चमेऽहनि योग्या स्याद्दैवे पित्र्ये च कर्मणि ।

**अथ प्रथमरजोदर्शनेऽनिष्टफलदा मासादयः**—चैत्रज्येष्ठाषाढभाद्राश्विनपौषमासाः । कृष्णपक्षः । रविकुजशनिवासराः । रात्रिः मेषवृषकर्कमकरकुम्भलग्नानि, तथा धनुषः पूर्वभागः । भरणीकृत्तिकाऽऽर्द्राऽश्लेषामघापूर्वफल्गुनीज्येष्ठापूर्वाषाढपूर्वभाद्र नक्षत्राणि । जीर्णरक्तनीलमलिनवस्त्राणि, संमार्जनीकाष्ठतृणाग्निशूर्पस्पर्शावसरः । विष्टिः, निद्रा, संक्रमणम् । दर्शः । चतुर्थीनवमीचतुर्दशीषष्ठीद्वादश्यष्टमीति तिथयः । रविचन्द्रग्रहणम् । व्यतीपातवैधृतिकरणे । सायम् । बहिर्ग्रामपरग्रामपरगृहाणि । एतेषु प्रथमरजोदर्शने जाते अशुभफलमुक्तं मुनिभिस्तत्र तेषां पृथक् फलानि **पीयूषधारायां** शान्तिमयूखादौ द्रष्टव्यानि । **अथात्र शान्तिरुक्ता वशिष्ठेन—**

प्रभूतदोषं यदि दृश्यते तत्पुष्पं ततः शान्तिककर्म कार्यम् ।
विवर्जयेदेव तदेकशय्यां यावद्रजोदर्शनमन्यघस्रे ॥
ईशानतो गोमयमण्डलेन परिस्रुतेऽग्नौ जुहुयात्सदूर्वाम् ।
युग्मां घृताक्तां च समित्प्रमाणां गायत्रिकां साष्टसहस्रसंख्याम् ॥
शतप्रमाणामथवाऽघहन्त्रीं शुभैर्यवैर्व्याहृतिभिस्तिलैश्च ॥
ततः सुरान् भूमिसुरान् पितॄंश्च सन्तर्पयेदन्नसुवर्णवस्त्रैः ।

भूमिसुरान् ब्राह्मणान् ।

अथ गोविन्दद्वादशीयोगमाह (१)—

फाल्गुनस्य सिते पक्षे कुम्भस्थे दिवसाधिपे ।
जीवे धनुषि संस्थे च शोभने रविवासरे ॥
पुष्यर्क्षेण च संयुक्ता गोविन्दद्वादशी मता ।

---

अथरजस्वलावर्जितकर्माह लिङ्गपुराणे—

स्नानं शौचं तथा गानं रोदनं हसनं तथा । यानमभ्यञ्जनं नारी द्यूतं चैवानुलेपनम् ॥
दिवास्वापं विशेषेण तथा वै दन्तधावनम् । मैथुनं मानस वाऽपि वाचिकं देवताऽर्चनम् ॥
वर्जयेत्सर्वयत्नेन नमस्कारं रजस्वला ।

चेदविवाहितैव रजोयुक्ता भवेत्तदा पित्रादीनां दोषमाहापरार्के संवर्त्तः—

माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च । त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
हारीतः—पितृगेहे च या कन्या रजः पश्यत्यसंस्कृता । सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥

एवं देवलात्रिकश्यपा अप्याहुः । अत एव शान्तिं कृत्वा तादृशीं कन्यामुद्वहेत्, तथाहि आश्वलायनः—

कन्यायां ऋतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः । शुद्धिं च कारयित्वा तामुद्वहेदनृशंस्यधीः ॥
पिता ऋतून् स्वपुत्र्यास्तु गणयेदादितः सुधीः । दानावधि गृहे यत्नात्पालयेच्च रजोवतीम् ॥
दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि । दातव्यैकाऽपि निःस्वेन दाने तस्या यथाविधि ॥
दद्याद्वा ब्राह्मणेष्वभ्रमतिनिस्वः सदक्षिणम् ।

अत एव साधारणतया प्रचलितव्यवहारेण वराय नियतं गोरेकं वा गोयुगलं कन्यापित्रा दीयते । तथा च चतुर्थीदिने भोज्यमपि क्रियते । इति मैथिलानां व्यवहारः । यदि विवाहसमये एव दैवात्कन्या ऋतुमती भवेत्तदोपायो मदनपारिजाते—

विवाहे वितते यज्ञे होमकाले ह्युपस्थिते । कन्यामृतमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ? ॥
स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि । युञ्जानामाहुतिं हुत्वा ततस्तन्त्रं प्रवर्त्तयेत् ॥

आतुरे शुद्धिमाह पराशरः—( शुद्धिमयूखे )—

आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः । स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत्स आतुरः ॥

उशनाः—

ज्वराभिभूता या नारी रजसा चप रिप्लुता । कथं तस्या भवेच्छौचं शुद्धिः स्याच्छौचकर्मणि ॥
चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम् । सा सचैलावगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥
दश द्वादश कृत्वो वा आचामेच्च पुनः पुनः । अन्ते च वाससां त्यागस्ततः शुद्धा भवेत्तु सा ॥

रजस्वलाया मरणे विशेषः स्मृत्यन्तरे—

पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् । वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम् ॥ इति ।

यदि एकोदिष्ट उपस्थिते स्त्री रजोवती, तदामान्नेन तत्कर्त्तव्यमिति स्मृतिभावः स्त्रीकृतपाकपक्षे एव । तत्रापि स्वयंकृतपाकेन पितृकार्यकरणे न कोऽपि दोषो लक्ष्यते ।

( १ ) ग्रन्थान्तरोक्तं च तल्लक्षणम् । ( ति० त० चिन्तामणौ )

कार्मुकीये यदा जीवे कुम्भस्थे च दिवाकरे । फाल्गुनस्य सिते पक्षे द्वादश्यां रविवासरे ॥
पुष्यशोभनसंयुक्ता गोविन्दद्वादशी स्मृता । तस्यां स्नानं च दानं च महापातकनाशनम् ॥

अत्र तावत् "कुम्भस्थे दिवसाधिपे" इत्यनेन प्रतिवर्षं सम्भवः । "जीवे धनुषि संस्थे च" इत्यनेन द्वादशवर्षे तत्संभवः । परन्तु तत्रापि रविवारपुष्यनक्षत्रशोभनयोगानां संयोगः प्रायिकोऽत एव चिरकालसम्भवोऽयं योगः ।

दिवसाधिपे सूर्ये, जीवे बृहस्पतौ, पुष्यर्क्षे पुष्यनक्षत्रे। अस्यां कर्तव्यमाह--

गोविन्दद्वादशीं प्राप्य गच्छेच्छ्रीपुरुषोत्तमम्।
विष्णुलोकमवाप्नोति मोक्षङ्गङ्गाम्बुमज्जनात्॥

पुरुषोत्तमं जगन्नाथक्षेत्रम्। पूर्ववचनस्थफलमुच्चार्य्य सङ्कल्प्य पठेत्।

महापातकसङ्गानि यानि पापानि सन्ति मे।
गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि!॥

इति (पद्मपुराणोक्तं) पठित्वा गङ्गायां स्नायात्।

अथ होलिका। सायाह्नव्यापिन्यां चतुर्दशीविद्धायां पूर्णिमायां भद्राशून्यायां होलिकादाहः। तथाहि--

सायाह्ने होलिकां कुर्यात् पूर्वाह्णे क्रीडनङ्गवाम्। इति।
श्रावणी दौर्गनवमी दूर्वा चैव हुताशिनी॥
पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित्।
भद्रायां दीपिता होली राष्ट्रभङ्गङ्करोति वै॥ इति।
भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा॥ इति।

यदि च पूर्वदिने सायाह्ने भद्राशून्या सा न लभ्यते तदा परदिने। तथाहि ब्रह्मवैवर्ते--

होलिका पौर्णमासी तु सायाह्नव्यापिनी मता।
भूतविद्धे न कर्तव्ये दर्शपूर्णे कदाचन॥ इति।

यत्तु--प्रतिपद्यग्निकरणं द्वितीयायां गवार्चनम्।
क्षत्रच्छेदङ्करिष्येते वित्तनाशं कुलक्षयम्॥

इत्यादिवचनमुत्तरदिने होलिकानिषेधकं, तच्च पूर्वदिने सायाह्ने भद्राशून्यपूर्णिमालाभे वेदितव्यम्। अत्र तिथितत्वचिन्तामणौ तु दिनद्वये प्रदोषव्याप्तौ परैवेति। यदि च पूर्वदिने चतुर्दशी प्रदोषव्यापिनी, परदिने पूर्णिमा सायाह्नात् प्रागेव समाप्यते, तदा पूर्वदिने संपूर्णरात्रौ भद्रासत्वात्तन्निषेधात्परेऽहनि प्रतिपद्येव कुर्यादिति ठक्कुराः। (१)

---

(१) तथोक्तं भविष्ये —

पूर्णापूर्वदलं यावत्तावज्जीवति वत्सरः। मृते परदले नक्तं दाहस्तस्य विधीयते॥
भद्राया दीपिता होली राज्यभङ्गं करोति च। नगरस्य च नैवेष्टा तस्मात्तां परिवर्जयेत्॥

एवं स्मृत्यन्तरेऽपि—

दिनार्धात्परतोऽपि स्यात्फाल्गुनी पूर्णिमा यदि। रात्रौ भद्राऽवसाने तु होलिका दीप्यते तदा॥

इत्यादिवचनैर्भद्रायुक्तपूर्णिमायां होलिकादहनमनिष्टफलजनकम्। एवं पूर्णिमोत्तरसमये प्रतिपद्यपि तन्निषेध उक्तस्तिथिचन्द्रिकायाम्—

नन्दायां होलिकापूजा भद्रायां गोऽर्चनात्मकम्। न कदाऽपि हि कर्त्तव्यं मनुराह प्रजापतिः॥

तथाच—प्रतिपत्पलमेकं चेद्धोलिदाहो विधीयते। हाहाभूतं जगत्सर्वं रुण्डमुण्डं च जायते॥

अथ होलिकादाहे वायुफलमाह—

पूर्वे वायौ होलिकायां प्रजाभूपालयोः सुखम् ।
पलायनं च दुर्भिक्षं दक्षिणे जायते ध्रुवम् ॥
पश्चिमे तृणसम्पत्तिरुत्तरे धान्यसम्भवः ।
यदीशानेऽप्यनावृष्टिरूर्ध्वं राजा समाश्रयेत् ॥

इति द्वादशमासकृत्यम्

—oo:o:oo—

## अथ ग्रहणादिविचारः ।

तच्च यज्जन्मराश्यादौ ग्रहणं तस्य ग्रहणदर्शने दोषमाह—

धीधर्मनैधनमदव्ययशर्मकर्मजन्मोपगं रविशशिग्रहणं नराणाम् ।
पुत्रायुरर्थपरिनाशकमीक्षितं स्याद्रोगं वपुःक्षयमनःक्लममातनोति ॥

तथा च पञ्चमनवमाष्टमसप्तमद्वादशचतुर्थदशमजन्मराशौ ग्रहणे तद्ग्रहणदर्शने रोगादिकं भवतीत्यतो नावलोकनीयमिति भावः ॥ (१)

---

तथा चोक्तं विद्याविनोदे—

नन्दायां नरकं घोरं भद्रायां देशनाशनम् । दुर्भिक्षं च चतुर्दश्यां करोत्येव हुताशनः ॥

तथाच नारदः—

प्रतिपद्भूतभद्रासु याऽर्चिता होलिका दिवा संवत्सरे च तद्राष्ट्रं पुरं दहति साऽद्भुतम् ॥

एभिर्वचनैः पूर्णिमोत्तरप्रतिपदि होलिकादहनं निषिद्ध्यते। परं यदि पूर्वदिने भद्राशून्यपूर्णिमावकाशो न भवेत्परदिनेऽस्तमयात्पूर्वमेव पूर्णिमाविरामस्तदोभयत्र दोषदर्शनाद्विशेषविचारावसरः। तत्र मैथिलस्मार्त्तकाराणां मतेन परदिने प्रदोषे प्रतिपद्येव होलिकादहनम्। तथा चोक्तं भविष्योत्तरे—

सार्धयामत्रयं चेत्स्याद् द्वितीयदिवसे यदि । प्रतिपद्वर्धमाना तु तदा सा होलिका मता ॥

तथा च—असत्यामपि पूर्णायां वृद्धित्वे होलिकाऽर्चनम् ।
क्रियमाणं च नन्दायां शान्तिर्भवति नो क्षयः ॥

तथाचोक्तं राजमार्त्तण्डे—

भद्रस्य पुच्छं शुभहेतुरन्ये वदन्ति केचिन्न तु युक्तमेतत् ।
शुष्केन्धनैर्दीप्तहुताशनस्य किमग्रभागेऽपि हि शीतता स्यात् ? ॥

इत्यनेन मैथिलैर्भद्रापुच्छे होलिकादहनं न क्रियते। परन्तु निर्णयसिन्धुकाराः परदिने रात्रौ पूर्णिमाया अलाभात्पूर्वदिने भद्रापुच्छे होलिकादहनमादिशन्ति। तत्र पूर्णिमातिथिमाने षष्टिदण्डात्मके सार्धैकोनविंशतिदण्डादनन्तरं सार्धद्वाविंशतिदण्डावधिकं दण्डत्रयपरिमितं तत्पुच्छमानं वेद्यम्। षष्ट्यधिकाल्पमाने तु तत्र परिणाम्यमिति।

तत्राग्निमन्त्रमुच्चार्य दीपयेद्धोलिकां शुभाम् । भगलिङ्गाङ्कितैर्वाक्यैः क्रीडितव्यं पिशाचवत् ॥

तत्र दीपमन्त्रस्तु—दीपयाम्यत्र ते घोरां चितिं राक्षसि ! ते नमः ।
हिताय सर्वजगतां प्रीतये पार्वतीपतेः ॥
वन्दिताऽसि सुरेन्द्रेण ब्रह्माच्युतशिवादिभिः । अतस्त्वं पाहि नो भीत्या भूषिता भूतिदा भव ॥

(१) तथाचोक्तं ज्यौतिषे—

जन्मर्क्षे निधनं ग्रहे जनिभतो घातः क्षतिः श्रीर्व्यथा

अथ ग्रहणे श्राद्धमावश्यकम्। तथाहि शातातपः—

सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति॥ इति।

अथ यावत्पर्यन्तं दर्शनयोग्य उपरागस्तावानेव पुण्यकालः। तथा हि जाबालिः—"चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः।"

उपरक्तदर्शनानन्तरं यावद्दर्शनयोग्य उपरागस्तावानेव पुण्यकालो न संक्रान्तिवदधिकोऽपि। द्वैतपरिशिष्टे अत्र शातातपवचने राहुदर्शने इति देवलवचने च 'दर्शनगोचर, इति दर्शनपदाभ्यां चाक्षुषज्ञानविषयस्यैव निमित्तता, चाक्षुषज्ञान एव दर्शनपदस्य शक्तत्वात्। तच्च ज्ञानं स्नानादिकर्तुरेव लाघवात्। एवं च स्पृष्टेऽपि ग्रासमपश्यतो नाधिकारः। नचैवं मज्जनकाल एव पुण्यकालो न स्यादिति वाच्यम्। गोचरपदस्य तद्योग्यतालक्षकत्वात्। सा च योग्यता दर्शनबाधकमानाभावरूपा, सा च मेघगुल्मादिव्यवहितेऽप्यस्ति, मेघाद्यपगमे तद्दर्शस्यापि सम्भवात्। अन्यदृष्टे ग्रासेऽन्यस्य स्नानाधिकार इति केचित्, तन्न, लाघवेन सामानाधिकरण्यस्यैव प्रयोजकत्वात्। राहुदर्शनसंक्रान्तीत्यादि अन्यस्यातिप्रसक्तत्वाच्च इति-केशवमिश्राः॥ (१)।

अथात्र श्राद्धे फलमाह—

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने।
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्॥
गुणवत्सर्वकामीयं पितृणामुपतिष्ठते।

मनुः—रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते॥

एतट्टीकायामचिरोदित इत्यत्र कालपेक्षायां त्रिमुहूर्तः प्रातःकालो ग्राह्यः। विष्णुपुराणे यथोक्तं—

रेखाप्रभृत्यथादित्ये त्रिमुहूर्तं गते रवौ।
प्रातस्तत्र स्मृतः कालो भागः सोऽन्तस्तु पञ्चमः॥ इतिकुल्लूकभट्टः।

अथ राहुदर्शने तु रात्रावपि श्राद्धं कर्तव्यमेव। तथाहि विष्णुः—

सन्ध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः।

---

चिन्तासौख्यकलत्रदौस्थ्यमृतयः स्युर्माननाशाः सुखम्।
लाभोऽपाय इति क्रमात्तदशुभध्वस्त्यै जपः स्वर्णगो-
दानं शान्तिरथो ग्रहं त्वशुभदं नो वीक्ष्यमाहुः परे॥ मु० चि०।

(१) वराहसंहितायाम्—

यद्येकस्मिन् मासे ग्रहणं रविसोमयोस्तदा क्षितिपाः। स्वबलक्षोभैः संक्षयमायान्त्यतिशस्त्रकोपश्च॥
अर्कग्रहात्तु शशिनो ग्रहणं यदि दृश्यते ततो विप्राः। नैकक्रतुफलभाजो भवन्ति मुदिताः प्रजाश्चैव॥
सोमग्रहे निवृत्ते पक्षान्ते यदि भवेद्ग्रहोऽर्कस्य। तत्रामयः प्रजानां दम्पत्योर्वैमनस्यमन्योऽन्यम्॥

तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम् ॥

देवलः—राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च ॥ इति ।

अत्र स्नानदानादीत्यादिपदं तर्पणाद्युपलक्षकम् ।

संवत्सरप्रदीपधृतस्मृतिश्च—
सूतके मृतके चैव न दोषो राहुदर्शने ।
स्नानमात्रं तु कर्तव्यं दानश्राद्धविवर्ज्जितम् ॥ इति ।

तथा चाशौचिना ग्रहणे स्नानमात्रं कर्तव्यं न तु दानादिकमिति भावः ।
अथ नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात् ।
ग्रहकाले च नाश्नीयात् (१) स्नात्वाऽश्नीयाच्च मुक्तयोः ॥

---

( १ ) ग्रहणपूर्वभोजननिषेधमाह **वृद्धगौतमः**—
सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् । चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ॥
**ग्रस्तोदये विशेषमाह वृद्धवशिष्ठः**—ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् ।
**बालवृद्धातुरविषये वाचस्पतिमिश्रधृतमार्कण्डेयपुराणवचनम्**—
सायाह्ने ग्रहणं चेत्स्यादपराह्णे न भोजनम् । अपराह्णे न मध्याह्ने, मध्याह्ने चेन्न सङ्गवे ।
सङ्गवे ग्रहणं चेत्स्यान्न पूर्वां भोजनक्रियाम् ॥
**अत्र व्यासः**—
सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः । सर्वं गङ्गासमं तोयं ग्रहणे नात्र संशयः ॥
इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं स्मृतम् । गङ्गातीरे तु सम्प्राप्ते इन्दोः कोटी रवेर्दश ॥
**अत्र श्राद्धे विशेषफलमाह शातातपः**—
चन्द्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत् । तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे ॥
**अत्र श्राद्धमामान्नेणैव कर्तव्यमित्युक्तं प्रचेतसा**—
आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा । आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि ॥
**अत्र आमान्नं वितुषमात्रमेव धान्यम् । तदक्षालितमेव देयं यथोक्तं तेनैव**—
निरग्नेरामश्राद्धे तु अन्नं न क्षालयेत्कचित् । वृद्धौ तु क्षालयेन्नित्यं संक्रमे ग्रहणेषु च ॥
**अथ चन्द्रग्रहे मन्त्रग्रहणनिषेधो यथानिर्णयसिन्धौ**—
चन्द्रग्रहे तु या दीक्षा या दीक्षा व्रतचारिणाम् । वनस्थस्य च या दीक्षा दारिद्र्यं सप्तजन्मसु ॥
**पुराणान्तरे**—
पितुर्मन्त्रं न गृह्णीयात्तथा मातामहस्य च । सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥
**तथा च**—पत्युर्मन्त्रं पितुर्मन्त्रं न गृह्णीयाद्वै कदाचन ।
अनेन गुरुजनरहिताया अपि स्त्रियाः स्वामिनो मन्त्रग्रहणे दोषः । तत्र कलशे गुरुजनप्राणान् संस्थाप्य सम्पूज्य वस्त्रादिभिस्ततः पात्रे ग्राह्यमन्त्रं लेखयित्वा समर्पणम् । पश्चात्ततो ग्रहणमुक्तं **तन्त्रान्तरे स्वप्नलब्धमन्त्रप्रकरणे**—
स्वप्नलब्धे तु कलशे गुरोः प्राणान् निवेशयेत् । सम्पूज्य विधिना तस्मान्मन्त्रो ग्राह्यः स्मृतो बुधैः ॥
**अथ ग्रहणे संकल्पविचारः**—"मध्यग्रहः पर्वविरामकाले" इति सिद्धान्तशिरोमणिवचनात् स्पर्शकालमारभ्य दर्शान्तं पूर्णिमान्तं वा पूर्वतिथेरुल्लेखः । तदुत्तरं प्रतिपद उल्लेखः कार्यः । तिथ्युल्लेखं विना संकल्पस्याङ्गवैकल्यात्फलबाधकता विशेयेति ।

मुक्तयोरिति चन्द्रसूर्ययोरिति शेषः। अत्रार्द्धरात्रानन्तरग्रहणे दिन-भोजने न दोषः। किन्तु श्राद्धादिकरणे भोजनजन्यमशौचं भवत्येवेति व्रत-पद्धतिः। तथा च श्राद्धकरणेच्छावता तादृशचन्द्रग्रासे दिनेऽपि भोजनं न कर्त्तव्यमिति तात्पर्य्यम्। 'मुक्ते शशिनि भुञ्जीत' इति वचनाद् ग्रहणमुक्त्य-नन्तरं भोक्तव्यम्। तत्रापि यद्युपाधिवशान्मुक्तिर्न दृश्यते तदा मुक्तिकाल-मनुमीय भोक्तव्यम्। तथाहि—

मेघमालादिदोषेन मुक्तिर्यत्र न दृश्यते।
आकलय्य तु तत्कालं भुञ्जीताथाविशङ्कितः॥

स्मृतिः—सूर्यवारे रविग्रासश्चन्द्रवारे शशिग्रहः।
चूडामणिरिति ख्यातस्तत्रानन्तफलं स्मृतम्॥
इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं स्मृतम्।
गङ्गातीरे तु सम्प्राप्ते इन्दोः कोटी रवेर्दश॥

अथ ग्रहणादौ फलमाह, व्यवहाररत्नावल्याम्—

कृत्तिका भरणी पुष्यं पूर्वभाद्रस्तथा मघा।
विशाखा फाल्गुनी पूर्वा आग्नेयं मण्डलं विदुः॥
अस्मिन्नक्षत्रयोगे यदि चलति मही चन्द्रसूर्यग्रहो वा
निर्घातोल्काऽशनीनां कथमपि पतने दर्शने चापि केतोः।
दह्यन्ते काननानि प्रबलपुरगृहास्तीव्रतेजाः पतङ्गो-
रोगैः पित्तज्वराद्यैर्निखिलतनुगतैः पीड्यते जीवलोकः॥
स्वाती हस्ताश्विनी चित्रा मृगशीर्षम्पुनर्वसू।
उत्तरा फाल्गुनी चैव वायव्यं मण्डलं विदुः॥
प्राकाराट्टालचैत्याः पृथुगृहतरवो गोपुरा भूधराश्च
आमूलं शीर्यमाणाः पवनजववशाद्यान्ति भूभागमाशु।
नारीगोगर्भपातास्तदनु च नियतं मन्दसस्या धरित्री
दुर्भिक्षं चातिकष्टं भवति च महती व्याधिपीडा जनानाम्॥

चैत्यो ग्रामोपलक्षकवृक्षः, पृथुः स्थूलः। गोपुरन्तु बहिर्द्वारमितिकोशः। जवो वेगः।

ज्येष्ठाऽनुराधारोहिण्यः श्रवणाऽभिजितं तथा।
उत्तरा च धनिष्ठा च माहेन्द्रं मण्डलं विदुः॥
लोको नित्यप्रमोदी विनययुतमना नष्टरोगात्रकाशो-
दाने भोगेऽनुरक्तः सकलगुणयुतः सर्वदुःखैर्विमुक्तः।
कीर्तिं विस्तीर्य रम्यां त्रिभुवनफलके वर्द्धयन् धर्मवृद्धं
कोषैः पूर्णो नरेन्द्रो जनपदसहितो वर्धते श्रीसमेतः।
शतभिषा चोत्तराभाद्रः पूर्वाषाढश्च रेवती।

आर्द्रा मूलं तथाऽश्लेषा वारुणं मण्डलंविदुः ॥
गर्जन्ते(१)वारिवाहा जलभरनमिताः क्षीरगर्भाश्च गावः
सस्यैः पूर्णा धरित्री ज्वरभयरहिता जन्तवः सर्वदैव ॥

## अथ मलमासविचारः

मलमासस्तु(२) शुक्लप्रतिपदादिः। तथाहि—

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥

अस्यार्थः-इन्द्राग्नियागः शुक्लप्रतिपदादिः स मासादिः। अग्नीषोमयोर्यागः पूर्णिमायाम्, सा मध्यं पितृसोमयोर्यागः अमावास्यायां स मासान्त इति। ज्यौतिषे-

गतेऽब्दद्वितये सार्द्धे पञ्चपक्षे दिनत्रये।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः ॥

तथा च द्वात्रिंशन्मासमष्टादशदिनं चातीत्य मलमासो भवतीति पर्यवसितम्। "चैत्रादयः सप्त सदाऽधिमासाः" इति वचनाच्चैत्रादिसप्तमासेष्वेव मलमास इति केचित्, इदमुपलक्षणम्, कार्तिकादिमासस्यापि मलमासत्वस्योक्तत्वात्। तथाहि ज्योतिषे--

दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित्।
नपुंसकत्वं भवति न तु पौषस्य तु क्वचित् ॥

---

(१) श्लोकोऽयमत्रापूर्णोऽस्ति, किञ्चिदन्यादृशोऽयमेवाद्भुतसागरादुद्धृत्य पूर्णो विलिख्यते-

गर्जन्ते वारिवाहा जलभरनमिताः पूर्यमाणाः क्षणेन
क्रीडन्ते मीनहंसाः पयसि जनपदा हर्षिणः कामभाजः।
वृक्षाः पुष्पैः समेताः फलभरनमिताः क्षीरवत्यश्च गावः
सस्यैः पूर्णा धरित्री सुखभरनमिता जन्तवः सर्वदैव ॥

(२) अधिको मासोऽधिमासोऽर्थात् सौरमाससंख्याभ्यो यावन्तोऽधिकाश्चान्द्रमासास्तावन्तोऽधिमासाः प्रोच्यन्ते। तल्लक्षणमाह गार्ग्यः—

अमावास्याद्वयं यत्र रविसंक्रान्तिवर्जितम्। मलमासः स विज्ञेयो मासः शुद्धाख्य उत्तरः ॥

एवमाह भृगुः—एकराशिस्थिते सूर्ये यदा दशद्वयं भवेत्।
हव्यकव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः।"

कस्मादधिमासात् कश्च मासोऽधिमास इत्युक्तं ज्यौतिषे—

चैत्रात्परं भाद्रपदोऽधिमासस्ततः शुचिस्तत्परतस्तु माधवः।
इषस्ततः श्रावणसंज्ञकस्ततो ज्येष्ठो भवेत्तत्परतस्तु चैत्रः ॥

एष नियमो मध्यममानेन संभावनार्थमेव न तु निश्चयार्थम्। तथेष्टशकादधिमासज्ञानाय गणितकरणार्थं कस्यचित्पद्यम्—

शाके खरामतिथ्यूने गोभूभिस्तष्टते क्रमात्। मेषात् षट्शक्रवह्न्युग्रखाष्टशेषेऽधिको भवेत् ॥

अधिमासे क्षौरं न कार्यमित्युक्तं राजमार्तण्डे—

अधिमासे च यत् क्षौरं जन्ममासे चजन्मभे। न भवेत्तत्र कल्याणं शुभकृन्नहि संस्मृतम् ॥

नपुंसकत्वं मलमासस्यम् ।

कदाचित् कार्तिकादिमासत्रये संक्रान्तिद्वययुक्तः शुक्लादिचान्द्रः क्षयाख्यो भवति । तत्क्षयाख्यात् पूर्वं परतश्च मलमासप्रसक्तिर्भवति तथाहि ज्योतिषे— असंक्रांतिमासोऽधिमासः स्फुटः स्याद् द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् । क्षयः कार्त्तिकादित्रये नान्यतः स्यात्तदा वर्षमध्येऽधिमासद्वयं स्यात् ॥ इति ।

क्षयाख्यः क्षयनामकः, न तु वस्तुगत्या लुप्तमासः । अत एव मासयोः सङ्कर एव क्षयो—, न तु कस्यापि लोप इति मासमीमांसायां गोकुलनाथोपाध्यायाः । तथा च यत्र कार्त्तिके क्षयाख्यः (१) तत्र कार्त्तिककृष्ण-

---

(१) यदाऽमान्तःद्वयान्तः संक्रान्दिद्वयं भवेत् तदा शुक्लादिकः क्षयाख्यश्चान्द्रमासः स्फुटमानेन भवति । तथाचोक्तं **भास्कराचार्यैः** "द्विसंक्रान्तिमासः क्षयाख्यः कदाचित्" ।

**एवमेवोक्तं स्मृतौ—**

'आद्यन्तदर्शयोर्मध्ये भानोरेव तयोर्यदि । संक्रान्तिद्वितयं स्याच्चेन्न्यूनमासः स उच्यते ॥'

यथा मार्गशीर्षामावास्यामुल्लङ्घ्य धनुःसंक्रान्तिस्ततोऽग्रिमान्तात्प्रागेव मकरसंक्रान्तिरभूत्तत्र 'मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः । चैत्राद्यः स ज्ञेयः । इति शुक्लादिचान्द्रमासलक्षणेन मार्गशीर्षामावास्याऽवसाने वृश्चिकार्कत्वान्मार्गमासपूर्त्तिर्जाता । तथाऽग्रिमाऽमावास्यान्ते मकरार्कत्वान्माघमासपूर्त्तिर्जाता । तत्र धनूराशिस्थितेऽर्केऽमान्तपतनाभावात्पृथक् पौषमासस्यानवकाशात्पूर्त्तिमासगणनया मार्गानन्तरं माघस्य प्राप्त्या पौषस्य क्षयः । वस्तुतस्तु तत्र माघे एव पौषस्यापि प्रविष्टत्वादेकस्मिन्नेव तस्मिन् क्षयाख्ये मासे तिथिपूर्वार्धपरार्धविभागवशेन पूर्वापरौ मासौ भवतस्तथाचोक्तं **मुहूर्तचिन्तामणौ**—"क्षयमासकस्तु । द्विसंक्रमस्तत्र विभागयोः स्तस्तिथेर्हि मासौ प्रथमान्त्यसंज्ञौ" ॥ **तथाच तट्टीकायां ( पीयूषधारायाम् )**—

"तिथ्यर्धे प्रथमे पूर्वोऽपरस्मिन्नपरस्तथा । मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥"

तत्र क्षयमासे कस्या अपि तिथेः सम्पूर्णमानं प्रसाध्य, तत्पूर्वार्धे पूर्वमासस्य तत्परार्धमग्रिममासस्य तिथिर्भवति । तत्र पूर्ववर्षीयपौषमासीयकृष्णाष्टम्यां मृतस्य क्षयपौषमासीयकृष्णाष्टम्याः पूर्वभागे वार्षिकम् । तथा पूर्ववर्षीयमाघकृष्णाष्टम्यां मृतस्य क्षयपौषकृष्णाष्टम्याः परभागे (माघांशे) वार्षिकम् । एवं क्षयमासीयायाः कस्याश्चित्तिथेः पूर्वभागे मृतस्याग्रिमवर्षे पूर्वमासे, परभागे मृतस्याग्रिमवर्षे परमासे वार्षिकं भवति । यदि कस्या अपि तिथेः पूर्वार्धं दिनव्यापि न परार्धम्, तदा परमासीयतत्तिथ्यंशस्य रात्रिगतत्वाद्रात्रौ तु श्राद्धनिषेधाच्छ्राद्धलोपापत्तिसंभवात्पूर्वमासीयतत्तिथिभागे दिवैव कर्तव्यम् । **तत्र संकल्पवाक्यमेवं** प्रयोज्यम्—

"ॐ अद्यामुके मासि अमुके पक्षेऽमुकतिथावमुकगोत्रस्य पितुरमुकशर्मणोऽमुकमासीयामुकपक्षीयामुकतिथिप्राप्तवार्षिकश्राद्धमहं करिष्य इति । अतः पूर्ववर्षे एकमासान्तरितयोर्मार्गपौषशुक्लाष्टम्योर्मृतयोः क्षयमासे एकस्मिन् दिने वार्षिकम् । तत्र पूर्वमासमृतस्य पूर्वं पश्चान्मासमृतस्य पश्चादितिक्रमोऽर्थसिद्ध एव । यदि मध्याह्ने तिथ्यारम्भः परदिने मध्याह्नासन्नसमये तत्तिथ्यन्तस्तदा पूर्वदिने पूर्वमासमृतस्य वार्षिकम् ।

एवं क्षयमासे तिथिपूर्वार्धपरार्धभागयोर्मृतयोरग्रिमवर्षे एकमासान्तरितयोः पूर्वपरमासीयतत्क्षयतिथ्योर्वार्षिकम् । तथा च क्षयमासस्य मलमासवच्छुक्लादिकत्वात्तत्पूर्वापरपक्षमृतयोरग्रिमवर्षे व्युत्क्रमेणार्थात्पूर्वपक्षमृतस्य पश्चात् परपक्षमृतस्य पूर्वमेवाब्दिकम् ।

अथ मलमासवदचिरसमयसम्भवो नाम क्षयमासः । बहुभिर्वर्षैरस्य संभवो भवतीत्युक्तं 'क्षयाख्यः कदाचित्' 'तादृशोऽपि कार्त्तिकादित्रयमासे एव । कार्त्तिक आदिर्यस्य स मार्गशीर्ष-

मार्गशुक्लपक्षयो रविक्रान्तत्वमेव, कार्त्तिकशुक्लमार्गकृष्णपक्षयोः क्षयकार्तिकशुक्लक्षयमार्गकृष्णत्वेनाभिधानमात्रं न तु शुक्लादिकार्त्तिकलोपः। एवं मार्गादावपि ज्ञेयमिति भावः। न च मासालोपे मलमासद्वयप्रसक्तौ च सत्यां संवत्सरस्य चतुर्दशमासात्मकत्वापत्तिरिष्टापत्तौ, "द्वादशमासाः संवत्सर त्रयोदशमासाः संवत्सर" इति श्रुतेः। 'त्रयोदशस्तु श्रुतिराह मासश्चतुर्दशः क्वापि न चास्ति दृष्टः' इति भीमपराक्रमधृतस्मृतेश्च विरोध आपद्येत इति वाच्यम्। मलमासद्वयप्रसक्तिसत्त्वेऽपि—

एकस्मिन्नप्यब्दे यत्रैतल्लक्ष्म मासयोरुभयोः।
तत्रोत्तरोऽधिमासः स्फुटगत्या भवति चार्केन्द्वोः॥
एकत्र मासद्वितयं यदि स्याद्वर्षेऽधिकन्तत्र परोऽधिमासः।
मासद्वयस्य मध्ये तु संक्रान्तिर्न यदा भवेत्।
प्रकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुचः॥

इत्यादि भीमपराक्रमहेमाद्रिकृत्यमहार्णवद्वैतपरिशिष्टदैवज्ञबान्धवादिग्रन्थधृतार्षविशेषवचनेभ्यः क्षयाख्यमासोत्तरयथोक्तलक्षणवतो मासस्यैव मलमासत्वे क्षयाख्यपूर्वमासस्य च प्रकृतत्वे सिद्धे क्षयाख्यपूर्वमासस्य मलमासत्वप्रतिषेधात्। एतल्लक्ष्म असंक्रान्तत्वरूपमलमासचिह्नमुत्तरः क्षयाख्योत्तरः। एकत्रेति वर्ष इत्यन्वयि मासद्वितयमिति, अधिकमित्यन्वयः। तथा च क्षयाख्यपूर्वस्य न मलमासता, किन्तु क्षयाख्योत्तरमासस्यैवेति भावः। मैथिलव्यवहारोऽप्येवमेवेति। अत्र यदाऽनेकमासानां यथोक्तमलमासलक्षणं तदा पूर्वमासानां मलमासता तावन्नास्ति किन्तु चरमस्यैव यथोक्तलक्षणवत इति। क्षयमासः कर्मार्ह एव अपवादकाभावात्, इति च कृत्यमहार्णवे वाचस्पतिमिश्राः प्राहुरिति न किञ्चिदनुपपन्नम्।

अथ मलमासे कर्तव्याऽकर्तव्ये। तत्र बृहस्पतिः—

नित्यनैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे।

---

मासस्तदादित्रये मार्गपौषमाघेषु। न तु कार्त्तिकमार्गपौषेषु। मिथुनाष्टादशांशे रव्युच्चस्याधुनातनस्थित्या धनुरष्टादशांशे तन्नीचावस्थानान्नीचासन्ने गत्यधिकसंभवाद्गत्यधिकत्वेन स्वल्पकालेन राशिभोगकरणात्स्पष्टचान्द्रमासान्तःपातीयसावनदिनेभ्यः स्पष्टसौरमासान्तःपातिसावनदिनानामल्पत्वात्क्षयमाससंभवः। तत्र धनुषः पूर्वापरयोर्वृश्चिकमकरयोरेव विशेषसंभवात्तुलायास्तदपेक्षया दूरगत्वाद्दूरगतत्वेऽपि तुलावत्कुम्भस्याप्यन्तरितत्वात्कार्त्तिकचतुष्टये, एवन्तदोचितः पाठः संभवेन्न कार्त्तिकादित्रये। अयं मासनियमस्तु रव्युच्चं द्वन्द्वाष्टादशांशे स्थिरं मत्वाऽऽचार्यैरुक्तस्तद्गतेश्चिरकालेनाप्यनुलम्भात्। वस्तुतस्तु बहुभिर्वर्षसहस्रैरन्तरं पतत्येवातो भास्कराचार्यमाक्षिपन् कमलाकर आह—

इदानीन्तनार्थं न शास्त्रं प्रवृत्तं न सत् कार्त्तिकादित्रयोत्थं तदुक्तम्।
अतोऽयं क्षयः सर्वचान्द्रेष्वपीत्थं न जानन्ति सद्वासनाज्ञानशून्याः।
सुयुक्ता न मुन्युक्तिरप्यत्र शास्त्रे भवेत् कार्यवर्यस्य या दृग्विरुद्धा॥ इति॥

तीर्थस्नानं गज(१)च्छायां प्रेतस्नानं तथैव च ॥
गर्भे वार्द्धुषिकृत्ये च मृतानां पिण्डकर्मसु ।
सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः ॥

नित्यं सन्ध्यावन्दनादि, नैमित्तिकं ग्रहणशान्त्यादिनिमित्तकस्नानादि, तीर्थस्नानं द्वितीयाद्यावृत्ति, प्रथमावृत्तिस्नानाकरणस्याग्रेऽनुपदमेव वक्ष्यमाणत्वात् । (२)गजच्छायेति तन्निमित्तकश्राद्धमित्यर्थः प्रेतस्नानं मरणनिमित्तकस्नानम् । गर्भे गर्भाधाननिमित्तककर्मणि । वार्द्धुषिकृत्ये ऋणादौ, मृतानां पिण्डकर्मसु पूरकादिपिण्डेषु, एकादशाहश्राद्धादौ च नाधिमासं विदुरिति । प्रतिरोधकमित्यादि तथा चैतत्सर्वं मलमासेऽपि कर्तव्यमिति भावः । बृहस्पतिः—

मलिम्लुचे त्वनावृत्तं तीर्थस्नानमपि त्यजेत् ।

अनावृत्तं प्रथमावृत्तम् । ज्यौतिषे—

अग्न्याधेयं प्रतिष्ठाञ्च यज्ञदानव्रतानि च ।
देवव्रतवृषोत्सर्गचूडाकरणमेखलाः
माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत् ॥
वापीकूपतडागादिप्रतिष्ठा यज्ञकर्म च ।

प्रतिष्ठा उद्यापनं, शिवादिप्रतिष्ठा वा । मेखला उपनयनं, महादानं तुलापुरुषादिदानम् । स्मृतिः—

सपिण्डीकरणादूर्द्ध्वं यत् किञ्चिच्छ्राद्धिकं भवेत् ।
इष्टं वाऽप्यथवा पूर्त्तं तन्न कुर्यान्मलिम्लुचे ।

श्राद्धिकं श्राद्धम, इष्टं पूर्तं चाह रत्नाकरे जातूकर्णः-

अग्निहोत्रं तपस्सत्यं वेदानां चानुपालनम् ।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥

---

(१) गजच्छायां रविचन्द्रग्रहणनिमित्तकश्राद्धम् । **तथाचोक्तं म० म० वाचस्पतिमिश्रकृतद्वैतनिर्णये**—"गजच्छाया तु हस्तादित्ये मघाचन्द्रे कृष्णपक्षे त्रयोदश्यां भवति । तथा च यद्याश्विनो मलमासस्तदा तदुत्तरचतुर्दश्यां ( द्वि० आ० कृ० १३ ) कन्यारविसंक्रान्तौ कथं ततः प्राक् गजच्छाया, यदि च भाद्रपदो मलमासस्तदा द्वितीयभाद्रामावास्यामुल्लङ्घ्य कन्यासंक्रान्तेः क मलमासे गजच्छाया । **तस्मात्कल्पतरुप्रभृतौ** निबन्धे या गजच्छाया परिभाषिता सेह न संभवतीति श्राद्धाध्याये हलायुधधर्माधिकरणिकैरन्यैव गजच्छायोक्ता । तद्यथा 'राहुर्वै हस्ती भूत्वा चन्द्रमसं ग्रसतीति श्रुत्या राहुणा यश्चन्द्रमसो ग्रासः सा गजच्छाया सूर्यग्रासेऽपि चन्द्रस्यैव ग्रसनीयत्वेन प्रसङ्गाद्रविग्रसनं, तेन गजच्छाया सूर्यचन्द्रोपरागश्राद्धं तदपि मलमासे क्रियते इति सिद्धम् ॥'" अर्थात् मलमासाश्विनकृष्णत्रयोदश्यां चित्रायां रवेः स्थितत्वान्मघानक्षत्रयुक्तत्वेऽपि हस्तार्काभावात् न गजच्छायेति स्पष्टाशय इति । **एवमेवोक्तं कृत्यशिरोमणौ**—

सैंहिकेयो यदा भानुं ग्रसते पर्वसन्धिषु । गजच्छाया तु सा प्रोक्ता तत्र श्राद्धं प्रकल्पयेत् ॥

**इति वराहवचनम् ।**

(२) गजच्छायेत्यनेन ग्रहणनिमित्तकश्राद्धम् । नहि योगविशेषनिमित्तकश्राद्धम् ।

वापीकूपतडागादि देवतायतनानि च ।
अन्नप्रदानमारामाः पूर्तमित्यभिधीयते ॥

मरणदिनमारभ्य एकादशमासिककालाभ्यन्तरे यदि मलमासस्तदा मासिकमेकं वर्द्धयेत् । तथाहि विष्णुसूत्रम्—"संवत्सराभ्यन्तरे यद्यधिमासपातो भवति तदा मासिकार्थं दिनमेकं वर्द्धयेत्" इति । (१) संवत्सराभ्यन्तरे एकादशमासिककालाभ्यन्तरे, एकादशमासिककालश्च एकादशमासपूर्त्तिदिनाव्यवहितोत्तरक्षयाहतिथिः । तथाच तदभ्यन्तरे मलमासपाते सप्तदशश्राद्धसङ्कल्पः । त्रयोदशे मासि पूर्णे क्षयाहे वार्षिकमिति तात्पर्यम् । अत्र संवत्सरशब्द एकादशमासपरः ऋष्यशृङ्गवचनैकवाक्यताबलादिति द्वैतनिर्णयः ।

मरणदिनमारभ्य द्वादशमासस्य मलमासत्वे न मासिकवृद्धिः, तेन मलमास एव क्षयाहे प्रथमवार्षिकम् । तथाहि ज्यौतिषे—

जातकर्मणि यच्छ्राद्धं नवश्राद्धं तथैव च ।
प्रतिसंवत्सरश्राद्धं मलमासेऽपि तत् स्मृतम् ॥ इति ।

नवश्राद्धं चतुर्थपञ्चमनवमैकादशदिनश्राद्धं, प्रतिसंवत्सरश्राद्धं प्रथमवार्षिकम् । स्मृतिः–"असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं बुधैः ।"

असंक्रान्ते संक्रान्तिशून्ये मलमास इति यावत् । लघुहारीतः—

प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया बुधैः ।
क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ॥

प्रत्यब्दं प्रतिवर्षं, पिण्डक्रिया सांवत्सरिकं क्वचित् एकादशमासिककालाभ्यन्तरे मलमासपाते, "आद्यं मुक्त्वा तु वत्सर—" मिति मरणदिनमारभ्य द्वादशमासस्य मलमासत्वे मलमास एव द्वादशे मासि क्षयाहे प्रथमवार्षिकमिति तात्पर्यम् । न चैवं सति आश्विनकृष्णामावास्यायां मृतस्याग्रिमभाद्रस्य मलमासत्वे द्वितीयभाद्रकृष्णामावास्यायामेवोक्तरीत्या प्रथमवार्षिकं

(१) यथा श्रावणशुक्लैकादश्यां कश्चिन्मृतस्तदाऽग्रिमवर्षीयाषाढान्तावधिकमासेषु कस्यचन मासस्य मलमासत्वे एकमासिकवृद्धिः कार्या । कथमन्यथाऽग्रिमश्रावणशुक्लैकादश्यां तद्वार्षिकं सङ्गच्छते । मृतमासीयक्षयपक्षीयक्षयतिथौ वार्षिकसिद्ध्यर्थमेवैकमासिकवृद्धिकरणम् ।

तथोक्तं व्यासेन वार्षिकतिथिलक्षणम्—

मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि । प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तद्विदुः ॥

तथा च स्मृतौ—

यन्मासि यद्दले यस्यां तिथौ यो हि मृतो भवेत् । तन्मासि तद्दले तस्यां तिथौ तद्वार्षिकं स्मृतम् ॥

एकादशमासिकपूर्त्तिस्तु मृतमासाद् द्वादशे मासि भवति, द्वादशमासपूर्त्तिस्तु मृतमासात् त्रयोदशेऽग्रिमवर्षीयमृतमासे क्षयतिथौ भवति । तत्राग्रिमाब्दीयमृतमासस्य मलमासत्वे मासिकवृद्धिकरणेन मृतमासादग्रिममासीयक्षयतिथौ वार्षिकं चाल्यते तेन प्रथमवार्षिकं मलमासे एवेति युक्तियुक्तम् ।

तस्याश्विनत्वाभावात्, भाद्रोल्लेखादाश्विनोल्लेखासङ्गतिरिति भ्रमितव्यम्। शुक्लादिरीत्या मरणतिथेः कृष्णादिरीत्या मलमासीयामावास्याया भाद्रीयामावास्यात्वान्न भाद्रोल्लेखासङ्गरिति। आश्विनशुक्लप्रतिपन्मृतस्याग्रिमभाद्रस्य मलमासत्वे तु एकादशमासिककालाभ्यन्तरे मलमासपातात्तत्र मासिकवृद्ध्यावश्यकत्वादग्रे आश्विनशुक्लप्रतिपद्येव प्रथमवार्षिकम्। एवमाश्विनशुक्लद्वितीयादिपूर्णिमान्ते मृते अग्रिमभाद्रस्य मलमासत्वेऽपि एकादशमासिककालाभ्यन्तर एव मलमासपातात्, तत्रापि मासिकवृद्ध्या आश्विनशुक्लद्वितीयादिमरणतिथावेव वार्षिकमित्यवगन्तव्यमिति सर्वं सुस्थम्। मलमासे यो म्रियते तस्यापि पञ्चदशमासिकानि भवन्तीति रुद्रधरः। तेन तत्रापि सप्तदशश्राद्धमेव भवति, त्रयोदश मासि मरणपक्षतिथौ वार्षिकम्। एतावत्समुदायार्थपर्य्यालोचनयाऽयमर्थः पर्य्यवसित-एकादशमासिककालाभ्यन्तरे मलमासे सम्भाव्यमाने सप्तदशश्राद्धं सङ्कल्प्य कर्तव्यम्। त्रयोदशे मासि शुद्धेऽग्रिमवर्षीयतन्मासे मरणतिथौ वार्षिकम्। द्वादशमासस्य मलमासत्वे तु न मासिकवृद्धिः, तेन षोडशश्राद्धमेव, तत्र प्रथमवार्षिकं मलमास एव क्षयाहे द्वादशे मासि, तत्र शुक्लादिमासपरिग्रहेण उत्तरमासीयकृष्णपक्षस्य पूर्वमासीयकृष्णपक्षत्वान्मासोल्लेखासङ्गतिरपि नास्ति द्वितीयादिवार्षिकन्तु मलमासपाते सर्वदैव त्रयोदशे मासि क्षयाहे। प्रथमवैशाखशुक्लपक्षमृतद्वितीयवैशाखकृष्णपक्षमृतयोर्म्मासिकवृद्ध्यावश्यकत्वात्तन्मरणपक्ष एव वार्षिकं, व्युत्क्रमेण वार्षिकमकिंचित्करमिति व्रतपद्धत्यादिसम्मतो व्यवहारसिद्धश्च पन्थाः। गोकुलनाथोपाध्यायास्तु—"संवत्सराभ्यन्तरे यद्यधिमासपातः स्यात्तदा मासिकार्थं दिनमेकं वर्द्धयेदिति विष्णुसूत्रेऽधिमासपातशब्देन पौर्णमास्यन्तक्षणप्रतिपदाद्यक्षणोभयघटितलवेन सह मध्यमचिह्नसम्बन्धो विवक्षणीयः। तथा सत्येवाधिमाससम्बन्धो व्यवहारणीयो न तु पूर्वापरचिह्नमात्रेण, अन्यथा विष्णुसूत्रस्थपातपदोपादानवैयर्थ्यप्रसङ्गात्, अत एव 'इन्द्राग्नी यत्र हूयेते' इत्यादिलघुहारीतवचने व्यावर्त्तकस्य मध्यमचिह्नस्याभिधानमपि सङ्गच्छते। एतेनैषमो द्वितीयभाद्रकृष्णपक्षे मृतस्याग्रिमवर्षे आश्विनकृष्णपक्षे प्रथमाब्दिकं प्रसज्येत इति मासोल्लेखासङ्गतिरिति परास्तम्, कृष्णपक्षस्य तस्य संवत्सराभ्यन्तरे निरुक्तमध्यमचिह्नसम्बन्धात्मकाधिमासपाताभावात्। अत एव (१)मलमासशुक्लपक्षमृतानामेव मासिकवृद्धिः। न तु मलमासकृष्णपक्षमृतानामपीति। एवं चाश्विनकृष्णपक्षमृतस्याग्रिमभाद्रस्य मलमासत्वे संवत्सराभ्यन्तरे निरुक्ताधिमासपातादाश्विनकृष्णपक्ष एव प्रथमाब्दिकं, न तु द्वितीयभाद्रकृष्णपक्षे इति न मासोल्लेखासंगतिर्न वा विष्णुसूत्रस्थसंवत्सरपदस्यैकादश-

(१) मलमासमृतस्य पुनस्तन्मासस्य मलमासत्वे वार्षिकं मलमासीयतत्क्षयपक्षीयक्षयतिथौ कर्त्तव्यम्। न तु शुद्धमासीयक्षयतिथौ। तथाऽऽह पैठीनसिः—

'मलमासमृतानां तु श्राद्धं यत् प्रतिवार्षिकम्। मलमासे तु कर्त्तव्यं नान्येषां तु कदाचन॥'

मासिककालोपलक्षकत्व” मिति प्राहुरित्येतद्विषयविस्तारो गोकुलनाथोपाध्याय-कृतमासमीमांसायां द्रष्टव्यः ।

ज्यौतिषे—प्रतिसंवत्सरं श्राद्धमशौचात् पतितं च यत् ।
मलमासेऽपि कर्त्तव्यमिति भागुरिरब्रवीत् ॥

तथा चाशौचेन सांवत्सरिकश्राद्धप्रतिरोधेऽशौचान्ते मलमासेऽपि कर्त्तव्य-मिति भावः ।

## अथ एकोद्दिष्टादिश्राद्धनिर्णयः

ऋष्यशृङ्गः—देये पितॄणां श्राद्धे वै अशौचञ्जायते यदि ।
अशौचे तु व्यतीते वै तेषां श्राद्धंप्रदीयते ॥

अशौचं प्रयत्नानपनेयम्, अन्यस्य श्राद्धदिनेऽशौचविधना निरासा-दिति पितृभक्तिः । यद्यपि पितॄणामिति बहुवचनं तथापि मृताहश्राद्धवि-षयमिति सम्प्रदायः । अशौचान्ते कुत्र कर्त्तव्यमित्याकांक्षायामाह श्रीदत्तः—

शूचीभूतेन दातव्यं या तिथिः प्रतिपद्यते ।
सा तिथिस्तत्र कर्त्तव्या न त्वन्या वै कदाचन ॥

तथा चाशौचान्तद्वितीयदिने श्राद्धं कर्त्तव्यम् । एकभुक्तादिनियमस्तु अशौचान्तिमदिन एव, तत्राशौचस्यातन्त्रत्वादेकादशाहश्राद्धवत्, एवञ्चा-शौचान्तद्वितीयदिने या तिथिः प्राप्यते तदुल्लेख एव सङ्कल्पवाक्ये कर्त्तव्यो न तु क्षयाहतिथेः । ‘या तिथिः प्रतिपद्यते’ इति प्रागुक्तात् । अत्र सङ्कल्पमाह द्वैतपरिशिष्टे—ॐ अद्येत्यादि क्षयाहे प्रतिबन्धकाशौचव्यपगमे अमुकगोत्रस्य पितुरमुकशर्मण इत्यादि ।

रजोयोगेन श्राद्धप्रतिरोधे रजोयोगात् पञ्चमदिने स्त्रिया श्राद्धं कर्त्तव्यम् ।

“दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति ।”

इति वचनात् । सङ्कल्पस्तत्रापि पूर्ववत् ।

क्षयाहाज्ञानविस्मरणरूपप्रतिबन्धेन क्षयाहे श्राद्धाकरणे श्राद्धकालमाह लघुहारीतः—

श्राद्धविघ्ने समुत्पन्ने क्षयाहेऽविदिते तथा ।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः ॥

मृताहाज्ञान आह प्रचेताः—अविज्ञाते मृताहे अमावास्यायां श्रवणदिवसे वा श्राद्धं कर्त्तव्यमिति शेषः । पितृभक्तौ श्रीदत्तस्तु मृताहविशेषं जानत एवाद्य मृताह इति विस्मरणं श्राद्धविघ्नमेव बोद्धव्यम् । अयमर्थः विस्मृत-श्राद्धमेकादश्यामेव कर्त्तव्यम् । अज्ञातमृताहश्राद्धं त्वेकादश्याममावास्यायां श्रवणदिवसे वेति विशेषः । प्रागुक्तहारीतप्रचेतो वचने अभिधाय श्राद्ध-चिन्तामणिः ‘यस्मिन्दिने देशान्तरमृतः श्रूयते स एव श्रवणदिवसः, अत्र एकादश्यमावास्ये विघ्ननिमित्ताव्यवहिते ग्राह्ये । मासज्ञाने तु सांवत्सरिके कर्त्तव्ये तन्मासस्यैव एकादश्यादौ । मासपक्षयोरज्ञाने यत्र मासि श्रूयते

तस्यैव। एवं च मृताहविस्मरणेऽप्येकादश्यामेव क्षयाहस्याविदितत्वादिति तदयं संक्षेपः-श्राद्धविघ्न एकादश्याम् ( आसन्नाग्रिमायामित्यर्थः )। तिथ्यज्ञाने तत्पक्षज्ञाने तत्पक्षैकादश्यां तिथिपक्षयोरज्ञाने तन्मासस्यैकादश्याममावास्यायां वा, एषामज्ञाने यस्यां तिथौ मृतः श्रूयते तस्यामेव, तत्तिथेरपि विस्मरणे तन्मासस्यैकादश्याममावास्यायां वा एकोद्दिष्टम्। श्रव(१)णमासस्यापि विस्मरणे न कार्यं मानाभावादिति। शुद्धिचन्द्रिकायां रघुपतिमिश्रस्तु श्राद्धविघ्ने क्षयाहे दैवादकरणे क्षयाहाज्ञाने च एकादश्यां कर्त्तव्यं, पक्षाज्ञाने कृष्णपक्षे कर्त्तव्यमित्यर्थः। मासाज्ञाने चैत्रे, इदन्तु एकोद्दिष्टश्राद्धपरमन्यथा आद्यश्राद्धाकरणे एकादश्यान्तत्कृत्वा पूतः स्यात्, कथमन्यथा गयाश्राद्धं विना तस्य पातित्यमिति। प्रागुक्तहारीतप्रचेतोवचने अभिधाय स्मृतिसारे तु अत्र च मृताहाज्ञानमद्यमृताह इति विस्मरणं श्राद्धविघ्नमेव बोद्धव्यम्। अविदित इति विस्मरणमपि गृहीतन्तस्याप्यज्ञानरूपत्वात्। प्रचेतो वाक्ये तु 'श्रवण'-इत्यभिधानात्तिथिविशेषाज्ञानमेव विवक्षितमिति। विष्णुपुराणे तु-

चतुर्द्दश्यष्टमी षष्ठी अमावास्याऽथ पूर्णिमा।
पर्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव च॥
तैलस्त्रीमांससम्भोगी पर्वस्वेतेषु वै पुमान्।
विण्मूत्रभोजनं नाम प्रयाति नरके मृतः॥

अत्र तैलं तिलभवं, तेन सार्षपादितैले पक्वतैले च न दोष इति व्रतपद्धतौ रुद्रधरः।

## अथ जन्मदिनकृत्यम्

अत्र(२)भोजराजः—

यो जन्ममासे क्षुरकर्म यात्रां कर्णस्य वेधं कुरुते हि मोहात्।

---

( १ ) मरणमासस्येति वा पाठः।

( २ ) दीपिकायाम्—

कृतान्तकुजयोर्वारे यस्य जन्मतिथिर्भवेत्। अनृक्षयोगसम्प्राप्तौ विघ्नस्तस्य पदे पदे॥

**स्कान्दे**-खण्डनं नखकेशानां मैथुनाध्वगमौ तथा। आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत्॥

**वृद्धमनुः**—मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा॥
स्नात्वा जन्मदिने स्त्रियं परिहरन् प्राप्नोत्यभीष्टां श्रियं
मत्स्यान् मोचयतो द्विजाय ददतश्चायुश्चिरं वर्धते।
सक्तून् खादति तश्च तस्य रिपवो मृत्युं प्रयान्ति ध्रुवं
भुंक्ते यस्तु निरामिषं स हि भवेज्जन्मान्तरे पण्डितः॥

**दीपिकायान्तु**—जन्मर्क्षयुक्ता यदि जन्ममासे यस्य ध्रुवं जन्मतिथिर्भवेद्धै।
भवन्ति तद्वत्सरमेव तावन्नैरुज्यसम्मानसुखानि तस्य॥

**तिथितत्त्वे**—घस्रद्वये जन्मतिथिर्यदि स्यात्पूज्या तदा जन्म संयुता च।
असंयुता भेन दिनद्वयेऽपि पूज्या परा भवतीह यत्नात्॥

नूनं स रोगं धनपुत्रनाशं प्राप्नोति मूढो वधबन्धनानि ॥
क्षुरकर्म न कुर्वीत जन्मासे च जन्मभे ।

जन्ममासे उपनयनविधानात्तदङ्गसशिखवपने न दोष इति स्मार्ताः । श्रीपतिव्यवहारसमुच्चये—

स्नानं दानं तपो विद्या सर्वमङ्गल्यवर्द्धनम् ।
उद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते ॥

मङ्गल्यवर्द्धनमुपनयनादि । जन्मदिनकर्त्तव्यमाह—

तिलोद्वर्ती तिलस्नायी तिलहोता तिलप्रदः ।
तिलभुक् तिलवापी च षट्तिली नावसीदति ।

तथा च जन्मदिने तिलोद्वर्तनादि षट् करणीयम् ।

तत्राश्वत्थामाबलिव्यासहनुमद्विभीषणकृपपरशुरामजन्मनक्षत्रप्रजापतिमार्कण्डेयाः क्रमेण पूज्याः । ततो वरं प्रार्थयेत्—

ओं मार्कण्डेय ! महाभाग ! सप्तकल्पान्तजीवन ! ॥
चिरजीवी यथा त्वं भो भविष्यामि तथामुने ! इति ।

ततः समधुरदुग्धपानमनेन—

ॐ सतिलं गुडसंमिश्रमञ्जल्यर्द्धमितं पयः ।
मार्कण्डेयवरं लब्ध्वा पिबाम्यायुषहेवते ॥ इति ।

अस्मिन् दिने आमिषभोजनं मैथुनं क्षौराध्वगमनहिंसादिकं विवर्जयेत् ।

## अथ वास्तुविचारः

तत्र व्रतपद्धतौ यथा—कार्तिकाग्रहणफाल्गुनवैशाखश्रावणाः ( मासाः ) । शुक्लपक्षः । रिक्ताऽमावास्याभिन्नतिथयः, रोहिणीमृगशिरः पुनर्वसूपुष्योत्तरफल्गुनीहस्तादित्रयमनुराधाज्येष्ठामूलोत्तराषाढश्रवणादित्रयोत्तरभाद्ररेवत्यो नक्षत्राणि, सोमबुधगुरुशनिशुक्रवाराः प्रशस्ताः । तत्र गृहे हस्तमात्रं खातं खनित्वा जलेनापूर्य तज्जले गणपतिवास्तोष्पत्यष्टनागधरित्रीः पूजयेत् । तत्र धरित्र्यर्घदानमन्त्रः—

ॐ हिरण्यगर्भे वसुधे शेषस्योपरि शायिनि

---

तस्या उभयदिनप्राप्तौ यस्मिन्नहनि पूर्वाह्णे जन्मनक्षत्रयोगस्तद्दिने कृत्यम् ।

**षट्त्रिंशन्मते—**

दीपोच्छिष्टं तु यत्तैलं रात्रौ रथ्याहतं च यत् । अभ्यङ्गाच्चैव यच्छिष्टं भुक्त्वा नक्तेन शुद्धयति ॥

तैलग्रहणाद् घृते न दोष इति **प्रायश्चित्तमयूखे । स्मृतिः—( कृत्यशिरोमणौ )—**

घृतं च सार्षपं तैलं यत्तैलं पुष्पवासितम् । अदुष्टं पक्वतैलं च स्नानाभ्यङ्गेषु नित्यता ॥

**प्रचेताः**—तैलाभ्यङ्गनिषेधे तु तिलं तैलं विवर्जयेत् ॥

**तत्र वारदोषे प्रतिप्रसवमाह स्मृतिः—**

रवौ पुष्पं गुरौ दूर्वा भौमवारे च मृत्तिकाम् । भार्गवे गोमयं दद्यात्तैलदोषोपशान्तये ॥

**नक्षत्रेऽपि वर्ज्यान्याह**—चित्राऽश्विनीहस्तश्रवणा निषिद्धाः ।

वसामि तव पृष्ठेऽहं गृहाणार्घ्यं धरित्रि ! मे ॥ इति ।

ततो दधिभक्ताम्रपल्लवबहुवारपल्लवान् गर्त्ते प्रक्षिप्य मृत्तिकाभिः पूरयेत् (१) ॥

---

(१) **वासस्थलसमीपे वर्ज्यवृक्षाः**—लि० पु० ६ अ० । दारिद्र्यं प्रतिवचनानि—

यत्र कण्टकिनो वृक्षाः यत्र निष्पावबल्लरी । ब्रह्मवृक्षश्च यत्रास्ति सभार्यस्त्वं समाविश ॥
अगस्त्यार्कादयो वापि बन्धुजीवो गृहेषु वै । करवीरो विशेषेण नन्द्यावर्त्तमथापि वा ॥
मल्लिका वा गृहे येषां सभार्यस्त्वं समाविश । कन्या च यत्र वै वल्ली द्रोही वा च जटी गृहे ।
बहुला कदली यत्र सभार्यस्त्वं समाविश । न्यग्रोधं वा गृहे येषामश्वत्थं चूतमेव च ।
उदुम्बरं वा पनसं सभार्यस्त्वं समाविश । यस्य काकगृहं निम्बे आरामे वा गृहेऽपि वा ॥
एका दासी गृहे यत्र त्रिगवं पञ्चमाहिषम् । षडश्वं सप्तमातङ्गं सभार्यस्त्वं समाविश ॥

**भूमिलक्षणम्**—पूर्वप्लवो वृद्धिकरो धनदश्चोत्तरप्लवः ।

श्वेता विप्रस्य, पीता क्षत्रियस्य, रक्ता वैश्यस्य, कृष्णा शूद्रस्य हिता इत्यादि **वास्तुराजवल्लभादौ द्रष्टव्यम् । अथ गृहारम्भे विहितमासा उक्ता राजमार्त्तण्डे**—

मासाः श्रावणवैशाखमाघकार्त्तिकफाल्गुनाः । प्रशस्तास्ते गृहारम्भे पत्नीपुत्रसमृद्धिदाः ॥
नाशो भाद्राश्विने मासि मार्गे चैव धनक्षयः । ज्येष्ठे तु द्रव्यहानिः स्यादाषाढे मरणं पशोः ॥
पौषे मासि भवेन्मृत्युश्चैत्रे चैव रिपोर्भयम् । धनं स्याच्छेषमासेषु सर्वकामफलं भवेत् ॥
शिलेष्टकादिगेहानि न कुर्यान्मासि गर्हिते । तृणकाष्ठादिगेहानां मासदोषो न विद्यते ॥

**अथ कूपखननदिक्फलमुक्तं मुहूर्त्तचिन्तामणौ**—

कूपे वास्तोर्मध्यदेशेऽर्थनाशस्त्वैशान्यादौ पुष्टिरैश्वर्यवृद्धिः ।
सूनोर्नाशः स्त्रीविनाशो मृतिश्च संपत्पीडा शत्रुतः स्याच्च सौख्यम् ॥

**एतदनुसारिचक्रम्**—



## अथ संक्षेपत आह्निकम्।

तत्र मनुः-मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः।
दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा॥
छायायामन्धकारे वा रात्रावहनि वा द्विजः।
यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च॥

उच्चारो विष्ठा, समुत्सर्गस्त्यागः। बाधाभयेषु व्याघ्रादिकृतविनाशभयेषु।
पराशरः—'नियम्य प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः।'
लैङ्गे—पवित्रं दक्षिणे कृत्वा विण्मूत्रं च समुत्सृजेत्॥
पवित्रं यज्ञोपवीतमिति महेशादयः। दक्षिणे इति दक्षिणकर्णे इति शेषः।
विट् विष्ठा। मिताक्षरायां—
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः (१)॥

---

रविभात्कूपचक्रम्—

| दिशा | न० सं० फलानि। |
|---|---|
| मध्ये— | ३-स्वादुजलम्। |
| पूर्वे— | ३-खण्डितजलम्। |
| आग्नेयाम्— | ३-स्वादुजलम्। |
| दक्षिणे— | ३-जलहानिः। |
| नैऋत्ये— | ३-स्वादुजलम्। |
| पश्चिमे— | ३-क्षीरोदकम्। |
| वायुको०— | ३-मिश्रितजलम्। |
| उत्तरे— | ३-मिष्टजलम्। |
| ईशाने— | ३-क्षारजलम्। |

अथ रोहिणीनक्षत्रात् कूपचक्रम्।

| दिशा | न० सं० फलानि। |
|---|---|
| मध्ये— | ३-शीघ्रस्वादु। |
| पूर्वे— | ३-निर्जलम्। |
| अग्नि०— | ३-आशुजलम्। |
| दक्षिणे- | ३-निर्जलम्। |
| नैऋत्ये०— | ३-अमृतजलम्। |
| पश्चिमे— | ३-निर्मलजलम्। |
| वायव्ये— | ३-जलहानिः। |
| उत्तरे— | ३-मधुरजलम्। |
| ईशाने— | ३-क्षीरजलम्। |

मृ. रे. चि. अनु. ह. अश्वि. पुष्य. पुन. स्वा. श्र. एतानि भानि चन्द्रशुक्रगुरुबुधवाराः। रिक्ताभिन्नतिथयः शुभाः॥

अथ कूपखनने विहितनक्षत्राण्युक्तानि तत्रैव—
'हस्तमैत्रमघापुष्यधनिष्ठोत्तरवारुणैः। प्राजापत्येऽथ कूपानां खननं मुनिभिः स्मृतम्।
अथ तत्रैव वृक्षरोपणविहितनक्षत्राण्युक्तानि—
'शतभिषगुत्तरकमलजमूलेन्द्राग्निहरिभेषु शुभेषु। वाक्पतिसितशशिदिवसोदयेषु तरुरोपणं शस्तम्॥
तत्र वृक्षरोपणमन्त्रः—
'ॐ वसुधेति च शीतेति पुण्यदेति धरेति च। नमस्ते सुभगे! देवि! द्रुमोऽयं वर्धतामिति॥

(१) अनुदकमूत्रपुरीषकरणे प्रायश्चित्तमाहाङ्गिराः—
कृते मूत्रे पुरीषे वा यदा नैवोदकं भवेत्। स्नात्वा लब्ध्वोदकं पश्चात्सचैलस्तु विशुद्ध्यति।
तथा चोक्तं प्रायश्चित्तमयूखे—
अटव्यामटमानस्य ब्राह्मणस्य विशेषतः। प्रणष्टसलिले देशे कथं शुद्धिर्विधीयते।
अपां दृष्ट्वैव विप्रस्तु कुर्याच्चैव सचैलकम्। गायत्र्यष्टशतं जप्यं स्नानमेतत्समाचरेत्॥

अतन्द्रितोऽनलसः। अभ्युद्धृतैरित्यनेन जलान्तः शौचनिषेध इति। शौचेमनुः—एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश।

उभयोः सप्त दातव्याः मृदः शुद्धिमभीप्सता॥

एकत्र करे वामकरे इत्यर्थः। उभयोरिति हस्तयोरिति शेषः। बृहन्नारदीये—'तिस्रस्तिस्रः प्रदातव्याः पा(१)दयोर्मृत्तिकाः पृथक्।'

यदा तूक्तशौचेनापि गन्धलेपक्षयो न भवति तदा 'यावदपैत्यमेध्याक्तात्' इति वचनादधिकसंख्याऽपि मृद् दातव्या इति कुल्लूकभट्टः। मृत्तिकालेपक्षयपर्यन्तं जलं दद्यात्। प्रयोगपारिजाते--

कुर्याद्द्वादश गण्डूषान् पुरीषोत्सर्जने द्विजः।
मूत्रे चत्वार एवोक्ता भोजनान्ते च षोडश॥

पुरीषं विष्ठा। आचमने मनुः—

हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः॥

अद्भिः जलैः। मनुटीकायां षट् छिद्राणि जलेन स्पृशेत्। तानि शिरःस्थानि घ्राणचक्षुःश्रोत्रादीनि गृहीतव्यानि। शुद्धिविवेके यमः—

प्रयान्त्याचमतां यास्तु शरीरे विप्लुषो नृणाम्।
उच्छिष्टदोषो नास्त्यत्र भूमितुल्यास्तु ताः स्मृताः॥

विप्लुषो जलविन्दवः (२) दन्तकाष्ठे मिताक्षरायाम्--॥

कण्टकीक्षीरवृक्षोत्थं द्वादशाङ्गुलसम्मितम्।
कनिष्ठिकाग्रवत्स्थूलं पूर्वार्द्धकृतकूर्चकम्॥

---

अथ विना यज्ञोपवीतेन भोजनकरणे तत्रैव वृद्धपराशरः—

यज्ञोपवीतेन विना भोजनं कुरुते द्विजः। अथ मूत्रपुरीषैर्वा रेतः सेचनमेव वा॥
त्रिरात्रोपोषितो विप्रः पादकृच्छ्रं तु भूमिपः। अहोरात्रोषितो वैश्यः शुद्धिरेषा पुरातनी॥

रात्रौ दिवा वा स्वप्नदोषे जाते कर्त्तव्यमाह मनुः—

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्॥ अ० २।१८१॥

'ओं पुनर्मामैत्विन्द्रियं सूर्यः॥' इत्येतामृचं वारत्रयं पठेदित्यर्थः।

(१) अथ पादप्रक्षालने विशेषः—

ऊर्ध्वंजंघेषु विप्रेषु प्रक्षाल्य चरणद्वयम्। तावद्भवति चाण्डालो यावद्गङ्गां न मज्जति॥
अनेनोपविश्य पादप्रक्षालनं विधेयं न तूत्थितेनेति।

(२) अथ वर्णभेदेन दन्तधावनप्रमाणभेदमाह गर्गः—

द्वादशाङ्गुलं विप्राणां क्षत्रियाणां नवाङ्गुलम्। अष्टाङ्गुलं तु वैश्यानां शूद्राणां सप्तसम्मितम्॥
चतुरङ्गुलमानं तु नारीणां नात्र संशयः।

तत्र दिक् फलम्—

प्राङ्मुखस्य धृतिः सौख्यं शरीरारोग्यमेव च॥ दक्षिणेन तथा कुष्ठं पश्चिमेन पराजयः॥
उत्तरेण गवां नाशः स्त्रीणां परिजनस्य च॥

दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा ।

वृक्षोत्थमित्यनेन लोष्ट्रतृणाङ्गुल्यादिनिषेधः । नारसिंहे—

अपामार्गश्च बिल्वं च अर्कश्चोदुम्बरस्तथा ।
वदरीतिन्दुकास्त्वेते प्रशस्ता दन्तधावने ॥

अपामार्गः चिचिरी इति प्रसिद्धः । स्कान्दे—

आम्रातकधात्रीणामेकोनखदिरोद्भवम् ।
क्षीरवृक्षोद्भवं चापि प्रशस्तं दन्तधावने ॥

विष्णु—'न पलाशं दन्तधावनं स्यान्न श्लेष्मातकारिष्टविभीतकधवकोविदारशमीपिलुपिप्पलेंगुदगुग्गुलम् ।' श्लेष्मातकः बहुआर इति ख्यातः । अरिष्टं हरिड इति प्रसिद्धम् । कोविदारः कोइआर इति ख्यातः । बिभीतकं बहेड़ा इति प्रसिद्धम् । 'इङ्गुदस्तापसतरु'रित्यमरः । गर्गः—

कुशङ्काशम्पलाशञ्च शिशपां यस्तु भक्षयेत् ।
तावद्भवति चाण्डालो यावद्गंङ्गां न पश्यति ॥

उशनाः—कार्पासन्दन्तकाष्ठञ्च विष्णोरपि हरेच्छ्रियम् ।

प्रतिपद्दर्शषष्ठीषु नवम्यां श्राद्धवासरे ॥
दन्तानाङ्काष्ठसंयोगो दहत्यासप्तमङ्कुलम् ॥

अन्यच्च—समिधा क्षीरवृक्षस्य क्षयाहोपोषणं विनां ।

दन्तकाष्ठं कुर्यादिति शेषः । क्षयाहपदं श्राद्धमात्रदिनोपलक्षकम् । उपोषणपदमुपवासदिनस्य तदुषसोऽप्युपलक्षकम् । विष्णुः 'उदङ्मुखः प्राङ्मुखो वा दद्याद्वै दन्तकाष्ठक' मित्यादि । दन्तधावनमन्त्रस्तु स्मृतिसारे—

आयुर्बलं यशो वर्चः प्रजापशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वन्नो धेहि वनस्पते ! ॥

दन्तकाष्ठप्रमाणमाह द्वैतपरिशिष्टे—

वितस्तिः प्रथमः कल्पः । प्रादेशप्रामाणं मध्यमः । अष्टांगुलमपकृष्टः । चतुरंगुलमत्यन्तापकृष्टः । जाबालः—

द्वादशांगुलं विप्राणां क्षत्रियाणां नवांगुलम् ।
सप्तागुलं च वैश्यानां शूद्राणां च षडंगुलम् ॥ इति ।

ततस्स्नानं छन्दोगपरिशिष्टे—

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ।

अनातुर इति विशेषणादातुरस्य ज्वराद्यभिभूतस्य स्नानाकरणे न दोषः (१) ।

---

**( १ ) जले मूत्रकफपुरीषपातने दोषमाह वामनपुराणे—**

मूत्रश्लेष्मपुरीषाणि यैरुत्सृष्टानि वारिणि । ते पात्यन्ते च विण्मूत्रे दुर्गन्धे पूयपूरिते ॥
जले मूत्रपुरीषं वा वाप्यादौ क्षालयन्गुदम् । स गच्छेद्रौरवं मर्त्यो गुदरोगी भवेत्परम् ॥

मनुः—शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम् ।
शिवगङ्गेति तत्प्रोक्तं तत्र स्नात्वा दिवं व्रजेत् ॥

---

**स्नानावश्यकत्वमुक्तं विष्णुना, पराशरः—**

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि । पवित्राणां तथा जाप्ये दाने च विधिदैविके ॥

जलमध्ये तु यः कश्चिद्द्विजातिर्ज्ञानदुर्बलः । निष्पीडयति तद्वस्त्रं स्नानं तस्य वृथा भवेत् ॥

अत्र तद्वस्त्रं स्नानवस्त्रम् । अतो जलाशयादुपर्येत्य स्नानवस्त्रपीडनमुचितमिति ।

**हारीतः**—'नातुरो न भुक्त्वा न जीर्णवासा न नग्नो नाश्नन् नावशक्षिको नालङ्कृतो नाजस्रं नाशाते जले नाकुले नाशुचौ न प्रभूतजले न नामेरल्पे न चत्वरे नोपद्वारे न संध्यायां न निशायां स्नायात् ॥'

**मेधातिथिः**—न जलं ताडयेत्पद्भ्यां न जले तु मलं त्यजेत् ॥

**भविष्ये**—स्नानानामथ सर्वेषां वारुणेन च मानवः । कर्तुमर्हति कर्माणि विधिवत्सर्वथा द्विजः ॥

असामर्थ्याच्छरीरस्य कालशक्त्यपेक्षया । मन्त्रस्नानादयः पञ्च एक इच्छन्ति सूरयः ॥

अशिरस्कं भवेत्स्नानं स्नानाशक्तौ हि कर्मिणाम् ।
आर्द्रेण वाससा वाऽपि मार्जनं दैहिकं स्मृतम् ॥

इति **कृत्यमहार्णवे** लिखितम् ।

**तत्र स्नानानन्तरमङ्गप्रोषणं किञ्चित्कालपर्यन्तं निषिद्धमित्युक्तं शातातपेन—**

तिस्रः कोट्योऽर्धकोटी च यावद्रोमाणि मानवे । स्रवन्ति सर्वतीर्थानि तस्मान्न परिमार्जयेत् ॥

**तथाच देवलेनाप्युक्तम्**—देवा पिबन्ति शिरसो मुखस्य पितरस्तथा ।
चक्षुसोऽपि च गन्धर्वा अधस्तात्सर्वजन्तवः ॥
अतस्त्वङ्गानि वस्त्रेण पाणिना न च मर्जयेत् ॥

अत्र वस्त्रेण परिधानवस्त्रेण निषेधः । तद्भिन्नेन अङ्गप्रोक्षणवस्त्रेण न दोष इति **शिष्टाचारः** ।

**अथोक्तं विष्णुना**—'नाप्रक्षालितं पूर्वधृतं वा वासो बिभ्रियात्' ।

**तथा च याज्ञवल्क्येनोक्तम्—**

यावद्देवानृषींश्चैव पितॄंश्चैव न तर्पयेत् । तावन्न पीडयेद्वस्त्रं येन स्नातो न चोदके ॥

निष्पीडयति यः पूर्वं स्नानवस्त्रं तु तर्पणात् । निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः ॥

**वस्त्रपरिधाने प्रचेताः—**

स्वयं धौतेन कर्त्तव्या क्रिया धर्म्या विपश्चिता । न च राजकधौतेन नाधौतेन भवेत् क्वचित् ॥

पुत्रमित्रकलत्रेण स्वज्ञातिबान्धवेन च । दासवर्गेण यद्धौतं तत्पवित्रमिति स्थितिः ॥

**तथाच भारते**-न स्यूतेन न दग्धेन पारक्येन विशेषतः । मूषिकोत्कीर्णजीर्णेन कर्म कुर्याद्विचक्षणः ॥

अत्र भिन्नभिन्नवस्त्रखण्डयोः सीवनेनैकत्वं यत्सम्पाद्यते, तत्सीवनं दोषकरम् । एकस्मिन् वस्त्रे विदीर्णे यत्तस्य दार्ढ्यार्थं छिद्रनिरासार्थं सीवनं, तन्न पूजादौ दूषितमिति म० म० **न्यायपञ्चानन देवनाथठक्कुरैः स्मृतिकौमुद्यां** लिखितम् ।

अथ गालितवस्त्रप्रसारणे **स्मृतिः—**

प्रागग्रमुदगग्रं वा धौतं चैव प्रसारयेत् । दक्षिणाग्रं पश्चिमाग्रं पुनः प्रक्षालनाच्छुचिः ॥

विना धौतपरिधानेन किमपि कर्म न कर्त्तव्यमित्याह—

विकक्षोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च । श्रौतं स्मार्त्तं तथा कर्म न नग्नश्चिन्तयेदपि ॥

अत्र विकक्षः परिधानासंवृतकक्षः ।

**स्नानदीपिकायाम्—**

इक्षुरापः पयो मूलं ताम्बूलं फलमौषधम् । भक्षयित्वाऽपि कुर्वीत स्नानदानादिकाः क्रियाः ॥

इत्यातुरपरं, न शक्तजनविषयकम् ।

दिवं स्वर्गमुक्तम्। योगियाज्ञवल्क्यः—

नद्यां स्नानानि पुण्यानि तड़ागे मध्यमानि च।
वापीकूपे जघन्यानि गृहे प्रत्यवराणि च॥

नद्यामपि प्रथमं महानद्यान्तदसम्भवेऽल्पनद्याम्। महानद्यस्तु ब्रह्म-पुराणोक्ताः—

गोदावरी भीमरथी तुङ्गभद्रा च वेणिका।
तापी पयोष्णी विन्ध्यस्य दक्षिणे च प्रकीर्त्तिताः॥
भागीरथी नर्मदा च यमुना च सरस्वती।
विशोका च वितस्ता च विन्ध्यस्योत्तरसंस्थिताः॥
द्वादशैता महानद्यो देवर्षिक्षेत्रसंभवाः॥

नदीलक्षणं तु श्रावणकृत्येऽभिहितम्। सप्रवाहजले प्रवाहाभिमुखेन, तदन्यजले सूर्याभिमुखेन स्नानम्। तथाहि नारसिंहे—

नद्यां स्रवत्सु च स्नायात्प्रतिस्रोतःस्थितो द्विजः।
तडागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत्॥

परखानितखाते पंचपिण्डमृत्तिकामुद्धृत्य स्नायात्। तथाहि—योगियाज्ञवल्क्यः—

पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिणि।

मनुः—स्मृत्वोंकारं च गायत्रीं निबध्नीयाच्छिखां ततः॥ इति।

स्नानानन्तरं ब्राह्मे:—

योगो दानं तपो होमः स्वाध्यायः पितृतर्पणम्।
भस्मीभवति तत्सर्वमूर्द्ध्वपुण्ड्रं विना कृतम्॥

भारते—जाह्नवीतीरसम्भूतां मृदं मूर्ध्ना विभर्ति यः।
विभर्ति रूपमर्कस्य तमो नाशाय केवलम्॥

ब्राह्मे—उर्द्ध्वपुण्ड्रं मृदा कुर्यात्त्रिपुण्ड्रम्भस्मना(१) सदा।

---

यज्ञोपवीतेन विना न किमपि कर्म कर्त्तव्यमित्युक्तं कृत्यमहार्णवे—
सदोपवीतिना भाव्यं सदा वद्धशिखेन च। विशिखो व्युपवीती च यत्करोति न तत्कृतम्॥
पिबतो भुञ्जतश्चापि मेहतोऽनुपवीतिनः। प्रणायामं त्रिषट्कं वा नक्तत्रिकयुतं क्रमात्॥
गोभिलगृह्यसूत्रे—
एकवस्त्रेण यत् स्नानं सूच्याविद्धेन चैव हि। स्नानेन न भवेच्छुद्धिः श्रिया च परिहीयते॥
विष्णुपुराणे—स्नातो नाङ्गानि मृज्यात्तु स्नानशाट्या न पाणिना॥
अथोत्तरीयवस्त्रधारणे स्मृत्यन्तरम्—
यथा यज्ञोपवीतन्तु धार्यते च द्विजोत्तमैः। तथा सन्धार्यते यत्नादुत्तराच्छादनं शुभम्।
अथ कालविशेषेण सायंसन्ध्यानिषेध उक्तस्तथाऽऽह—
संक्रान्त्यां पक्षयोरन्ते द्वादश्यां श्राद्धवासरे। सायं सन्ध्यां न कुर्वीत च ब्रह्महा भवेत्।
(१) अथ भस्मधारणं देवीभागवते—
मध्याह्नात् प्राक् जलाक्तं तु परतो जलवर्जितम्। तर्जन्यनामिकाङ्गुष्ठैस्त्रिपुण्ड्रं च समाचरेत्॥

तिलकं वै द्विजः कुर्याच्चन्दनेन यदृच्छया ॥

मृदा गङ्गामृदा । पाद्मे—

अभावे उदकेनापि पौड्रूश्चैतत्समाचरेत् ।

द्विज इत्यभिधानाच्छूद्रस्य नोर्ध्वपुड्रं किन्तु बिन्दुमात्रम् । तथा हि बृहद्धर्मसंहितायां व्यासः—

'तिलकं बिन्दुमात्रन्तु शूद्रजातिषु शस्यते' ॥ इति ।

गोपीचन्दनमुद्राश्च कृत्वा भ्रमति भूतले ।

सोऽपि देशो भवेत्पूतः किं पुनर्यत्र संस्थितः ।

पाद्मे—कृष्णनामाक्षरैर्गात्रङ्कल्पयेच्चन्दनादिना ।

स लोकपावनो भूत्वा तस्य लोकमवाप्नुयात् ॥

तस्य कृष्णस्य । श्रीभगवानुवाच—

ममावतारचिह्नानि दृश्यन्ते यस्य विग्रहे ।

मर्त्यो न मर्त्यो विज्ञेयस्तन्नूनं मामकीतनुः ॥

विग्रहं शरीरम् 'शरीरं वर्ष्म विग्रहः' –इत्यमरकोषात् ॥

अथ सन्ध्या—

सा च नित्या, तत्र मनुः—

नानुतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।

स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥

पूर्वां प्रातःसन्ध्यां, पश्चिमां सायं सन्ध्याम् । योगियाज्ञवल्क्यः—

सन्ध्यात्रयं प्रकर्तव्यं द्विजेनात्मविदा सदा ।

संवर्त्तः—प्रातःसध्यां सनक्षत्रामुपासीत यथाविधि ।

सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्कराम् ॥

'उत्तीर्य वाससी परिधायेति' कात्यायनवचनाद् वाजसनेयिभिः स्थले सन्ध्या प्रकर्तव्या । स्थलाशुचित्वपक्षे जलेऽपि ।

यत्राशुचि स्थलं वा स्यादुदके देवताः पितॄन् ।

तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम्' ॥

इति वचनात् । उदीच्यस्य तर्पणस्य जलेऽभिधानादिति केशवमिश्राः । छन्दोगानामनियमः । गायत्रीजपे मनुः—

गायत्रीं यो न जानाति ज्ञात्वा नैव उपासते ।

---

**अथवा**—मध्यमानामिकाङ्गुष्ठैरनुलोमविलोमतः । नेत्रयुग्मप्रमाणन्तु त्रिपुण्डं धारयेद्द्विजः ॥

षडङ्गुलप्रमाणं तु ब्राह्मणानां त्रिपुण्ड्रकम् ।

मध्यमानामिकाभ्यां भाले वामतो दक्षिणपर्यन्तमङ्गुष्ठेन तु दक्षतो वामपर्यन्तं नेत्रद्वयव्यापामपरिमितं भस्मत्रिपुड्रं धार्यमिति भावः । तदपि सान्तरालं कर्त्तव्यम्, **तदुक्तं पद्मपुराणे**—

'निरन्तरालं यः कुर्यात् त्रिपुण्ड्रं स नराधमः ।'

**भस्मधारणस्य विशेषमाहात्म्यं देवीभागवते** ११ स्कन्धे द्रष्टव्यम् ।

नामधारकविप्रोऽसौ न विप्रो वृषलो हि सः ॥

वृषलः शूद्रः ॥ जपस्तु शुक्लवस्त्रेण स्थले, न जले। तथाहि गोभिलः-

कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत्।
गायत्र्यग्निमुखी प्रोक्ता तस्मादुत्थाय तां जपेत् ॥

उत्थाय सूर्याभिमुखो जपेदिति छन्दोगाह्निकम्।

अथ जपक्रममाह (१) योगियाज्ञवल्क्यः--

प्रणवं पूर्वमुच्चार्य भूर्भुवःस्वस्ततः परम्।

---

(१) अथ जपयज्ञस्य मुख्यत्वमुक्तं मनुना—
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः। सर्वे ते जपयज्ञस्य कला नार्हन्ति षोडशीम् ॥

अन्यत्र द्रव्योपकरणजनसमयादीनां साधनानां बहुत्वादविधियज्ञस्याऽनिष्टफलजनकत्वात्सर्वेषां जपयज्ञः सुलभः फलाधिक्यजनकश्चात एव भगवद्गीतायां 'यज्ञानां जपयज्ञोऽस्मि' इत्युक्तं श्रीकृष्णेन

अथ तद्भेदाः-विशुद्धेश्वरतन्त्रे-

निजकर्णागोचरो यो मानसः स जपः स्मृतः। उपांशुर्निजकर्णस्य गोचरः परिकीर्त्तितः ॥
वाचिकस्तु जनैर्वैद्यस्त्रिविधो जप ईरितः। उच्चैर्जपाद्विशिष्टः स्यादुपांशुर्दशभिर्गुणैः ॥
जिह्वाजपाच्छतगुणः सहस्रो मानसः स्मृतः ॥

एवं मनुयाज्ञवल्क्यस्मृत्यादिषु बहुत्र वर्त्तते। यथा चोक्तं तन्त्रान्तरे—

मनसा यः स्मरेत्स्तोत्रं वचसा वा मनुं जपेत्। उभयं निष्फलं याति भिन्नभाण्डोदकं यथा ॥

अथासननियमः—

काम्यार्थं कम्बलं चैव श्रेष्ठं तद्रक्तकम्बलम्। कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥
कुशासने मन्त्रसिद्धिश्चात्र कार्या विचारणा। धरण्यां दुःखसंभूतिर्दौर्भाग्यं दारुजासने ॥
वंशासने तु दारिद्र्यं पाषाणे व्याधिपीडनम्। तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ॥
जपध्यानतपोहानिर्वस्त्रासनमितीरितम् ॥ इति।

अथ माला कीदृशी कार्येत्युक्तं देवीभागवते—

वक्त्रं वक्त्रेण संयोज्य पुच्छं पुच्छेन योजयेत्। मेरुमूर्ध्वमुखं कुर्यात्तदूर्ध्वं नागपाशकम् ॥
एवं संग्रथिता माला मन्त्रसिद्धिप्रदायिनी ॥

अथ तत्सूत्रमुक्तं तत्रैव—

रक्तवर्णैः सितैर्मिश्रैः कृतरन्ध्रविदर्भितैः। अक्षसूत्रं प्रकर्त्तव्यं गोपुच्छवलयाकृति ॥

अत्र मालां गोपुच्छाकारामुत्तरोत्तरन्यूनप्रमाणकगुटिकात्मकां कुर्यात्। सूत्रं कुतो ग्राह्यं तदाह—

कन्याकर्तृकसूत्रेण त्रिवृता त्रिगुणेन तु। सितेन ग्रन्थिहीनेन शुद्धेनैव तु कारयेत् ॥

'गायत्र्या ग्रन्थिकृत्ये'त्यादिना तद्ग्रन्थिदानं गायत्र्या कर्त्तव्यम्। आकाशभैरवे-मालासूत्रे-ग्रन्थिविधिरुक्तो यथा—

सार्धग्रन्थित्रयं देवि ! ब्रह्मग्रन्थिः प्रकीर्त्तिताः। सार्धग्रन्थद्वयं देवि ! नागपाशः प्रकीर्त्तितः ॥

संमोहनतन्त्रे—

गोमुखादौ ततो मालां गोपयेन्मातृजारवत्। कौशेयं रक्तवर्णं च पीतवस्त्रं सुरेश्वर ! ॥
अथ कार्पासवस्त्रेण यन्त्रतो गोपयेत्सुधीः। वाससाऽऽच्छादयेन्मालां सर्वमन्त्रे महेश्वरि ? ॥
न कुर्यात्कृष्णवर्णन्तु न कुर्याद्बहुवर्णकम्। न कुर्याद्रोमजं वस्त्रमुक्तवस्त्रेण गोपयेत् ॥
तर्जन्या न स्पृशेत्सूत्रं कम्पयेन्न विधूनयेत्। न स्पृशेद्वामहस्तेन करभ्रष्टां न कारयेत्।
जीर्णे सूत्रे पुनः सूत्रं ग्रथयित्वाशु कारयेत्। प्रमादात्पतितां हस्ताच्छतमष्टोत्तरं जपेत् ॥

गायत्री प्रणवश्चान्ते जपस्त्वेवमुदाहृतः ॥

प्रणवम्, ॐकारम्, तथाच प्रणवं व्याहृतिः गायत्री पुनः प्रणवमन्ते, एवं क्रमो जपे, ततो दशवारजपोऽशौचेऽपि कर्तव्यः। तत्राश्वलायनः—

'आपन्न आशुचिः काले तिष्ठन्नपि जपेद्दश' ॥ इति ।

---

जीवहीनो यथा देही सर्वकर्मसु न क्षमः। पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्त्तितः ॥

**अथ मालानियमः—**

वामेन न स्पृशेन्मालां न स्पृशेत्तामदीक्षितः। भूमौ न विन्यसेन्मालां नान्यमन्त्रं जपेत्तया ॥

अनामांगुष्ठमाक्रम्य जपं कुर्यादुपांशुकम्।

यन्मन्त्रजपो यस्यां कृतस्तद्भिन्नमन्त्रजपस्तस्यां न कार्यः। भिन्नभिन्नमन्त्रजपार्थं भिन्ना माला विधेया

**तत्र मालाभेदाः—**

स्फटिकेन्द्राक्षरुद्राक्षपुत्रजीवसमुद्भवैः। अक्षमाला हि कर्त्तव्या उत्तमा ह्युत्तरोत्तरा ॥

**तत्र रुद्राक्षमालायां शक्तिमन्त्रजपकरणे दोषः—**

रुद्राक्षैः शक्तिमन्त्रं च मन्त्री यः प्रजपेत् प्रिये !। स दुर्गतिमवाप्नोति निष्फलस्तस्य तज्जपः ॥

इति **कौमारतन्त्रे**। तत्रापि कालिकादिकतिपयदेवीमन्त्रजपे दोषाभावः। **तत्रैव—**

कालिका छिन्नमस्ता च त्रिपुरा तारिणी तथा। एताः सर्वा न दुष्यन्ति जपे रुद्राक्षमालया ॥

**अथ करजपे विशेषः देवीभागते—**

अनामामध्यमारभ्य अधोवामक्रमेण च। तर्जनीमूलपर्यन्तं जपस्यैवं विधिः करे ॥ इति।

परन्त्वनेन मध्यमाया अग्रपर्व गत्वा तत एवाधःक्रमेण तर्जनीमूलपर्यन्तं वा। मध्यमाग्रपर्वत-स्तर्जन्यग्रं गत्वा ततोऽधः क्रमेण तर्जनीमूलपर्यन्तमिति निश्चयो न जातः। तत्र शक्तिमन्त्रजप-विषये तु तर्जन्या मध्याग्रपर्वद्वयात्मको मेरुस्तदर्थमाह **श्रीक्रमे—**

अनामिकात्रयं पर्व कनिष्ठादित्रिपर्विका। मध्यमायाश्च त्रितयं तर्जनीमूलपर्वणि ॥

तर्जन्यग्रे तथा मध्ये योजयेन्न तु पापकृत् ॥

**अथ कुमारसंहितायां वैदिकमन्त्रजपविषये तु—**

तर्जनी मध्यमाऽनामा कनिष्ठा चेति ताः क्रमात्। तिस्रोऽङ्गुल्यस्त्रिपर्वाणो मध्यमा चैकपर्विका ॥

पर्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत् ॥

**तथाच**—अंगुष्ठाग्रेण यज्जप्तं यज्जप्तं मेरुलंघितम्। असंख्यातं च यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥

अथैवं दशवारजपनियमस्तेन वामहस्तपर्वसु दशसु वा गुटिकादिषु दशदशवारजपकरणेन शतसंख्या सिद्धा, परन्तु जपसंख्यायामष्टोत्तरशतसंख्याविधानाद् **अष्टपूर्त्तिः** कथं तत्ताबदाह तत्रैव-

अनामामूलमारभ्य कनिष्ठादित एव च। तर्जनीमध्यपर्यन्तमष्टपर्वसु संजपेत् ॥

**इति वैदिकमन्त्रजपविषयपरम्। शाक्तविषये तु—**

अनामामूलमारभ्य प्राग्दक्षिणक्रमेण तु। मध्यमामूलपर्यन्तमष्टपर्वसु संजपेत् ॥

इत्यादिविशेषविषया **नित्यकृत्यार्णवे** द्रष्टव्याः।

**अथ जपसंख्याविषये—**

सकृज्जपश्च गायत्र्याः पापं दिनभवं हरेत्। दशवारं जपेनैव नश्येत्पापं दिवानिशम् ॥

शतवारं जपश्चैव पापं मासार्जितं हरेत्। सहस्रधा जपश्चैव कल्मषं वत्सरार्जितम् ॥

लक्षो जन्मकृतं पापं दशलक्षाऽन्यजन्मजम्। सर्वजन्मकृतं पापं शतलक्षाद्विनश्यति ॥

करोति मुक्तिं विप्राणां जपो दशगुणस्ततः ॥

**अथ मालाशुद्धिस्तत्रैव—**

संस्थाप्य मालामश्वत्थपत्रे पद्मे च संयतः। कृत्वा गोरोचनाक्तां च गायत्र्या स्नापयेत्सुधीः ॥

गायत्रीशतकं तस्यां जपेच्च विधिपूर्वकम्। अथवा पञ्चगव्येन स्नात्वा मालां सुसंस्कृताम् ॥

अशुचिरेवाशुचिः । तिष्ठन्नुत्तिष्ठन् । निस्थत्वान्मलमासेऽपि दशवारजपः ।

मात्स्ये—गृहे त्वेकगुणञ्जप्यन्नद्यां तु त्रिगुणं स्मृतम् ।
तीर्थेषु शतसाहस्रमनन्तं शिवसन्निधौ ॥

जपे गुटिकामाह पाद्मे—

शतधा शङ्खपद्माभ्यां मणिभिस्तु सहस्रधा ।
पुत्रञ्जीवेन शतधा फलं स्यान्मन्त्रजापिनाम् ॥

पुत्रञ्जीवः 'पितौंझिया' इति प्रसिद्धः । शङ्खः—

शतं स्याच्छङ्खमणिभिः सहस्रन्तु प्रवालकैः ।
स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥
पद्माक्षैर्दशलक्षन्तु सौवर्णैः कोटिरुच्यते ।
कुशग्रन्थ्या च रुद्राक्षैरनन्तं फलमुच्यते ॥

प्रवालो 'मूंगा' इति प्रसिद्धः । शिवपुराणे—

अष्टोत्तरशतं चैव पञ्च पञ्चाशदुत्तरम् ।
अष्टाविंशतिभिर्वाऽपि कार्या रुद्राक्षमालिका ॥

गुटिकाप्रमाणमाह—

जातीफलप्रमाणेन जप्यं महदुदाहृतम् ।
बदरास्थिप्रमाणेन स्वल्पकन्तदुदाहृतम् ॥

जातीफलं 'जायफर' इति प्रसिद्धम् । करजपोऽष्टोत्तरशतपर्यन्तमेव, न तु तदधिकं जप्यम् । अथ करजपक्रममाह अगस्त्यसंहितायाम्—

आरभ्यानामिकामध्यात्पादक्षिण्येन वै क्रमात् ।
तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु ॥

अथ तर्पणम्—

तत्र मृतपितृकस्याधिकारः । जीवत्पितृकस्य मृतमातृकस्य च देवर्षि-तर्पणे(१) मातृतर्पणे चाधिकारः । पितुः संन्यासादिना, पातित्येन वा तर्प-

---

अथ गङ्गोदकेनैव स्नात्वा वाऽतिसुसंस्कृताम् ॥ कुर्यादिति शेषः ।

अथ जपस्थानविशेषा उत्तरोत्तरविशेषफलदाः—

गृहे जपः समं विद्याद्गोष्ठे शतगुणं भवेत् । नद्यां सतसहस्रं तु अनन्तं शिवसन्निधौ ॥
समुद्रतीरे देवहृदे गिरौ देवालयेषु च । पुण्याश्रमेषु सर्वेषु जपः कोटिगुणो भवेत् ॥
शिवस्य सन्निधाने च सूर्यस्याग्रे गुरोरपि । दीपस्य गोर्जलस्यापि जपकर्म प्रशस्यते ॥

बृहस्पतिः—मनः संहरणं शौचं मौनं मन्त्रार्थचिन्तनम् । अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ॥
लघुहारीतः—जपे होमे तथा दाने स्वाध्याये पितृतर्पणे । अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः ॥
सरोजसुन्दरे—विना दर्भेण या सन्ध्या यच्च दानं विनोदकैः असंख्यातं च यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥
बौधायनः—कर्मयुक्तो नरो नाभेरधः स्पर्शं विवर्जयेत् ॥

(१) व्यासः—

तर्पणादीनि कार्याणि पितॄणां यानि कानिचित् । तानि स्युर्द्विगुणैर्दर्भैः सप्तपत्रैर्विशेषतः ॥ इति ।

नानर्हत्वे जीवत्पितृकोऽपि पितामहादितर्पणं कुर्यात्। तथाहि याज्ञवल्क्यः—

यदि स्याज्जीवत्पितृक एतान्दिव्यान् पितॄंस्तथा।
येभ्यो वाऽपि पिता दद्यात्तेभ्यो वाऽपि च दापयेत्॥
ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ॥

इति कात्यायनेनापि तस्य पितामहोपक्रमप्रतिपादनात् पितुरसत्वे च सुतरामिति द्वैतपरिशिष्टम्। तर्पणमुपक्रम्य वर्धमानः--

'विना रूप्यसुवर्णाभ्यां विना ताम्रतिलैस्तथा।
विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते॥' इति।

द्वैतनिर्णये-जपे होमे तथा दाने स्वाध्याये पितृतर्पणे।
अशून्यन्तु करं कुर्याद्धिरण्यरजतैः कुशैः॥

इति वचनात्। दक्षिणहस्तानामिकायां हिरण्यरजतकुशा धार्याः।

देवीपुराणे-अनामिकायान्तद्धार्यं दक्षिणस्य करस्य च॥ इति।

तर्जन्यां रजतन्धार्यमिति प्रवादो निर्मूल एव। स्मृतिः--

तर्पयेद्देवतानाञ्च सव्यं कृत्वा समाहितः।
अधिकारी भवेत्पश्चात्पितॄणां तर्पणे द्विजाः॥
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु।
तृप्यतामिति सेक्तव्यन्नामगोत्रेण वाग्युतैः॥

सव्येन वामेन, तथा च वामहस्तयुतदक्षिणहस्तेन तर्पयेदिति भावः।

स्मृतिः-(१) कायस्थैर्यस्तिलैर्मोहात्करोति पितृतर्पणम्।
तर्पितास्तेन पितरस्त्वग्मांसरुधिरास्थिभिः॥

---

**शालङ्कायनः**—

सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया। सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत्॥ इति।

अत्र ऋजुदर्भैः सरलकुशत्रयरूपैः। द्विगुणैर्मोटकैः।

(१) सप्तम्यां भानुवारे च गृहे जन्मदिने तथा। भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम्॥

**एतत्प्रतिवादोऽपि कात्यायनेनोक्तः**—

उपरागे पितुः श्राद्धे पातेऽमायां च संक्रमे। निषेधेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत्॥

**तर्पणकरणकरणस्यावश्यकत्वमुक्तं पुराणसमुच्चये**—

देवताश्च मुनींश्चैव पितृभ्यो नहि तर्पयेत्। देवादीनामृणी भूत्वा नरकं स व्रजेद्ध्रुवम्॥

न वेष्टितशिराः कृष्णरक्तकाषायवस्त्रधृक्। न कञ्चुका न नग्नश्च पितॄन् सन्तर्पयेत्कचित्॥

तर्पणन्तु हस्तौ अन्तर्जानुगतौ कृत्वा कर्तव्यं तदुक्तं **नित्यकृत्यमालायाम्**—

तत्सर्वं निष्फलं याति बहिर्जानु च यत्कृतमिति।

**यमः**—हस्तौ कृत्वा तु संयुक्तौ पूरयित्वा जलेन च।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत्॥

अनेन स्थले निराधारे नहि तर्पणं विहितम्। तत्तु **हस्तद्वयमिलितेनैव, तदप्याह यम एव**

श्राद्धे हवनकाले च दद्यादेकेन पाणिना। उभाभ्यां तर्पणे कुर्यादेष धर्मो व्यवस्थितः॥

कायस्थैः अङ्गस्थैः।

अङ्गस्थैर्न तिलैः कुर्याद्देवतापितृतर्पणम्।
रुधिरन्तु भवेत्तोयं प्रदाता किल्बिषी भवेत्॥

इति वचनैकवाक्यत्वात्तर्पणं स्थले एव, न जले, तथाहि कात्यायनः 'उत्तीर्य्य वाससी परिधायेति'। अन्यच्च—

उदके नोदकं कुर्यात्पितृभ्यश्च कदाचन।
उत्तीर्य्य च शुचौ देशे कुर्यादुदकतर्पणम्॥

इति स्थलाशुचित्वे जलेऽपि इत्यनुपदमुक्तं प्राक्, वाजसनेयिनामिदम्। छन्दोगानामनियमः। कुशोपरि तर्पणं, न तु भूमौ, तथा च तीर्थचिन्तामणौ—

आस्तीर्य्य च कुशान् साग्रान् तानावाह्य च मन्त्रतः।
प्राचीनाग्रेषु देवांस्तु दक्षिणाग्रेषु वै पितॄन्॥
देवान् पितॄंस्तथा चान्यान् सन्तर्प्याचम्य वाग्यतः।
भूम्यां यद्दीयते तोयं दाता चैव कुले स्थितः॥
वृथा तन्मुनिशार्दूल ! नोपतिष्ठति कस्यचित्।
स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकन्नरः।
नोपतिष्ठेत्पितॄणान्तु सलिलं तन्निरर्थकम्॥

पाद्मे—तर्पयेत्तिलतोयाभ्यां सम्यगञ्जलिसंख्यया।
एकैकमञ्जलिन्देवा द्वौ द्वौ च सनकादयः।
अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम्॥ इति।

एतेन पित्रादिषट्पुरुषेषु प्रत्येकमञ्जलित्रयम्। तद्भिन्नामेकैकमञ्जलिमिति। अमुकगोत्रः पिता अमुकशर्मा तृप्यतामिति वाक्यम्। तथाहि गोभिलः—

शर्मन्नर्घादिके कार्य्ये शर्मा तर्पणकर्मणि।
शर्मणोऽक्षय्यकाले स्यादेवं कुर्वन्न मुह्यति॥ इति।

अक्षय्यकालेऽक्षय्योदके। अन्यच्च—

'तृप्यतामिति सेक्तव्यं नामगोत्रेण वाग्यतैः'।

अत्र पुरुषषट्कस्त्रीषट्कयोर्नित्यन्तर्पणमिति द्वैतनिर्णयः। स्मृतिः—

नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना।

---

गोशृङ्गं वितस्तिमात्रमित्यर्थः। **तर्पणे विशेषमाह हारीतः—**

आर्द्रवासा जले कुर्यात्तर्पणाचमनादिकम्। शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपम्॥

**एतत्प्रतिकूलकरणे दोषमाह विष्णुः—**

स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः। नोपतिष्ठति तद्वारि पितॄणां तन्निरर्थकम्॥

**अथ तिलेन कदा न तर्पणं कार्यमित्युक्तं मात्स्ये—**

संक्रान्त्यां निशि सप्तम्यां रविशुक्रदिने तथा। जन्मनि श्राद्धदिवसे न कुर्यात्तिलतर्पणम्॥

**तथाच**—रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे। सप्तम्यां जन्मदिवसे न कुर्यात्तिलतर्पणम्॥

निषिद्धदिनमासाद्य यः कुर्यात्तिलतर्पणम्। रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत्॥

नोपतिष्ठति तत्तोयं यद्भूमौ न प्रदीयते ॥

भूमाविति भूमिस्थितकुश इत्यर्थः । अतो न पूर्ववचनविरोधः । गौतमः--नित्यं स्वाध्यायः पितृभ्यश्चोदकदानञ्च यथोत्साहमन्यत् । मनुः--

यदेव तर्पयेदद्भिः पितॄन् स्नात्वा द्विजोत्तमः ।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ।

इति वचनाभ्यामशक्तादिना(क)वैश्वदेवाद्यकरणे न दोषः,(ख)काम्यत्वात् ।

अथ देवपूजा--

तत्र विहितासनमाह व्यासः—

कौशेयं कम्बलञ्चैव अजिनं पटमेव च ।
दारुजं तालपत्रं वा आसनं परिकल्पयेत् ।

कौशेयं कुशासनम्, अजिनं मृगादिचर्म । दारुजं काष्ठसम्बन्धि । शारदातिलके—

'वस्त्रासने रोगनाशं चित्रकं विष्टरं शिवे !' ।

व्यासः—वंशासने तु दारिद्र्यं पाषाणे व्याधिजं भयम् ।
धरिण्यां दुःखसम्भूतिर्दौर्भाग्यं छिद्रदारुके ।
तृणे धनयशो हानिः पल्लवे चित्तविभ्रमः ॥

पञ्चोपचारमाह, आचारचन्द्रोदये-

सपर्या विविधा प्रोक्ता तासामेकां समाश्रयेत् ।
गन्धादिकान्ता नैवेद्या पूजा पञ्चोपचारिकी ॥

सपर्या पूजा, गन्धादिकेति गन्धपुष्पधूपदीपनैवेद्यैः पञ्चोपचारिकेत्यर्थः । पुनश्च तत्रैव--

आसनं स्वागतं चार्घ्यं पाद्यमाचमनं तथा ।
मधुपर्काचमनस्नानवसनाभरणानि च ॥
गन्धपुष्पधूपदीपनैवेद्यं चन्दनन्तथा ॥ इति ।

तथा च आसनादिषोडशभिः पूजा षोडशोपचार इति भावः । पराशरभाष्ये-

'शिवार्चनं सदाऽप्येवं शुचिः कुर्यादुदङ्मुखः' ।

---

(क) इदं वैश्वदेवाख्यं कर्म देवपूजानन्तरं विधेयं तथा हि, नृसिंहपुराणे—
पौरुषेण तु सूक्तेन तत्र विष्णुं समर्चयेत् । वैश्वदेवं ततः कुर्याद्बलिकर्म 'ततः परम् ॥ इति ।

(ख) वस्तुतस्तु बहुवचनविरोधादिदं नित्यम् । तथाहि—आ० गृह्यसूत्रे (३ अ० प्र०पादे) 'अथातः पञ्च महायज्ञाः' इत्युपक्रम्य, तानेतान् यज्ञानहरहः कुर्वीत इत्युक्तम् । एवं पा० गृह्यसूत्रेऽपि प्रतिपादितम् । तथाच—याज्ञवल्क्येऽपि—'बलिकर्म स्वधे' त्यादिव्याख्यानावसरे मिताक्षराकारा—'एते पञ्च महायज्ञा अहरहः कर्त्तव्या नित्यत्वादिति' प्राहुः ।

केचित्तु—अनग्निवतामिदं वैश्वदेवाख्यं कर्म नावश्यकमित्याहुस्तन्न—

हुत्वा व्याहृतिभिः पूर्वं ततो मन्त्रैश्च शाकलैः । भूतेभ्यश्च बलिन्दत्वा ततोऽश्नीयादनग्निमान् ॥

इति छन्दोगपरिशिष्टवचनस्य जागरूकत्वादिति संशोधकः ।

सदेति दिवसे रात्रौ चेत्यर्थः । शिवभिन्नसर्वदेवकार्यं दिवसे प्राङ्मुखः । रात्रावुत्तरमुखः । द्वैतपरिशिष्टे–प्रातः प्राङ्मुखेनेति । पराशरभाष्ये–

'रात्रावुदङ्मुखः कुर्याद्देवकार्यं सदैव हि' । इति ॥

अथ पुष्पे (१) विशेषमाह––

याचितन्निष्फलं पुष्पं क्रयक्रीतन्तु निष्फलम् ।

स्मृतिः––'परकीयारामजातैः कुसुमैरर्चयेत्सुरान्'

तेन पापेन लिप्येऽहमिति बहुलाकथायाम् । आरामः पुष्पवाटिका । एतन्निषेधः काम्यपूजायामेव, नित्यपूजायान्तु चौर्येणापि पुष्पग्रहणे न दोषः ।

'देवतार्थन्तु कुसुममस्तेयम्मनुरब्रवीदिति' वचनात् ।

पारिजाते––जलं पर्युषितन्त्याज्यम्पत्राणि कुसुमानि च ।

तुलस्यगस्तिबिल्वानां गाङ्गं वारि न दुष्यति ॥

---

(१) लिङ्गार्चनचन्द्रिकायां पुष्पादिदानक्रमः—'पुष्पञ्चाधोमुखं नेष्टं पत्रमूर्ध्वमुखं तथा ।' वाराहे—पुष्पञ्चाधोमुखं नेष्टं तुलसीपत्रवर्जितम् । तस्मादधोमुखं देयं बिल्वपत्रं च शङ्करे ॥

पुष्पमूर्ध्वमुखं योज्यं पत्रं योज्यमधोमुखम् । फलन्तु संमुखं योज्यं यथोत्पन्नं तथाऽर्पयेत् ॥ इति ।

धूपदीपनैवेद्यदाने कालिकापुराणम्—

नैवेद्यं दक्षिणे वामे, पुरतो न च पृष्ठतः । दीपं दक्षिणतो दद्यात्पुरतो न च वामतः ॥

वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे । निवेदयेत्पुरो भागे गन्धं पुष्पं च भूषणम् ॥

प्रतिमादिषु यद्योग्यं गात्रे दातुञ्च तत्तनौ । दद्याद्योग्यं पुरतो नैवेद्यं भोजनादिकम् ॥ इति ।

अयं दिक्क्रमस्तु पूजकाभिमुखस्थदेवस्येति ज्ञेयम् । पुष्पादौ विशेषः कालिकापुराणे—

गन्धं पुष्पञ्च धूपञ्च उपचाराँस्तथाऽपरान् । जिघ्रन्निवेद्य देवेभ्यो नरो नरकमाप्नुयात् ॥

न भूमौ वितरेद्धूपं नासने न घटे तथा । यथा तथाऽऽधारगतं कृत्वा तं विनिवेदयेत् ॥

नैवेद्ये तु देवीपुराणम्—

निवेदयेदपक्वं न मुकुलैर्नार्चयेत्सुरम् । फलं कथितविद्धं च कालपक्वमपि त्यजेत् ॥

निर्णयनिबन्धे तु—'यत्पक्वमपि ग्राह्यं कदलीफलमुत्तमम्' ।

ब्रह्मवैवर्त्ते जपादिकरणे—

अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे । जपहोमनमस्कारान्न कुर्याद्देवतालये ॥

अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयः स्मृतः । वामभागे भवेन्नाशो दक्षिणे सर्वकामदः ॥

शालग्रामशिलायां तुलसीपत्रविच्छेदो न कार्य इत्युक्तं तत्रैव— .

तुलसीपत्रविच्छेदं शालग्रामे करोति यः । तस्य जन्मान्तरे कान्ते ! स्त्रीविच्छेदो भविष्यति ॥

तुलसीपत्रविच्छेदं शंखे योहि करोति च । भार्याहीनो भवेत्सोऽपि रोगी च सप्तजन्मसु ॥

तुलसीपत्रत्रोटने निषिद्धदिनानि तत्रैव—

पूर्णिमायाममायाञ्च द्वादश्यां रविसंक्रमे । तैलाभ्यङ्गञ्च कृत्वा तु मध्याह्ने निशि सन्ध्ययोः ॥

अशौचेऽशुचिकाले ये रात्रिवासोऽन्विता नराः । तुलसी ये विचिन्वन्ति ते च्छिन्दन्ति हरेःशिरः ॥

पाद्मे—न कदाचित्स्त्रिया कार्यं शालग्रामस्य पूजनम् । भर्तृहीनाऽथ सुभगा सर्वलोकहितैषिणी ॥

मोहात् स्पृशेत् महिला जन्मशीलगुणान्विता । हित्वा पुण्यसहस्रन्तु सत्वरं नरकं व्रजेत् ।

वाराहे—स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः । मोहाद्यः संस्पृशेच्छूद्रो योषिद्वाऽपि कदाचन ॥

स पतेन्नरके घोरे यावदाहूतसंप्लवम् ॥

ज्ञानमालायाम्--

न पर्युषितदोषोऽस्ति जलजोत्पलचम्पके ।
तुलस्यगस्तिबकुले बिल्वे गङ्गाजले तथा ॥
न पर्युषितदोषोऽस्ति मालकारगृहेषु च ।

स्कान्दे--पालाशन्दिनमेकं च पंकजं च दिनत्रयम् ।
पंचाहं बिल्वपत्रं च दशाहं तुलसीदलम् ॥

पालाशमित्यादौ पर्युषितत्वेन न दुष्टमिति सर्वत्र योज्यम् । अन्यच्च--

एकाहन्तिष्ठते जाती करवीरमहर्न्निशम् ।
जलजं सप्तरात्राणि षण्मासन्तुलसीदलम् ॥

पूर्वदिने त्रोटितमुत्तरदिने पर्युषितपदवाच्यम् । भविष्ये--

समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ॥

विष्णुधर्मोत्तरे--

'समित्पुष्पकुशादीनि वहतो नाभिवादयेत्' ।

वहतः उद्वहतः, अभिवादनं प्रणामादि, कुशादीनीत्यादिपदाज्जलादिपरिग्रहः । तथा--

देवोपरि धृतं यच्च वामहस्तेन यद्धृतम् ।
अधोवस्त्रधृतं यच्च जलाऽन्तःक्षालितञ्च यत् ॥
देवतास्तन्न गृह्णन्ति पुष्पं निर्माल्यताङ्गतम् ।

अधोवस्त्रं परिधानवस्त्रम्, यदति पुष्पमिति शेषः । (१)स्मृतिः--

स्नानं कृत्वा तु तत्किंचित्पुष्पञ्चिन्वन्ति वै द्विजाः ।
देवतास्तन्न गृह्णन्ति भस्मी भवति दारुवत् ॥

इदन्त्वहःस्नानविषयम् (२) । प्रातः स्नानानन्तरं दत्तेण पुष्पाहरणविधानादिति द्वैतपरिशिष्टे । नारदीये--

भृङ्गराजशमीबिल्वतुलस्यामलकी तथा ।
तमालञ्च हरौ पज्ये पत्रषट्कं प्रशस्यते ।

हरौ विष्णौ । पुष्पमालायाम्--

अपामार्गं शमी दूर्वा शिंशपा तुलसीदलम् ।
बिल्वपत्रं मरुबकं शस्तञ्च खदिरं हरेः ॥

अपामार्गं 'चरचिरी', मरुबकं 'मडुआ' इति प्रसिद्धम् । पुनश्च तत्रैव--

कुन्दं कुब्जककर्णिकारतिलकं सेवन्तिका यूथिका
पुन्नागङ्करवीरनागवकुलं द्रोणं यवा पाटला ।
द्वे जात्यौ खदिरं कुसुम्भकमलन्नीपङ्कुरुण्टोत्पलम्
मल्लीचम्पकमाधवीवकमिदं पुष्पं हरौ शस्यते ॥

---

(१) हारीतवचनमिदम् । (२) अष्टाविंशतितत्त्वे तुद्वितीयस्नानाभिप्रायमिति रत्नाकरः ।

कुब्जकं कुब्बा । कर्णिकारः कनैलः । सेवन्तिका सेउती, यूथिका जूही, पुन्नागं नागकेशरं, नीपं कदम्बं, द्रोणं दनूक, यवा उडहुल, पाटला पाँडरि, कुरुण्टः पीत पिअरी, उत्पलं कोका इति प्रसिद्धम् । ज्ञानमालायाम्—

नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपम्' ।

गणाधिपो गणेशः ।

यवाकुन्दशिरीषैश्च यूथिकामालतीभवैः ।
केतकीभवपुष्पैश्च नैवार्च्यः शङ्करः सदा ॥

तथा—गणेशन्तुलसीपत्रैर्दुर्गां नैव च दूर्वया ।
मुनिपुष्पैस्तथा सूर्यं लक्ष्मीकामो न चाऽर्चयेत् ।

मुनिपुष्पैः अगस्तिपुष्पैः । पद्मपुराणे—

माघे चम्पकपुष्पेण योऽर्चयेत्कमलापतिम् ।
स गच्छेत्परमं धाम विमुक्तः सर्वपातकैः ॥

स्मृतिः—भूमिस्पृष्टं न गृह्णीयाच्छेफालीं बकुलं विना ।

शेफाली शृङ्गरहार इति, वकुलं मौलसरीति प्रसिद्धम् । तथा च शेफाली बकुलं च भूमिस्थितमपि ग्राह्यम् । अन्यत्पुष्पं न भूमिस्थं ग्राह्यमित्यर्थः ।

'न दोषः कलिकाभङ्गे पद्मचम्पकयोरपि' ।

इति वचनात्कमलचम्पकयोः कलिकात्रोटने न दोषः ॥

अथ अष्टाङ्गादिप्रणाममाह हलायुधीये—

अष्टाङ्ग उत्तमः प्रोक्तः पञ्चाङ्गो मध्यमः स्मृतः ।
दोर्भ्यां पद्भ्याञ्च जानुभ्यामुरसा शिरसा तथा ॥
मनसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः ॥

दोर्भ्यामिति बाहुभ्यामित्यर्थः । अन्यच्च—

'पद्भ्यां कराभ्यां शिरसा पञ्चाङ्गा प्रणतिः स्मृता' । इति ॥

स्त्रीणामयमाचारो वर्जितः ॥

अथ भोजन व्यवस्था—

तत्र कुलानुसारेण सप्तनवद्वादशादिनैवेद्यं दत्त्वा भोजनं कुर्यात् । बृहद्धर्मसंहितायां व्यासः—

न क्षीरे लवणन्दद्याम्न चाम्ले गुडमेव च ।
क्षीरं तथाऽऽमिषं भुक्त्वा न भुञ्जीत कदाचन ॥

आमिषं मांसं पठन्ति । वर्द्धमानः-हारिद्रमांसं हरिद्राजलावसिक्तं हरिद्रानलपाचितमात्मानं व्यापादयति । हारिद्रं मांसं 'हरिअल' पक्षिमांसं व्यापादयति नाशयति ।

'गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ।'

विष्णुपुराणे-अनभ्यर्च्य ऋषीन्देवान् पितृभूतातिथींस्तथा ।

यो भुङ्क्ते तस्य सम्भाषात्पतन्ति नरके नराः ।

अन्यच्च—मौनेनैव तु यो भुङ्क्ते संयमेन दृढव्रतः ।
एकविंशतिगोत्राणि तारयेन्नरकार्णवात् ॥

संवर्तः—भुञ्जानश्च यदा ब्रूयाद्गायत्र्यष्टशतं जपेत् ।

बृहद्धर्मसंहितायां (१)व्यासः—
पङ्क्तिमध्ये न भोक्तव्यम्पङ्क्तिन्नैव विलङ्घयेत् ।
पञ्चाङ्गुलीभिर्भोक्तव्यं नाङ्गुलीपृष्ठमालिहेत् ॥

पङ्क्तिमध्ये पङ्क्तिद्वयाभ्यन्तरे ।

---

(१) नोत्क्षिप्तबाहुजङ्घश्च प्राज्ञस्तिष्ठेत्कदाचन । न चापि विक्षिपेत्पादौ पादं पादेन नाक्रमेत् ॥ इति ब्रह्मपुराणम् । जलपानार्थं पात्रविवेचना कालिकापुराणे—अ० ९१ । ६३
कांस्यराजतपात्रस्थं तोयं नद्याश्च वर्धनम् । मूत्रवृद्धिकरं वीर्यक्षयकारि विवर्जयेत् ॥
ताम्रायःस्वर्णशीशानां पात्रस्थं फलचर्मणोः । शुक्रवृद्धिकरं तोयं तदुपासीत यत्नतः ।

पद्मपुराणे—
आत्मार्थं भोजनं यस्य रत्यर्थं यस्य मैथुनम् । वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवनम् ॥

तत्र भोजनस्थाने मण्डलकरणावश्यकता—
यातुधानाः पिशाचाश्च ह्यसुरा राक्षसास्तथा । घ्नन्ति ते बलमन्नस्य मण्डलेन विवर्जितम् ॥

कांस्यपात्रे भोक्तव्यमाह—
एक एव तु यो भुङ्क्ते विमले कांस्यभाजने । चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलम् ॥
परमयं विधिर्गृहस्थानामेव । विधवाब्रह्मचारिणां तु कांस्यपात्रे भोजनं न प्रशस्तम् ।

तदाह प्रचेताः—
ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् । यतिश्च विधवा चैव ब्रह्मचारी विवर्जयेत् ॥

अथ पत्रविषये तु—
रम्भाकुटजमध्वाम्रजम्बूपनसचम्पकाः । पद्मोदुम्बरपालाशब्रह्मपत्रकमेव च ॥
एतानि प्रशस्तानीत्यर्थः । अप्रशस्तपत्राण्यपि तत्रैव—
वटाश्वत्थार्कपर्णेषु कुम्भतिन्दुकपर्णयोः । कोविदारकदम्बानां भुक्त्वा चान्द्रायणं चरेत् ॥
करे कर्पटके चैव शिलायां त्वद्रिभाजने । भिन्नकांस्ये स वस्त्रे च भुक्त्वा चान्द्रायणं चरेत् ।

अथ भोजने दिङ्नियम उक्तो मनुना—
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः । श्रियं प्रत्यङ्मुखो भुंक्ते ऋतं भुंक्ते ह्युदंमुखः ।
पारिजाते तु—'पितरौ जीवमानौ चेन्नाश्नीयाद्दक्षिणामुखः' ।

अत एव स्मृत्यन्तरे—
अमास्नानं गयाश्राद्धं दक्षिणामुखभोजनम् । न जीवत्पितृकः कुर्यात्कृते च पितृहा भवेत् ।

अन्नं निन्दन् न भुञ्जीतेति मनुः—
पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति । अपूजितं तु त द्भुक्तमुभयं नाशयेदिदम् ।

भुक्तावशेषं कस्मैचिन्न दद्यादित्याह मनुः—
नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथाऽन्तरा । न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद्व्रजेत् ।
अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् । अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥

तत्र कियद्भोजनमुचितं तदुक्तमायुर्वेदे—
कुक्षेर्भागद्वयं भोज्यैस्तृतीये वारि पूरयेत् । वायोः संचारणार्थाय चतुर्थमवशेषयेत् ॥

ज्योतिषे—अमृतं सिद्धियोगश्च यद्येकस्मिन्दिने भवेत्।
तद्दिनन्तु भवेन्नष्टं मधुसर्पिर्यथा विषम्॥ इति।

मधुघृतमेकीभूतं विषमित्यायाति, तच्च द्वयोः समानत्वे, न्यूनाधिकत्वे तु न विषं वैद्यशास्त्रे तथैव लिखनात्। शूलपाणिधृतशङ्खः—

एकपङ्क्त्युपविष्टानां विप्राणां सहभोजिनाम्।
यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं विवर्जयेत्॥
मोहाद्भुञ्जीत यः पङ्क्त्यामुच्छिष्टं सहभोजनम्॥
प्रायश्चित्तञ्चरेद्विप्रः कृच्छ्रं सान्तपनं तथा॥ इत्याह्निकम्।

## अथ दाहादिविचारः।

मृतस्य(१)दाहः श्राद्धाधिकारिणा तदनधिकारिणाऽपि कर्त्तव्यस्तथैव शिष्टाचारात्। अग्राह्यानग्नीनाह—

चाण्डालाग्निश्चिताऽग्निश्च सूतिकाऽग्निश्च कर्हिचित्।
पतिताग्नेरमेध्याग्नेर्न्न शिष्टैर्ग्रहणं स्मृतम्॥

---

तत्रोच्छिष्टे घृतं न भक्षणीयमतो भोजनादादेव, तदुक्तं स्मृतिसारे—

ताम्रपात्रे पयः पानं नोच्छिष्टे घृतभोजनम्। दुग्धे च लवणं दद्यात्सद्यो गोमांसभक्षणम्।

तथा शातातपः—

हस्तदत्तानि चान्नानि प्रत्यक्षं लवणं तथा। मृत्तिकाभक्षणे चैव गोमांसाशनवत् स्मृतम्।

प्रत्यक्षमपि लवणं हस्तदत्तमेव निषिद्धम्। तथा पैठीनसिः—

लवणं व्यञ्जनं चैव घृतं तैलं तथैव च। लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत्।

तथा कूर्मपुराणे—

यो भुंक्ते वेष्टितशिरा यश्च भुंक्ते विदिङ्मुखः। सोपानत्कश्च यो भुंक्ते सर्वं विद्यात्तदासुरम्॥

भोजनान्ते तु—

श्वानौ द्वौ श्यावशवलौ वैवस्वतकुलोद्भवौ। ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ॥

अनेन द्वौ बली देयौ। आदावेवैता भोजनीयाः—(मनुः)

सुवासिनीः कुमारीश्च रोगिणो गर्भिणीः स्त्रियः। अतिथिभ्योऽग्र एवैतान्भोजयेदविचारयन्।

अदत्त्वा तु य एतेभ्यः पूर्वं भुंक्ते विचक्षणः। स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः॥

अतिथिमदत्त्वा न किमपि भोक्तव्यम्—

न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत्। धन्यं यशस्यमायुष्यं स्वर्ग्यं वाऽतिथिपूजनम्॥

परदेशे परगृहे च भोजनार्थं स्वनामगोत्रे न कथयेत्—

न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत्। भोजनार्थं हि ते शंसन्वान्ताशीत्युच्यते बुधैः॥

(१) अथ त्रिपुष्करयोगे जननमरणहानिलाभास्त्रिगुणा भवन्ति द्विपुष्करे च ते द्विगुणाः संजायन्ते। तत्र जननलाभयोः पुनः पुनः संभवः सुखाय एव भवति 'श्रेयसा केन तृप्यते' इति लोकप्रसिद्धेः। किन्तु मरणहान्योरनिष्टरूपत्वाच्छान्तिरवश्यं कर्त्तव्या, योगयोर्नियतघटितत्वात्। तत्र तावत् त्रिद्विपुष्करयोगलक्षणं मुहूर्त्तचिन्तामणौ—

भद्रातिथी रविजभूतनयार्कवारे द्वीशार्यमाऽजचरणादितिवह्निवैश्वे।
त्रैपुष्करो भवति मृत्युविनाशवृद्धौ त्रैगुण्यदो द्विगुणकृद्वसुतक्षचान्द्रे॥

अस्यार्थस्तु—शनिमङ्गलरविवारान्यतमदिने विशाखोत्तरफल्गुनीपूर्वभाद्रपुनर्वसुकृत्तिकोत्तरा-

दाह्यशरीरलाभे तस्य, तदलाभे तदस्थ्नां दाहः, तेषामप्यलाभे पर्णनरदाहः। आदिपुराणे—

अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना पुनः।
तदलाभे पलाशोत्थैः पत्रैः कार्यः पुमानपि॥
शतैस्त्रिभिस्तथा षष्ठ्या ३६० शरन्तैर्विधानतः॥

श्राद्धरत्ने-दाह्यशरीरालाभे तदस्थि घृतेनाभ्युद्य वस्त्रेणाच्छाद्य पूर्ववद् दहेत्। पूर्ववत् शरीरदाहवत्। (१)पर्णनरविन्यासप्रकारमाह गृह्यपरिशिष्टे आश्वलायनः-

---

पाढान्यतमनक्षत्रे यदि द्वितीयासप्तमीद्वादश्यन्यतमतिथिर्भवेत्तदा त्रिपुष्करयोगो भवति। स च मृत्युक्षति-वृद्धिषु त्रिगुणकृत्। अथ तेष्वपि दिनेषु धनिष्ठाचित्रामृगशिरोऽन्यतमनक्षत्रे तत्तिथित्रयान्यतमतिथिर्भवेत्तदा तत्फलद्विगुणकरो द्विपुष्करसंज्ञकयोगो भवति। अत्र योगद्वये दिनतिथ्योरभेदः। नक्षत्रेषु राशिपतितत्रिचरणानि भानि त्रिपुष्करे, राशिपतितद्विचरणानि भानि द्विपुष्करे सन्ति। इति तद्योगसंज्ञाकरणतत्त्वम्। तथा चोक्तमपरार्के—

विषमचरणं धिष्ण्यं भद्रातिथिर्यदि जायते शनिरविगुरुक्ष्मापुत्राणां कथंचन वासरे।
मुनिभिरुदितः सोऽयं योगस्त्रिपुष्करसंज्ञकस्त्रिगुणफलदो लब्धे नष्टे हृतेऽपि मृतेऽपि वा॥

अत्र शान्तिस्तु नारदेनोक्ता यथा—

दद्यात्तद्दोषनाशाय गोत्रयं मूल्यमेव वा। द्विपुष्करे द्वयं दद्यान्न दोषस्त्वर्क्षमात्रतः।

एवमेव वसिष्ठोऽप्याह—

त्रितयं गवां हि दद्याद्दोषस्यापनुत्तये विद्वान्। द्वितीयं द्विपुष्करेऽपि च तिलपिष्टैर्विप्रमुख्येभ्यः।

(१) अत्र शवप्रतिकृतिदाहे वर्ज्यसमय उक्तो रामाचार्येण--

शुक्रारार्किषु दर्शभूतमदने नन्दासु तीक्ष्णोग्रभे पौष्णे वारुणभे त्रिपुष्करदिने न्यूनाधिमासेऽयने।
याम्येऽब्दात् परतश्च पातपरिघे देवेज्यशुक्रास्तके भद्रावैधृतयोः शवप्रतिकृतेर्दाहो न पक्षे सिते।

जन्मप्रत्यरितारयोर्मृतिसुखान्त्येऽब्जे च कर्त्तुर्न सन्-
मध्यो मैत्रभगादितिभुवविशाखाद्यङ्घ्रिभे वेऽपि च।
श्रेष्ठोऽर्कोज्यविधोर्दिने श्रुतिकरस्वात्यश्विपुष्ये तथा
स्वाशौचात्परतो विचार्यमखिलं मध्ये यथा संभवम्॥

येषु तिथिवारनक्षत्रेषु रोगारम्भे सति नियतं मरणं भवति तदाह वसिष्ठः—

आश्लेषाऽऽर्द्रा त्रिपूर्वा यमवरुणमरुच्छक्रतारानलाः स्यु-
र्द्वादश्यां स्कन्दरिक्तातिथिषु च रविजार्कारवारेषु येषाम्
रोगः संजायते ते यमपुरमचिरात्प्राप्नुवन्त्येव चन्द्रे
जन्मन्यष्टारुयबन्धुव्ययभवनगते मृत्युलग्ने च राशौ॥

अत्रत्या शान्तिः शान्तिमयूखादौ द्रष्टव्येति।

पञ्चके तु मरणं दाहश्चेति द्वयमपि निषिद्धम्। उक्तं च ब्रह्मपुराणे -

कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते। तस्योर्ध्वगतिर्दृष्टा सन्ततौ न शुभं भवेत्।
न तस्य दाहः कर्त्तव्यो विनाशः स्वेषु जन्तुषु। वक्ष्यकानन्तरं कार्यं कार्यं दाहादिकं खलु॥
अथवा तद्दिने कार्यो दाहस्तु शान्तिपूर्वकम्। दाहदेशे शवं नीत्वा स्नापयेच्च प्रयत्नतः।
दर्भाणां प्रतिमाः कार्याः पञ्चोर्णासूत्रवेष्टिताः। यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत्।
प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः। प्रेतहर्त्ता पञ्चमश्च नामान्येतानि च क्रमात्॥

दद्याच्छिरस्यशीत्यर्द्धं ४० ग्रीवायान्तु दशैव तु ।
बाह्वोश्चैव शतन्दद्यादङ्गुलीषु तथा दश ॥
उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा ।
अष्टार्द्धं शिश्ने दद्याद् द्वादशार्द्धं वृषणयोः ॥
ऊर्वोश्चैव शतं दद्यात् त्रिंशतिं जानुजंघयोः ।
पादाङ्गुलीषु दश दद्यादेतत्पत्रविकल्पनम् ॥
वेष्टितव्यस्तथा यत्नात्कृष्णसारस्य चर्म्मणा ।
ऊर्णासूत्रेण बद्ध्वा तु प्रलेप्तव्यस्तथायवैः ।
सुपिष्टैर्ज्जलमिश्रैस्तु दग्धव्यश्च तथाऽग्निना ॥ इति ।

वृषणयोः अण्डकोशयोः ऊर्वोर्जंघयोः । द्वैतपरिशिष्टे केनापि प्रकारेण मृतानां सजातीयविजातीयानां विशीर्णावयवानां सन्निपातेन सर्वेषां दाहः कार्यो मानाभावात्, नापि पितुरेव परिचायकाभावात्, अत एव तदवस्थायां पितुरपि पर्णनरदाह एवेति । पर्णनरदाहस्तु अशौचाभ्यन्तरे तत्रापि अष्टमदशमत्रयोदशाष्टाविंशतिदिने क्रमेण ब्राह्मणादिचतुर्वर्णानां पर्णनरदाहः, शिष्टाचरात् । तदसंभवे नवमादिदिने अशौचाभ्यन्तरे, तत्राप्यसंभवे पक्षत्रयान्तरममावास्यादौ कर्तव्यः । तथाहि—

'अशौचमध्ये यत्नेन दाहयेदुक्तया हतम् ।'

दीपकालिकायां सुमन्तुः—

पर्णं नरं दहेन्नैव विना दर्शं कथंचन ।
अस्थ्नामलाभे दर्शे तु ततः पर्णनरं दहेत् ॥
एवं पर्णं दहेन्नैव प्राक् त्रिपक्षात्कथंचन ।
पितृहा मातृहा यस्मान्न दर्शे न दहेद्यदि ॥
कृष्णपक्षे पञ्चदश्यामष्टम्यां वा समाहितः ।
एकादश्यां विशेषेण ततः प्रभृति सूतकम् ।
त्रिरात्रं सर्ववर्णानामेष धर्मो व्यवस्थितः ॥

---

अत एव पञ्चके मृतस्य पुत्तलकविधानं कृत्वा दाहः कार्यः । ततः सूतकान्ते पुत्रादिभिः शान्तिकं च विधेयम् । उक्तं च **गरुडपुराणे**—

ततो दाहः प्रकर्त्तव्यस्तैश्च पुत्तलकैः सह । सूतकान्ते तदा पुत्रैः कार्यं शान्तिकपौष्टिकम् ॥
पञ्चके तु मृतो योऽसौ न गतिं लभते नरः । तिलांश्चैव हिरण्यं च तमुद्दिश्य घृतं दहेत् ॥

अतो नक्षत्रान्तरे मृतस्य पञ्चके दाहप्राप्तौ पुत्तलकविधिरेव भवति । ततः सूतकान्ते शान्तिकं च । एवं पञ्चकान्तर्मृतस्याश्विन्यां दाहप्राप्तौ पुत्तलकविधिर्न । किन्तु सूतकान्ते शान्तिकमेव विधेयम्, इत्यलं विस्तरेणेति । **तथा नारदः**—

वस्वन्त्यार्धादिपञ्चर्क्षे संग्रं तृणकाष्ठयोः । याम्यदिग्गमनं शय्यां न कुर्याद् गृहगोपनम् ॥

**राजमार्त्तण्डेऽपि**—

न गच्छेद्दक्षिणामाशां भषट्केन श्रवणादिना । भूतिकामो न कुर्वीत तृणकाष्ठादिसंग्रहम् ।
अग्निदाहो भयं रोगो राजपीडा धनक्षयः । संग्रहे तृणकाष्ठानां कृते वस्वादिपञ्चके ॥

अत्राशौचाभ्यन्तरे दाहे शेषाशौचाहोभिः शुद्धिः।

पर्णनरदाहप्रयुक्तत्र्यहाशौचापेक्षया मरणप्रयुक्तदशाहाद्यशौचस्य गुरुत्वात् त्रिपक्षानन्तरं दाहे त्रिरात्रम्। चतुर्थदिने श्राद्धम्।

'एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेदि' ति ब्रह्मपुराणात्।

तुल्यन्यायतया अस्थिदाहेऽपि त्रिरात्राशौचम्। यज्ञपार्श्वः—

पुत्राश्चेदुपलभ्येरन्तदस्थीनि कदाचन।
तदलाभे पलाशस्य सम्भवे हि पुनः क्रिया॥

हि यस्मात्तदलाभे अस्थ्यलाभे तस्माद्यदि पुनरप्यस्थीनि प्राप्यन्ते तदा पुनर्दाहे त्रिरात्राशौचे कर्तव्यं पुनः पिण्डदानादिकमिति शुद्धिनिर्णये गोभिलः—'मरणतिथिनिश्चये तस्यां वार्षिकम्। तदनिश्चये पर्णनरदाहतिथौ' इति विभावनीयम्।

शतानन्दरत्नमालायां यमः--

गतस्य न भवेद्वार्त्ता यस्य द्वादशवार्षिकी।
प्रेतावधारणं तस्य कर्तव्यं सुतबान्धवैः॥

(१)हेमाद्रिनिबन्धे जातूकर्णः—

पितरि प्रोषिते यस्य वार्त्ता न गृहमागता।
ऊर्ध्वम्पञ्च दशाद्वर्षात्कृत्वा तत्प्रतिरूपकम्।
कुर्य्यात्तस्य च संस्कारं यथोक्तविधिना पुनः॥

गतस्येत्यत्र पुंस्त्वन्न विवक्षितम्। अन्यथा स्त्रियास्तादृशस्थले व्यवस्था न स्याद्वचनान्तराभावात्। यथोक्तविधिना प्रागुक्तपर्णनरदाहविधिना। अत्र द्वादशवर्षानन्तरं मुख्यकाले तदसम्भवे पञ्चदशवर्षानन्तरं गौणकालेऽपि कर्तव्यमिति तात्पर्यम्।

पर्णदाहः कदा कर्तव्य इत्यत्राह स्मृतिः—

यन्मासि यदहर्यातस्तन्मासि तदहः क्रिया।
दिनाज्ञाने कुहूस्तस्य आषाढस्याथवा कुहूः॥

तस्येति गमनमासस्येत्यर्थः। तथा च यन्मासि यत्तिथौ पूर्वं गृहाद्देशान्तरङ्गतस्तन्मासि तत्तिथौ द्वादशवर्षाद्यनन्तरं पर्णनरदाहः। तत्तिथेरज्ञाने तन्मासामावास्यायाम्, तन्मासाज्ञाने तस्मिन्नेव वर्षे आषाढामावास्यायां दाहः। तत्तृतीयदिने क्षौरं चतुर्थदिने आद्यश्राद्धम्, पञ्चमदिने सपिण्डनमिति भावः। यमजातूकर्णवचने प्रागुक्ते अभिधाय अत्र देशापेक्षया विकल्प इति द्वैतपरिशिष्टे केशवमिश्राः। अत्र पर्णनरदाहतिथौ वार्षिकम्।

मरणभ्रान्त्या कस्यचिद्(जीवितस्य प्रोषितस्य पर्णनरदाहविधिना) दाहादौ

(१) अत्र द्वादशवर्षाभ्यन्तरे यदि गतस्य पत्रादिकमायाति तदा पुनस्तद्दिनाद्द्वादशवर्षाभ्यन्तरे तस्य वार्त्ता न ज्ञायते, तर्हि तत्पत्रादिलब्धदिनमेव तद्गयाहः कल्प्यमिति।

कृते यदि समायाति तदा निरग्निश्चेत् रुद्रस्नपनं प्राजापत्यव्रतं च कृत्वा, साग्निस्तु आयुषोमिष्टिं कृत्वा स पूतो भवति। तथाहि बृहच्छ्राद्धदर्पणे—

प्रेतकार्यं कृतं यस्य स चेदायाति मानवः।
प्राजापत्यव्रतं कुर्याच्छान्तिं रुद्रसमुद्भवाम्॥ इति॥
एवं कृते मृतभ्रान्त्या यद्यागच्छेत्पुमान् क्वचित्।
कुर्यात्तदायुषीमिष्टिं पुनराधाय पावकम्॥ इति च।

रुद्रसमुद्भवां रुद्राध्यायादिना शिवस्नपनरूपां प्राजापत्यानुकल्पो धेनुदानम्। तस्याप्यनुकल्पः कार्षापणत्रयलभ्यहिरण्यदानम्, अत्र पूर्ववचनं निरग्निविषयकमुत्तरवचनमग्निहोत्रिविषयकम्, तथा चाग्निहोत्रिभिन्नस्य मरणभ्रान्त्या दाहे कृते यदि समायाति तदा प्राजापत्यं प्रायश्चित्तं, रुद्रस्नपनरूपां शान्तिं च कुर्यात्, अग्निहोत्रिणस्तादृशस्थले आयुषीष्टिः। अत एव श्राद्धविवेके—

एवंकृते मृतभ्रान्त्या यद्यागच्छेत्पुमान् क्वचित्।
कुर्यात्तदाऽऽयुषीन्त्विष्टिं पुनराधाय पावकम्॥

साग्नेरियमिष्टिः। निरग्नेस्तु 'शान्तिस्वस्त्ययनमन्यत्' इति रुद्रधरः श्राद्धविवेके। इति सकलमैथिलव्यवहारसिद्धोऽयं पन्थाः। (१)ब्रह्मपुराणे—

ब्रह्मदण्डहता ये च ये चापि ब्राह्मणैर्हताः।
महापातकिनो ये च पतितास्ते प्रकीर्तिताः॥
पतितानां न दाहस्स्यान्नान्त्येष्टिर्नास्थिसंचयः।
नाश्रुपातश्च पिण्डो वा कार्यं श्राद्धादिकं क्वचित्॥
एतानि पतितानान्तु यः करोति विमोहितः।
कण्ठोदकक्रियां कृत्वा तप्तकृच्छ्रेण शुध्यति॥

कण्ठोदकक्रिया वपनादिका उदकक्रिया। प्रमादतो दाहादिकरणे प्रायश्चित्तं मत्कृतप्रायश्चित्तव्यवस्थायामवलोकनीयम्। गोभिलः—

गोभिर्विप्रैर्हते चैव तथा चैवात्मघातके।
नैवाश्रुपातनं कार्य्यं सद्भिः श्रेयोऽभिकांक्षिभिः॥

गोभिर्हतं क्रीडादिभिर्गवा हतमिति शूलपाणिः। अश्रुपातपदं दाहादीनामप्युपलक्षकम्।

तथा च प्रमादतो गवा हतस्य श्राद्धं कार्यमेव, क्रीडादिभिरिति शूलपाणिलिखनात्, 'प्रमादादपि निश्शङ्क—'इत्यादिवक्ष्यमाणब्रह्मपुराणाच्च अङ्गिराः—

(१) वृद्धमनुः—

जीवन्यदि समागच्छेद् घृतकुण्डे निमज्ज्य तम्। उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत्॥
व्रतचर्या द्वादशाहं त्रिरात्रमथ वाऽस्य तु। स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत्। तथैन्द्राग्नेयपशुना गिरिं गत्वा स तत्र तु॥
इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः॥

व्यापादयेदथात्मानं स्वयं योऽन्युदकादिना ।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकक्रिया ॥

यस्तु रोषादिना हेतुनाऽग्न्यादिभिरात्मानं घातयति, तस्याग्निदानाशौच-क्रिया न कर्तव्येति रुद्रधरः। यदि मरणेच्छां विना प्रमादादितो जलादौ म्रियते तदा दाहादिसर्वाः क्रियाः कर्त्तव्याः, तथाहि अङ्गिराः--

अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिषु ।
तस्याशौचं विधातव्यं कार्य्या चास्योदकक्रिया ॥

प्रमादोऽनवधानता । ब्रह्मपुराणे-

प्रमादादपि निश्शंकस्त्वकस्माद्विधिदेशितः ।
शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः ॥
चाण्डालेनाथवा चौरैर्निहतो यत्र कुत्रचित् ।
तस्य दाहादिकं कार्य्यं यस्मान्न पतितस्तु सः ॥ इति ।

## अथ सतीविधानम् ।

यत्र सहमरणम्, अनुमरणम्, द्विविधं सतीमरणं, तत्रापि ब्राह्मण्याः सहमरणमेव नानुमरणम्, तथाहि गौतमः--

पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।
अन्यासामेव नारीणां स्त्रीधर्मोऽयं व्यवस्थितः ॥

अन्यासां क्षत्रियाण्यादीनां स्त्रीधर्मोऽयं पृथक् पश्चाच्चितारोहणरूपः। तथा च सहमरणं सर्वासामनुमरणं च क्षत्रियाण्यादीनामेवेति भावः। ब्रह्मपुराणे—

देशान्तरे मृते पत्यौ साध्वी तत्पादुकाद्वयम् ।
निधायोरसि संशुद्धा प्रविशेज्जातवेदसम् ।
ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी ॥

तत्पादुकाद्वयं पतिपादुकाद्वयम्। जातवेदसं वह्निम्। पादुकाद्वयमिति तदीयवस्त्रादीनामप्युपलक्षकम्। मृतेन पत्या सह वह्निप्रवेशः सहमरणम्। पतिदाहानन्तरं तदीयपादुकादिग्रहणपूर्वकवह्निप्रवेशोऽनुमरणमिति पर्यव-सितम्। नारदीये—

बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतवस्तथा ।
रजस्वला राजसुते ! नारोहन्ति चितां शुभे ! ॥

अदृष्टऋतवः शंकितगर्भाः। तेनाप्राप्तऋतुकाऽपि गच्छतीति शिष्टाचारः। राजसुते इति सगरमातुः संबोधनम्। बालसंवर्द्धनं त्यक्त्वा बालापत्या न गच्छति। इति वचनात्। बालसंवर्द्धनश्रुतेरन्यतो बालसंवर्द्धनं चेत्तदा तस्या अप्यधिकारः।

एकां चितां समासाद्य भर्तारं याऽनुगच्छति ।

तद्भर्तुर्यः क्रियां कर्ता स तस्याश्च क्रियां चरेत् ॥

इति तु पिण्डदानपर्यन्तविषयम्। श्राद्धस्य स्वस्वाधिकारिकर्त्तव्यत्वात्।

सतीभवनफलमाहाङ्गिराः—

मृते भर्तरि या नारी समारोहेद्धुताशनम्।
साऽरुन्धतीसमाचारा स्वर्गलोके महीयते ॥
तिस्रः कोट्योऽर्द्धकोटी च यानि रोमाणि मानवे।
तावन्त्यब्दानि सा स्वर्गे भर्तारं याऽनुगच्छति ॥

सा स्वर्ग इत्यस्य महीयते इति पूर्वेणान्वयः।

व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्।
तद्वद्भर्तारमादाय तेनैव सह मोदते ॥
मातृकं पैतृकं चैव यत्र कन्या प्रदीयते।
पुनाति त्रिकुलं नारी भर्तारं याऽनुगच्छति ॥
ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वाऽपि मानवः।
तं वै पुनाति सा नारी इत्यङ्गिरसभाषितम् ॥

त्रिकुलं मातृपितृपतिकुलम्। तं तादृशपतिमित्यर्थः। विष्णुः—मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वेति। अत्र प्रयोगमाह शुद्धिनिर्णये गोभिलः—"पुत्रादिना स्वगृह्योक्तविधिनाऽग्नौ दत्ते ज्वलद्भर्तृचितायां सह गन्त्री साध्वी स्नाता वाससी परिधाय कुशहस्ता प्राङ्मुखी उदङ्मुखी वा ॐ तत्सदिति ब्राह्मणैरुच्चरिते नारायणं संस्मृत्य नमोऽद्यामुके मास्यमुके पक्षेऽमुकतिथावमुकगोत्रा श्रीअमुकी देवी अरुन्धतीसमाचारत्वपूर्वकस्वर्गलोकमहीयमानत्वपतिसहितक्रीडमानत्वब्रह्मघ्नकृतघ्नपतिपूतत्वकामा भर्तृज्वलच्चितारोहणमहं करिष्ये इति सङ्कल्पः सह मरणे। अनुमरणे-भर्तृज्वलच्चितारोहणमित्यत्र ज्वलदग्निप्रवेशनमात्रमिति सङ्कल्पे विशेषः।

अष्टौ लोकपाला आदित्यचन्द्रानिलानलाकाशभूमिजलहृदयावस्थितान्तर्यामिपुरुषदिनरात्रिसन्ध्या यूयं साक्षिणो भवथ ज्वलद्भर्तृचितासमारोहणे भर्त्रनुमरणे वा इत्युच्चार्य चिताग्निं त्रिः प्रदक्षिणीकृत्य "इमा नारीरविधवा सपत्नीवाञ्छने सर्पिषा संविशन्त्वनस्रवाऽमसावासुरत्ना आरोहन्तु जलयोनिमग्ने" इति।

इमाः पतिव्रताः पुण्याः स्त्रियो जायाः सुशोभनाः।
सह भर्तृशरीरेण संविशन्तु विभावसुम् ॥

इति ब्राह्मणे पठितेन 'नमो नमः' इत्युच्चार्य ज्वलच्चितां समारोहेत्। सहमरणानुमरणे मलमासादावपि कार्ये निरवकाशनिमित्तकत्वात् निमित्तकानीतिवचनादिति।

## अथ विधवास्त्रीधर्म्माः ।

तत्र(१) विष्णुः—ब्रह्मचर्यं मैथुनताम्बूलचूडादिवर्जनं विधवाकर्त्तव्यमिति शेषः । तथा—

ताम्बूलाभ्यंजनं चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा परिवर्जयेत् ॥
स्मृतिः—एकाहारः सदा कार्यो न द्वितीयः कदाचन ।
पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् ॥

---

(१) विधवाधर्माः काशीखण्डे उक्ताः—
विधवाकबरीबन्धो भर्तृबन्धाय जायते । शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥
एकाहारः सदा कार्यो न द्वितीयः कदाचन । त्रिरात्रं पञ्चरात्रं वा पक्षस्यार्धमथापि वा ॥
मासोपवासं कुर्याद्वा चान्द्रायणमथापि वा । कृच्छ्रं पराकं वा कुर्यात्तप्तकृच्छ्रमथापि वा ॥
यवान्नैर्वा फलाहारैः शाकाहारैः पयोव्रतैः । प्राणयात्रां प्रकुर्वीत यावत्प्राणः स्वयं व्रजेत् ॥
पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् । तस्माद्भूशयनं कार्यं पतिसौख्यसमीहया ॥
नैवाङ्गोद्वर्त्तनं कार्यं स्त्रिया विधवया क्वचित् । गन्धद्रव्यस्य संभोगो नैव कार्यस्तया पुनः ॥
नैवाङ्गोद्वर्त्तनं कार्यं ताम्बूलस्य च भक्षणम् । गन्धद्रव्यस्य सम्भोगो नैव कार्यस्तया क्वचित् ॥
श्वेतवस्त्रं सदा धार्यमन्यथा रौरवं व्रजेत् । उपवासव्रतादौ तु नित्यं कार्यं यथोदितम् ॥
इत्येवं नियमैर्युक्ता कर्म कुर्यादतन्द्रिता । नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ॥
कञ्चुकं न परिदध्याद्वासो न विकृतं न्यसेत् । अपृष्ट्वा तु सुतान् किञ्चिन्न कुर्याद्भर्तृतत्परा ॥
एवं चर्यापरा नित्यं विधवाऽपि पतिव्रता । पतिलोकमवाप्नोति न भवेत्क्वापि दुःखभाक् ॥
न गङ्गया तया भेदो या नारी पतिदेवता । उमाशिवसमा साक्षात्तस्मात्तां पूजयेद्बुधः ॥

शातातपः—
मृता याऽनुगता नार्थ सा तेन सहपिण्डताम् । अर्हति स्वर्गवासं च यावदाभूमिसंप्लवम् ॥
अत्र प्रसङ्गात् सधवास्त्रीधर्मानाह विष्णुः—

भर्तुः समानव्रतचारित्वं श्वश्रूश्वशुरगुरुदेवताऽतिथीनां पूजनम् । सुसंयतोपस्करताऽमुक्तहस्तता। सुगुप्तभाण्डता । मूलक्रियास्वनभिरतिः । मङ्गलाचारतत्परता । मूलक्रियासु वशीकरणादिक्रियासु ।

शङ्खः—नानुक्त्वा गृहान्निर्गच्छेत् । नानुत्तरीया।। न त्वरितं व्रजेत् । न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यः । न नाभिं दर्शयेत् । आगुल्फाद्वासः परिदध्यात् । न स्तनौ विवृतौ कुर्यात् । न हसेदनावृतं न भर्त्तारं न तद्बन्धून् वा विद्विषेत् । न गणिकाधूर्त्ताभिचारिणीप्रव्रजितेक्षणिकामायामूलकुहिकाकारिणीदुःशीलादिभिः सहैकत्र तिष्ठेत् ।

व्यासः—
द्वारोपवेशनं नित्यं गवाक्षावेक्षणं तथा । असत्प्रलापो हास्यं च दूषणं कुलयोषिताम् ॥

मनुः—
पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नोऽप्यन्यगृहे वासो नारीणां दूषणानि षट् ॥
याज्ञवल्क्यः—
क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥
रक्षेत् कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके । अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित् स्त्रियाः॥

तर्प्पणं प्रत्यहङ्कार्यं भर्तुस्तिलकुशोदकैः।
स्नानं दानं तीर्थयात्रा विष्णोर्नामग्रहं तथा॥ इति।

## अथ मृत्यूत्तररोदनादिनिषेधः।

मरणानन्तरं रोदनादिनिषेधमाह-कात्यायनः--

श्लेष्माश्रुबान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
अतो न रोदितव्यं तु क्रिया कार्या प्रयत्नतः॥

रामायणे--शोचमानास्तु सस्नेहा बान्धवास्सुहृदस्तथा।
पातयन्ति गतं स्वर्गमश्रुपातेन राघव!॥ इति॥

दिवसे शवस्पर्शे दाहाकरणे रात्रौ ग्रामप्रवेशः। रात्रौ(१)शवस्पर्शादिकरणे च सूर्योदयानन्तरं, तथा हि पारस्करः-'प्रेतस्पर्शिनो न ग्रामं प्रविशेयुरानक्षत्राद्रात्रौ चेदादित्यस्य'। प्रेतस्पर्शिन इति अजहत्स्वार्थलक्षणया दाहकर्त्तुरप्युपलक्षकम्।

## अथ पिण्डदानविचारः।

पिण्डदानं(२)न रात्रौ, न वा भोजनानन्तरं दिवसेऽपि, रात्रौ मरणे जाते ज्ञाते वा निषिद्धकाले रात्रौ पिण्डा न देया इति स्मृतिसारलिखनात्, भोजनजन्याशौचम्भवत्येवेति रुद्रधरलिखनाच्च। श्राद्धाधिकारिभिन्नेन दाहे कृतेऽपि तदधिकारिणा दश पिण्डा देया एवेति सम्प्रदायः। अधिकारिभिन्नेन दाहकर्त्राऽपि स्वीयं यावदशौचं दश पिण्डा देयाः।

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्॥

---

(१) अद्भुतसागरे (गार्गीये)—
उह्यमानः शवोऽकस्मात् क्षितावभिपतेद्यदा। यत्कुलेऽसौ शवस्तेषां विनाशो भवति ध्रुवम्॥
नारद—शवस्तु नीयमानस्तु भूमौ निपतते यदि। कुटुम्बरमणं तत्र धनधान्यपरिक्षयः॥
इमा रुद्रेति मन्त्रेण जुहुयात्सर्पिषाऽऽहुतिम्। आहुती द्वे सहस्रे च होमश्च कथितो भवेत्।
वृषभं दक्षिणां दद्यात्ततः सम्पद्यते शुभम्॥

मयूरचित्रे—
मृतः श्मशानं नीतो यः प्रत्युज्जीवति मानवः। स्वस्थो वा भवति क्षिप्रं पुनरायाति मन्दिरम्॥
स देशः क्षीयते क्षिप्रं परचक्रेण हन्यते। यमदृष्ट्या ततः शान्तिः सक्षीराः समिधः शतम्॥
घृताक्ता जुहुयाद्विप्रो हुतान्ते भूरिदक्षिणाम्। सावित्र्याऽष्टसहस्रेण क्षीरशान्ति च कारयेत्।
कपिला गौस्तिलं कांस्यं देयं यममतं यथा॥
पराशरः—मृतो वा व्याहरेद्गच्छेद्यत्र तत्र भयं वदेत्।
अत्र सावित्रीमन्त्रदशलक्षहोमादिका सामान्या शान्तिः कर्त्तव्या।

(२) गरुडपुराणे—
दग्धे देहे पुनर्देहः पिण्डैरुत्पद्यते खग!। हस्तमात्रः पुमान् येन पथि भुङ्क्ते शुभाशुभम्।
बहुभीतिपुरे गत्वा हस्तमात्रं समुत्सृजेत्। अङ्गुष्ठमात्रो वायुश्च कर्मभोगाय खेचरः।
यातनादेहमासाद्य सह याम्यैः प्रयान्ति च।

इत्याश्वलायनात् दाहानन्तरं श्राद्धाधिकारिण्यायाते श्रवणदिने अतीतपिण्डं दत्वाऽवशिष्टपिण्डानशौचान्तिमदिनं यावत्प्रतिदिनन्दद्यादिति मुख्यपक्षः 'यावदशौचं प्रेतस्योदकं पिण्डमेकं च दद्यु-'रिति विष्णुवचनात्-अशौचान्तिमदिन एव सर्वपिण्डदानमिति गौणः। तत्र मुख्यपक्षः सांप्रदायिकव्यवहारसिद्धः। द्वितीयस्तु काचित्कः। सर्ववर्णैर्नवमदिने नवमं पिण्डं दत्वाऽशौचान्तिमदिन एव दशमः पिण्डो देयः।

'दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु।'

इत्युपक्रम्य—

देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि।
वैश्यानां च पञ्चदशे देयस्तु दशमस्तथा॥
शूद्रैस्तु दशमः पिण्डो मासे पूर्णेऽह्नि दीयते।

इति ब्रह्मपुराणात्। विगोत्रेण श्राद्धाधिकारिणा सपिण्डने कृतेऽपि दाहकर्त्रा सगोत्रेण प्रेतपदेनैव यावदशौचं पिण्डा देयाः। पूरकपिण्डदानस्य प्रेतोद्देश्यकत्वनियमात्। शुनःपुच्छः—

फलमूलैश्च पयसा पायसेन गुडेन च।
शालिना सक्तुभिर्वाऽपि शाकैरप्यथ निर्वपेत्॥ इति।

पिण्डानिति शेषः। इयांस्तु विशेषः। येन द्रव्येण प्रथमदिने पिण्डदानं तेनैव सर्वस्मिन्दिने।

'प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम्।

इति शुनःपुच्छवचनात्। अत्रोदकक्रिया तु पिप्पलपत्रपुटकेनैव कर्त्तव्या—

आनयेङ्गुदिपिण्याकं पत्रं बोधिद्रुमस्य च।
मन्दाकिनीं पुरस्कृत्य करिष्ये उदकक्रियाः॥ इति रामायणात्।

इङ्गुदः-फलविशेषः। (१) 'इङ्गुदी तापसतरु' रित्यमरः। तपस्विजनोपयुक्तफलयुतत्वेन तापसतरुत्वमिति रायमुकुटः। जीयापूता इति ख्यात इति रायमुकुटादयः। पिण्याकः पिडार इति प्रसिद्धः। एतत्फलद्वयं पिण्डाथकम्। 'बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः' इत्यमरः।

अथ त्र्यहाशौचादौ पिण्डदानक्रममाह पारस्करः—

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः।
द्वितीये चतुरो दद्यादस्थिसंचयनं तथा॥
त्रींस्तु दद्यात् तृतीयेऽह्नि वस्त्रादिक्षालनं तथा।

ऋष्यशृङ्गः-'सद्यश्शौचे प्रदातव्याः सर्वेऽपि युगपत्तथा'।

सर्वेऽपीति पिण्डाः। युगपदेकदा। अधिकारिणा सद्यश्शौचप्रयोजकमरणवार्त्ताऽनुदिते सूर्ये एव दातव्या। सूर्योदयानन्तरमधिकारिणा सूर्य उदिते स्नात्वा दश पिण्डान् दत्वा आद्यश्राद्धं कृत्वा नखलोमच्छेदनं कुर्यादिति सद्यः शौचविधिः सम्प्रदायसिद्धः समाचारः।

(१) पितौंभिया मिथिलाभाषायाम्।

## अथास्थिसञ्चयः।

तत्रास्थिसञ्चयकालमाह—अस्थिसंचयमित्युपक्रम्य ब्रह्मपुराणे—

चतुर्थे ब्राह्मणानान्तु पञ्चमेऽहनि भूभुजाम्।
सप्तमे वैश्यजातीनां शूद्राणां दशमेऽहनि॥
कर्तव्यन्तु नरैः श्राद्धं देशकालाविरोधतः।

तथा च देशकालानुसारेणास्थिसंचयः कार्य इत्यर्थः, इति संपूर्णाशौचेऽस्थिसञ्चयस्य मुख्यकालः। अल्पाशौचे आह। छन्दोगपरिशिष्टे—

त्र्यहाशौचे द्वितीयेऽह्नि कर्तव्यस्त्वस्थिसंचयः।
सद्यश्शौचे तत्क्षणन्तु कर्त्तव्य इति निश्चयः॥

त्र्यहाशौचे तृतीयेऽह्नि इति गौणः। अस्थिसंरक्षणाशक्तौ तु गौणकालमाह रत्नाकरे संवर्त्तः—

प्रथमेऽह्नि तृतीये वा सप्तमे नवमेऽथवा।
अस्थिसंचयनं कार्यं निजैस्तद्गोत्रजैर्मृते॥

इति श्राद्धयोग्यस्य बालादेर्दाहेऽशौचान्तिमदिन एवास्थिसञ्चयस्तदुत्तरदिने ब्राह्मणभोजनमिति सम्प्रदायसिद्धव्यवहारः।

गङ्गास्थिप्रक्षेपे फलमाह यमः—

गङ्गातोयेषु यस्यास्थि प्लवते शुभकर्मणः।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन॥
दशाहाभ्यन्तरे तस्य गङ्गातोयेऽस्थि मज्जति।
गङ्गायां मरणे यादृक्तादृक्फलमवाप्नुयात्॥

ब्रह्मपुराणे—

अस्थीनि मातापितृपूर्वजानां नयन्ति गङ्गामपि ये मनुष्याः।
सद्भक्तिका वाऽपि दयाभिभूतास्तेषान्तु तीर्थानि फलप्रदानि॥
मातुः कुलं पितृकुलं वर्जयित्वा नराधमः।
अस्थीन्यन्यकुलोत्थानि नीत्वा चान्द्रायणं चरेत्॥

अत्र मात्रादिवंशद्वयं विहायान्यवंशानां दृष्टप्रयोजनार्थितयाऽस्थिनयने दोष इति वाचस्पतिमिश्राः। दृष्टप्रयोजनं द्रव्यलाभादिः, एतेन पुण्यरूपादृष्टप्रयोजनार्थितया पित्रादिवंशद्वयतिरिक्तस्यापि समानजातीयस्यास्थिनयने न दोष इति पर्यवसितम्।

अस्थिप्रक्षेपे विधानमाह श्राद्धविवेके—स्नात्वाऽस्थीनि पञ्चगव्येन संप्रोक्ष्य हिरण्यमध्वाज्यतिलैः संयोज्य मृत्पिण्डके निधाय दक्षिणां दिशं पश्यन् 'ॐनमो धर्माय' इति वदन् जलं प्रविश्य प्रेतगतस्वर्गकामो दक्षिणाभिमुखः 'स मे प्रीयताम्'इत्युक्त्वा गङ्गायामस्थि निःक्षिपेत्। ततो दक्षिणां दद्यात्।
तीर्थचिन्तामणौ—

'एवं कृते प्रेतपुरे स्थितस्य स्वर्गे गतिः स्यात्तु महेन्द्रतुल्या' इति।

## अथाशौचे त्याज्यात्याज्य-विचारः

आश्वलायनः—'नैवास्यां रात्रावन्नं पचेयुस्त्रिरात्रमक्षारलवणाशिनश्च स्युर्द्वादशरात्रं महागुरुष्विति' महागुरवो माता पिता आचार्यश्चेति। तथा चाशौचिनामशौचाधिकरणरात्रौ पाकनिषेधः। अशौचभागिनां त्रिरात्रं क्षारलवणनिषेधः। महागुरुषु मृतेषु द्वादशरात्रं क्षारलवणभक्षणनिषेधः। तेन सैन्धवलवणभक्षणे न दोषः, इति पर्यवसितम्।

अग्निहोतॄणां दाहदिनमारभ्य तद्भिन्नानां च मरणदिनमारभ्याशौच-मुत्पद्यते, तथाहि--

'मरणादेव कर्तव्यः संयोगो यस्य नाग्निना।
दाहादूर्ध्वमशौचं स्याद्यस्य वैतानिको विधिः'॥

इति शङ्खवचनात्। यातेऽप्यशौचेऽज्ञाते न श्राद्धादिकर्मप्रतिरोधः किन्तु ज्ञाते एवाशौचे तत्प्रतिरोधः। तथाहि ब्रह्मपुराणे--

अपि दातृगृहीत्रोश्च सूतके मृतके तथा।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथंचन॥
विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तं क्रमादिति॥

विज्ञानं विशेषतो ज्ञानं निश्चयात्मकमिति यावत्, तथा च निश्चयात्मक-ज्ञानविषयेऽशौचे कर्मप्रतिरोध इति पर्यवसितम्। अशौचे त्याज्यानाह जाबालः--

सन्ध्यां पञ्च महायज्ञान् नैत्यकं स्मृतिकर्म च।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया॥ इति।

तन्मध्ये स्वस्वाशौचमध्ये हापयेत्त्यजेत्। दशाहान्तपदं स्वस्वाशौचान्त-द्वितीयदिनोपलक्षकम्। पुनः पुनः क्रियेति कर्त्तव्येति शेषः।

पञ्चमहायज्ञानाह छन्दोगपरिशिष्टे--पञ्चैव महायज्ञा भूतयज्ञो मनुष्य-यज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति।

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥
श्राद्धं वा पितृयज्ञः स्यात्पित्रोर्बलिरथापि वा।

सङ्कल्पितव्रतमशौचेऽपि कर्त्तव्यम्। तथा च विष्णुः-'न व्रतिनां व्रते' इति व्रतिनामारब्धव्रतानां न व्रते इति अशौचं प्रतिरोधकमिति शेषः। तिथि-तत्त्वे विष्णुः—

व्रतयज्ञविवाहेषु(१) श्राद्धे होमेऽर्चने जपे।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्॥

---

(१) पितुरब्दमशौचं स्यात् षण्मासं मातुरेव च। त्रैमासिकं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः॥ अनेन पितृमरणदिनादेकवर्षपर्यन्तं पुत्रस्योपनयनादि माङ्गलिकं कर्म न कर्त्तव्यम्। एवं मातुः

आरम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ।
निमन्त्रणं तु वा श्राद्धे प्रारम्भः स्यादिति स्मृतिः ॥

सूतकपदमशौचमात्रोपलक्षकं, नान्दीश्राद्धमाभ्युदयिकं, विवाहादावित्यादिपदादुपनयनादिपरिग्रहः । अपवादमाह, यमः—

दैवे भये समुत्पन्ने प्रधानाङ्गे विनाशिते ।
पूर्वसङ्कल्पिते चार्थे तस्मिन्नाशौचमिष्यते ॥

ब्रह्मपुराणे—गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः ।
पश्चादशौचे पतिते न भवेदिति निश्चयः ॥

अशौचप्रयुक्तकर्मप्रतिरोध इति शेषः ।

मरीचिः—लवणे मधुमांसे च पुष्पमूलफलेषु च ।
शाककाष्ठतृणेष्वेवं दधिसर्पिःपयस्सु च ॥
तैलौषध्यजिने चैव पक्वापक्वे स्वयं गृहे ।
पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ॥

सर्पिर्घृतम् । पयोऽत्र दुग्धम् । पक्वं सक्तुमोदकादि, अपक्वं तण्डुलादि, तथा च लवणादीनामुक्तानामशौचिनोऽपि ग्रहणे न दोषः । पक्वापक्वयोस्त्वशौचिसम्बन्धिनोः स्वयं ग्रहणे न दोषः अशौचिहस्ताद्ग्रहणे तु दोष एवेति भावः(१) ।

सम्पूर्णाशौचसङ्करमाह ब्रह्मपुराणे—

आद्यं भागद्वयं यावत्सूतकस्य तु सूतके ।
द्वितीये पतिते चाद्यात् सूतकाच्छुद्धिरिष्यते ।
अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृता(२) ॥

---

षण्मासपर्यन्तम् । स्त्रियास्त्रैमासिकमशौचम् । भ्रातृपुत्रयोः सार्धैकमासमशौचम् । अत्र कालः सौरो ग्राह्यः । 'वर्षायनर्त्तुयुगपूर्वकमत्र सौरादिति' सिद्धान्तशिरोमण्युक्तत्वात् ।

(१) 'एवमेव विचार्यं स्यान्मृतके मृतकान्तरे ।' इति ।

(२) षट्त्रिंशन्मते—

शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् । शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधिनी ॥

प्रजापतिः—

यथा त्रिरात्रे प्रक्रान्ते दशाहं प्रविशेद्यदि । अशौचं पुनरागच्छेत्तत्समाप्त्या विशुद्ध्यति ॥
अघानां यौगपद्ये तु शुद्धिर्ज्ञेया गरीयसी । मरणोत्पत्तिसंयोगे गरीयो मरणं भवेत् ॥

अशौचान्तिमदिनस्य रात्रिशेषेऽशौचान्तरपाते द्वाभ्यां, प्रभाते तिसृभिः । अत्र रात्रिरेव शेषो यस्याशौचस्येति विग्रहः । प्रभाते तस्यां रात्रौ व्युष्टायां सूर्योदयात्पूर्वमशौचान्तरपाते त्रिभिरहोभिः शुद्धिः । तथाचोक्तं सूर्यब्जाहस्करे—

सूर्योदयानन्तरमेकादशाहे पूर्वमृतश्राद्धाधिकारिणो मुहूर्त्तद्वयाभ्यन्तरे सम्पूर्णाद्यशौचपातेऽग्रिमाशौचव्यपगमेन शुद्धिः । तत्रैव श्राद्धकर्माधिकारश्च । तद्दिने द्विमुहूर्त्तादूर्ध्वं श्राद्धसंकल्पे वृत्तेऽशौचान्तरोपनिपाते आद्यश्राद्धं न प्रतिबद्ध्यते संकल्पस्यानिवृत्तेः । मासिकसपिण्डीकरणानि

विष्णुः—'रात्रिशेषे दिनद्वयेन, प्रभाते दिनत्रयेण' इति। अशौचान्त-द्वितीयदिनेऽशौचान्तरपाते तदशौचान्ते श्राद्धकर्त्तव्यत्वावगमकमनुपदं वक्ष्यते। एतेन सर्ववर्णानां सम्पूर्णाशौचपूर्वार्द्धे सजातीयसमानदिनव्यापकद्वितेया-शौचपाते पूर्वाशौचेऽतीते शुद्धिः। उत्तरार्द्धे उपान्त्यदिनपर्यन्ते द्वितीय-तादृशाशौचपाते उत्तराशौचेऽतीते शुद्धिः। साजात्यन्तु मरणाशौचत्वादिना ते। मरणाशौचे मरणाशौचस्यैव सजातीयत्वं, जननाशौचे जननाशौचस्यैवेति बोध्यम्। अशौचान्तिमाहोरात्रे तादृशद्वितीयपाते अशौचान्तिमद्वितीयदिनं तदग्रिमदिनद्वयं चाशौचम्, अशौचान्तिमदिनप्रभातकाले तादृशद्वितीयाशौच-पाते तत्प्रभातानन्तरं दिनत्रयेण शुद्धिरिति पर्यवसितम्। 'अरुणोदयानन्तरं सूर्योदयं यावत्प्रभात' इति रत्नाकरः।

पञ्च पञ्च उषः कालः सप्तपञ्चारुणोदयः।
अष्टपञ्च भवेत् प्रातः शेषं सूर्योदयो मतः॥ इति।

अरुणोदयकालमाह स्कान्दे—

'उदयात्प्राक् चतस्रस्तु नाडिका अरुणोदयः'॥ इति।

नाडिका दण्डः। त्र्यहाद्यल्पाशौचे सजातीयसमानदिनव्यापकाशौचा-न्तरनिपाते उत्तराशौचव्यपगमेन शुद्धिः।

'अघवृद्धावशौचन्तु परेण तु समापयेत्'।

इति यमवचनात्। अत्र त्र्यहाद्यसंपूर्णाशौचे समानदिनव्यापकाशौचान्त-रपातेऽग्रिमाशौचव्यपगमेन शुद्धिरिति शुद्धिविवेकः। पजातीययोरल्पदिना-धिकदिनव्यापकयोरशौचयोः सङ्करेऽधिकदिनव्यापकाशौचान्तेन शुद्धिः। जननमरणाशौचयोः सङ्करे त्वल्पदिनव्यापकेनापि मरणाशौचेनातीतेनैव शुद्धिः। तदाह कूर्मपुराणे—

अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसी।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्॥ इति।

पैठीनसिः—'सूतिकां पुत्रजननीं विंशतिरात्रेण स्नातां सर्वकर्माणि कार-येत्। मासेन स्त्रीजननीमिति'।

पुत्रीमज्जनतोऽथ सर्व(१)वर्णजननीस्पर्शे दशाहाच्छुचिः'
कर्मार्हा द्विदशाहतः पुरुषसूर्मासात्परं स्त्रीप्रसूः। इति च।

पुत्रोषिता मज्जनतः स्नायात्। शुचिस्तत्कालकर्त्तव्यदानादिकस्ययोग्यः स्पर्शयोग्यश्च। एतेन प्रसूतीनां कन्याजन्मनि मासं पुत्रजन्मनि विंशतिदिनम-

---

द्वादशेऽहनि न भवेयुः। यदि तु एकादशाहे मुहूर्त्तद्वयादूर्ध्वं षोडशश्राद्धसंकल्पात्प्रागेवाशौचा-न्तरमुत्पद्यते तदा श्राद्धपातदोषो दुर्वार एव, तदा **गयायां श्राद्धकरणादेव** कर्त्तुः पातित्यनिवृत्तिः।

सपिण्डीकरणान्तानि प्रेतश्राद्धानि षोडश। यथा कालेन कार्याणि नान्यथा मुच्यते हि सः॥
गयायां पिण्डदानेन प्रेतत्वं मुच्यते ध्रुवम्। अन्यथा पतितो ज्ञेयः सर्वधर्मबहिष्कृतः॥ इति।

(१) वचनेऽस्मिन्नक्षरद्वयमधिकम्।

शौचं, यत्प्रसवनिमित्तकं तन्मरणाशौचेन बाध्यते तस्यास्तादृशप्रसवनिमित्तकजननाशौचमेव बलीयः। तेन प्रसूतीनां पतिमरणेऽपि विंशतिदिनाद्यशौचान्तेनैव शुद्धिरिति पर्यवसितम्। (१)अशौचान्तद्वितीयदिनेऽशौचपाते तु तदशौचे व्यतीते शुद्धिः, तदशौचान्तद्वितीयदिने आद्यश्राद्धं च। एकादशाहोत्पन्नाशौचेन यद्याद्यश्राद्धप्रतिरोधस्तदा तदशौचान्ते श्राद्धकरणे शय्यादानादि न भवतीति द्वैतनिर्णये वाचस्पतिमिश्रलिखनस्वरसात्।

देये पितॄणां श्राद्धे वै अशौचं जायते यदि।
अशौचे तु व्यतीते वै तेषां श्राद्धं प्रदीयते॥

इति ऋष्यशृङ्गवचने सामान्यत एव श्राद्धपदोपादानाच्च।

ब्राह्मणादिचतुर्वर्णानां सपिण्डाशौचमाह मनुः—

शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति॥

चतुर्वर्णानामपि सकुल्ये मृते जाते वा त्रिरात्रमेवाशौचं, गोत्रजे स्नानपर्यन्तमेव।

'त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्ध्यन्ति गोत्रजाः'।

इति बृहस्पतिवचनात्। सापिण्ड्यमाहतुः शंखलिखितौ—

'सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी'। इति।

मनुः—'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते'। इति।

अत्र गोत्रपदं सन्ततिः, तेन बीजिनमारभ्य सप्तपुरुषमभिव्याप्य सर्वेषां सन्तानानां सन्तानिनां च परस्परं सापिण्ड्यम्। एकस्यापि सप्ताधिकत्वेन समं सप्तान्तर्गतस्यापि सापिण्ड्यन्निवर्तते, संयोगवदुभयनिरूप्यत्वादिति द्वैतनिर्णये वाचस्पतिमिश्राः, द्वैतपरिशिष्टे केशवमिश्राश्च। सप्तमे इति सप्तमे सति अनन्तरम् अष्टमे सपिण्डता निवर्त्तत इत्यर्थः। अत्र परस्परं सापिण्ड्यमपि। एतेन पूर्वषट्केनोत्तरषट्केन च मध्यसापिण्ड्यमुक्तं भवति संयोगवदिति। यद्यप्यत्र मानाभावः, तथाऽपि 'सर्वेषामिति' पदात् परस्परप्रतियोगिता लभ्यते इत्याशय इति जीर्णोद्धारे ठक्कुरोपाह्वमधुसूदनः। हारीतः—'अष्टमनवमदशमास्सकुल्या' इति। ज्ञायमानजन्मनां दशमपुरुषाधिकानां

---

(१) श्राद्धमध्यर्या विशेषमाह भृगुः—

एककाले गतासूनां बहूनामथवा द्वयोः। तन्त्रेण श्रपणं कृत्वा कुर्याच्छ्राद्धं पृथक् पृथक्॥

आश्वलायनः—

नैकस्मिन् दिवसे श्राद्धं त्रयाणां कुत्रचिद्द्विजः। एकः कुर्यात्तथा प्राप्ते अन्यो भ्राता समाचरेत्॥
भ्रातर्यविद्यमाने तु तत्परेऽह्नि समाचरेत्। अन्यथा श्राद्धहन्ता स्याच्छ्राद्धं सङ्करकृद्भवेत्॥

एकस्मिन् दिवसे दम्पत्योराद्यश्राद्ध उपस्थिते पूर्वं पत्युः कृत्वा पश्चात्पत्न्याः कार्यम्। पतिपितरि मृते पत्युः पित्रा पिण्डसंमेलनं स्वतः सिद्धमेव। जीवत्यपि पितरि पत्युः पितामहेन पिण्डमेलनम्। पत्न्यास्तु पतिना सह पिण्डमेलनमुचितम्, पत्युः पूर्वमेव सपिण्डीकरणसम्पन्नत्वादिति।

मरणजन्मनोः पक्षिणीति शुद्धिविवेके। दशपुरुषानन्तरं जन्मनाम्नोरविज्ञानेऽस्मत्कुलजा इत्येवमाकारकज्ञानगोचरा गोत्रजा इत्यपि तत्रैव स्मृत्यर्थनिर्णये-केनचित्क्षत्रियेण दशाहाशौचमभ्युपेतम्, तदपत्येनापि तदेवाभ्युपेतं 'सर्वे वा स्युर्दशाहिनः' इति वचनात्। तदा तेषां ब्राह्मणवदेवाशौचं जननमरणयोरनुसन्धेयम्। ये तु षट्त्रितय (खत्री) पदाभिधानेन क्षत्रियत्वाभिधायिनो वैश्याः पारम्पर्येण द्वादशाहाशौचमभ्युपगच्छन्ति, ये तु राजपुत्रपदाभिधानेन पारम्पर्येण द्वादशाहाशौचमङ्गीकुर्वन्ति, ये च देशविशेषनियततया द्वादशाहाशौचमेव शूद्रा मन्यन्ते, तेषां क्षत्रियजात्युक्ताशौचमेव सुधीभिरुपदेष्टव्यम्। पारम्पर्यसिद्धतया तस्यापि शास्त्रार्थत्वादिति गोकुलनाथोपाध्यायचरणाः। तथा चाशौचसङ्करादिकमपि तादृशस्थले ब्राह्मणादिरीत्यैव तादृशक्षत्रियादीनामपि अवगन्तव्यमिति भावः।

अथ कन्यामरणाद्यशौचम् (१)। तत्र यद्यपि कन्याबालकयोः सपिण्डत्वसत्त्वात् प्रागुक्तमनुवचनेन तयोरपि दशाहाद्यशौचमेव प्राप्यते तथापि 'सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेदि' त्यनेन विशेषवचने बलवत्त्वात्तयोरल्पाशौचमेव। विशेषवचनमाह ब्रह्मपुराणे--

आजन्मनस्तु चूडान्तं यत्र कन्या विपद्यते।
सद्यः शौचं भवेत्तत्र सर्ववर्णेषु नित्यशः॥
ततो वाग्दानपर्यन्तं यावदेकाहमेव हि।
अतः परं प्रवृद्धानां त्रिरात्रमिति निश्चयः॥
वाक्प्रदाने कृते तत्र ज्ञातश्चोभयतस्त्र्यहम्।
पितुर्वरस्य च ततो दत्तानां भर्तुरेव हि।
स्वजात्युक्तमशौचं स्यात्सूके मृतके तथा॥ इति।

अयं भावार्थः। जन्मतो द्वितीयवर्षपर्यन्तं कन्यामरणे सर्ववर्णानां सद्यः शौचम्। द्वितीयवर्षादूर्ध्वन्तुभ्यमेषा कन्या दातव्या इति वाक्प्रयोगपर्यन्तमेकाहोरात्रमशौचम्। तादृशवाक्यप्रयोगानन्तरं विवाहपर्यन्तं पितृकुले पतिकुले च त्रिरात्रम्। यत्र वाग्दानं नास्ति तत्र द्वितीयवर्षानन्तरं विवाहपर्यन्तमेकाहोरात्रम्। एतद्विषयकमेव 'अहः स्त्वदत्तकन्यासु'-इति याज्ञवल्क्यवचनम्। दाहकर्त्तुस्तत्रापि त्रिरात्राशौचमेव।

'दहित्वा च वहित्वा च त्रिरात्रमशुचिर्भवेत्'।

इति वचनात्। असम्बन्धिद्विजान्दहित्वा वहित्वा च सद्यः शौचम्। सम्बन्धे तु त्रिरात्रमिति पैठीनसिवचनात्। अत्र दहित्वा वहित्वा इति तु आर्षत्वादेव सुष्ठु, लोके तादृशप्रयोगासम्भवात्। तथा हि दहवहधातुभ्यां

(१) मनुः--स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुद्ध्यन्ति बान्धवाः।
यथोक्तेनैव कल्पेन शुद्ध्यन्ति च सनाभयः॥

क्त्वा प्रत्यये इटि च कृते एव दहित्वेत्यादि सिद्ध्यति, तथानिट्धातुत्वादि-डागमो भवतीति दग्ध्वा वोढ्वा इत्येव लोके। विवाहानन्तरं कन्याप्रसवमरणयोः तापित्रोस्त्रिरात्रं, बन्धुवर्गाणां सद्यः। तथाहि ब्रह्मपुराणे—

दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथवा।
स्वमशौचं चरेत्सम्यक् पृथक्स्थाने व्यवस्थिता॥
तद्बन्धुवर्गस्त्वेकेन शुध्येत्तज्जनकस्त्रिभिः॥ इति।

अत्र दत्ता नारी पृथक्स्थाने व्यवस्थिताऽपि प्रसूता मृता वा तत्पतिसपिण्डाः स्वमशौचं चरेयुः। 'दत्तानां भर्त्तुरेव हि' इत्येकवाक्यतबलात् इति मध्यमखण्डार्थ इति द्वैतपरिशिष्टम्। स्वातन्त्र्यात्पतिभिन्नं यमाश्रिता स्त्री भवति तस्य त्रिरात्रमशौचम्। तथाऽऽह स्मृतिः—

पित्रा दत्ता तु या कन्या स्वातन्त्र्यादन्यमाश्रिता।
यं यं श्रितवती भूयस्तस्याशौचं त्र्यहं त्र्यहम्॥
मृतायां वा प्रसूतायां नान्येषामिति निश्चयः।
कामादत्ततयोनिश्चेदन्यं गत्वा व्यवस्थिता॥
तस्यान्यस्य सगोत्रा सा यन्त्वाश्रितवती स्वयम्। इति॥

तस्याशौचमिति यमाश्रिता तस्यैवाशौचं त्र्यहमित्यर्थः। नान्येषामिति तत्सपिण्डानां नाशौचमित्यर्थः (१)॥

अथ गर्भस्रावाशौचमाह ब्रह्मपुराणे—

षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते॥
अत ऊर्ध्वं स्वजात्युक्तमशौचं तासु विद्यते।
सद्यः शौचं सपिण्डानां गर्भस्य पतने सति॥ इति।

षण्मासाभ्यन्तरे तृतीयमासस्योपरीति शेषः। मासत्रयाभ्यन्तरे सर्वासामधिकाशौचस्य वक्ष्यमाणत्वात्तेन मासत्रयोपरि षण्मासं यावत् व्यतीतमाससमसङ्ख्यदिनान्यशौचं सर्ववर्णसाधारणम्, तासां स्त्रीणाम्, तासु स्त्रीषु। मासत्रयाभ्यन्तरे आह मरीचिः-

गर्भस्रुत्यां यथामासमचिरे तूत्तमे त्र्यहम्।
राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव च॥
अष्टाहेन तु शूद्रायाः शुद्धिरेषा प्रकीर्त्तिता॥ इति।

अचिरे मासत्रयाभ्यन्तरे, उत्तमे=उत्तमजातीये ब्राह्मण्यामित्यर्थः। पुंस्त्वमत्राविवक्षितम्, अन्यथा सद्यश्शौचं सपिण्डानामिति प्रागुक्तब्रह्म-

---

(१) प्रसङ्गाद्गृहशुद्धिमाह, संवर्त्तः—

गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषिते। प्रोत्सृज्य मृन्मयं भाण्डं सिद्धमन्नं तथैव च॥
गृहादपास्य तत्सर्वं गोमयेनोपलेपयेत्। बौधायनः—
उदक्दशयोपघाते वेश्मनो भित्तिरक्षणम्। सूर्यरश्म्यप्रवेशोऽग्निज्वालाभिरभिमर्शनम्॥ इति।

पुराणविरोधः स्यात्। तथा च ब्राह्मण्यादीनां प्रसूतीनां प्रागुक्ताशौचं तत्पति-पुत्रादीनां तु सपिण्डानां स्नानलोमनखवापनपर्यन्तमेव गर्भस्राऽशौचमिति भावः। द्विव(१)र्षाभ्यन्तरे बालस्य कन्यायाश्च भूमिखननं, न तु दाहः। तदूर्ध्वं दाह एव सर्ववर्णानां तथा हि—

ऊनद्विवार्षिकं बालं भूमावेव निधापयेत्।
न द्विवर्षस्य कर्त्तव्याः बान्धवैरुदकक्रिया॥ इति।

प्रमादादिना दाहे कृते विशेषमाह तद्दाहमभिधाय ब्रह्मपुराणे—

अनतीतद्विवर्षस्तु प्रेतो यत्रापि दह्यते।
अतिमोहाभिभूतैश्च देशासाधर्म्यमादरात्॥
अशौचं ब्राह्मणानान्तु त्रिरात्रं तत्र विद्यते।
राज्ञामेकादशाहन्तु वैश्यानां द्वादशाह्निकम्॥
अपि विंशतिरात्रन्तु शूद्राणां भवति क्रमात्। इति।

तत्रेति द्विवर्षाभ्यन्तरबालदाहे इत्यर्थः।

अथ बालकमरणाशौचमाह याज्ञवल्क्यः—

आदन्तजननात्सद्य आचूडान्नैशिकी स्मृता।
त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम्॥

आदन्तजननाद् दन्तजननकालपर्यन्तम्, स कालः सप्तमो मासः 'दन्त' जन्म सप्तमे मासि' इत्युपनिषदः। सरोजकलिकायां मर्यादायामत्राङ् तेन सप्तममासात्प्राक् षण्मासपर्यन्तं बालमरणे सद्यःशौचं चतुर्वर्णस्य। अतः परं ब्राह्मणमात्रविषयकं वचनमिति सप्तममासात्प्राक्सद्यश्शौचमिति शुद्धिविवेकः। आचूडात् चूडाकरणकालपर्यन्तं स च तृतीयवर्षः, 'तृतीये वा प्रतिहत' इति वचनात्। आव्रतादेशादुपनयनकालपर्यन्तं स च षड्वर्षान्तः। तथा हि ब्रह्मपुराणे—

'द्विजन्मनामयं कालस्त्रयाणां तु षडाब्दिकः।' इति।

एवमग्रेऽपि व्रतमुपनयनकालः स च षड्वर्षान्तः। अङ्गिराः—

विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी।
द्व्यहेन क्षत्रिये शुद्धिस्त्रिभिर्वैश्ये मृते सति॥
निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरेव च॥ इति।

---

(१) मनुः—ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः। अलंकृत्य शुचौ भूमावस्थिसञ्चयनादृते॥ नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया। अरण्ये काष्ठवत्त्यक्त्वा क्षिपेयुस्त्र्यहमेव च॥ इति।

एवमेवाह याज्ञवल्क्यः—'ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः॥' इति।

अत्र वर्षगणनं सौरमानेन यथा यस्य सौरमासस्य यस्मिन्नंशात्मकदिने जन्म, द्वितीयवर्षे तन्मासि तदंशे तद्वर्षपूर्त्तिरिति ज्ञेयम्। वर्षायनर्त्तुयुगपूर्वकमत्र सौरात्' इत्यनेन सौरमानेनैव वर्षगणनौचित्यात्। तत्र ग्रामाभिमुखशवनिर्हारे दोषः सम्भवति। मृतं द्विजं न शूद्रेण निर्हार-येत् न शूद्रं द्विजेन पितरं मातरं च पुत्रा निर्हरेयुर्न द्विजं पितरमपि शूद्र इति विष्णुः।"

'उपनीतो विप्रस्त्वित्यादि' ब्रह्मपुराणवचनैं क्षत्रियवैश्ययोः षडब्दाभ्यन्तः त्रिरात्राभिधानं वेदाग्निमतोरेव, अन्येषां षडहनवाहौ पूर्वोक्तावेवेति शुद्धिविवेके स्पष्टम् ।

शूद्रविषये हि—

शूद्रे त्रिवर्षान्न्यूने तु मृते शुद्धिस्तु पञ्चभिः ।
अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते ॥

शङ्खः—अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम् ।
मृत्युं समधिगच्छन्ति मासं तस्यापि बान्धवाः ॥
शुद्धिं समधिगच्छन्ति नात्र कार्या विचारणा ॥

अनूढभार्यः, नोढा विवाहिता भार्या येन सः, अविवाहित इति यावत् । विवाहिते शूद्रे मृते आह अङ्गिराः—

षड्वर्षान्तमतीतस्तु शूद्रः संम्रियते यदि ।
मासिकं तु भवेच्छौचमित्याङ्गिरसभाषितम् ॥

अत्र 'षड्वर्षान्तमतीत' इत्यस्य षड्वर्षोऽन्ते यस्य इति व्युत्पत्त्या पञ्चवर्षमतीतः प्राप्त इत्यर्थः । पञ्चवर्षादधो विवाहः स्त्रियाः शूद्रस्य वा न प्रशस्तः । यत्र तयोस्तृतीये चतुर्थे वा विवाहो जातस्तत्र तयोर्मरणे सम्पूर्णाशौचं शास्त्रान्न सिद्धयति, देशाचारादेव तत्र व्यवस्था बोध्या ।

'यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः ।
श्रुतिस्मृत्यविरोधेन सदाचारः स उच्यते' ॥

इति देशकुलाचारस्य व्यवस्थापकत्वादिति स्मृत्यर्थनिर्णये गोकुलनाथोपाध्यायाः । एतावद्ग्रन्थपर्यालोचनया अयमर्थः पर्यवसितः-ब्राह्मणबाले सप्तमासात्प्राक् मृते ब्राह्मणानां सद्यश्शौचम्, तत्र केशनखच्छेदनं स्नानञ्च । सप्तमासमारभ्य जन्मतो द्वितीयवर्षपर्यन्तमेकाहोरात्रमशौचम्, उभयत्र भूमिखननं श्मश्र्वादिच्छेदनञ्च । तदूर्ध्वं षड्वर्षं यावत्त्रिरात्रं, तत्र दाहं कृत्वा पिण्डदानं द्वितीयदिनेऽस्थिसञ्चयनं तदसम्भवे तृतीयदिने पिण्डदानमस्थिसञ्चयनं नखकेशच्छेदनञ्च, चतुर्थदिने ब्राह्मणभोजनमिति । सांप्रदायिकव्यवहारः ।

क्षत्रियाणां सप्तममासपर्यन्तं सद्यः, तदनन्तरं द्विवर्षपर्यन्तं द्व्यहम् । तदूर्ध्वं षड्वर्षपर्यन्तं षड्दिनमशौचम् । वैश्यानां सप्तममासपर्यन्तं सद्यः, तदनन्तरं द्विवर्षपर्यन्तं त्र्यहं, तदूर्ध्वं षड्वर्षपर्यन्तं नवरात्रं, षड्वर्षानन्तरं ब्राह्मणक्षत्रियविशां सम्पूर्णाशौचम्, एकादशाहादिक्रियाश्च । शूद्राणां सप्तममासपर्यन्तं सद्यः, तदनन्तरं द्विवर्षपर्यन्तं पञ्चाहम्, भूमिनिखननं च । तदूर्ध्वं षोडशवर्षपर्यन्तं अविवाहिते मृते द्वादशदिनम्, षोडशवर्षानन्तरं मासमशौचं श्राद्धादिक्रियाश्च । विवाहिते तु पञ्चवर्षानन्तरं 'षड्वर्षान्तमतीत'

इति प्रागुक्ताङ्गिरोवचनात् पञ्चवर्षाभ्यन्तरे च देशकुलाचारान्मासशौचं श्राद्धादिक्रियाश्च ।

भिन्नगोत्रे कृत्रिमादावशौचमाह—

दत्तकक्रुत्रिमादिपुत्रानभिधाय ब्रह्मपुराणे—

भिन्नगोत्राः पृथक् पिण्डाः पृथक् गोत्रकरास्तथा ।
सूतके मृतके चैव त्र्यहाशौचस्य भागिनः ॥

औरसभिन्नपुत्रेषु मृतेष्वशौचमाह शुद्धयेदित्यनुवृत्तौ विष्णुः—आचार्ये मातामहे अतीते त्रिरात्रेण ।

'अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।
परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥' इति ।

एतच्च सर्ववर्णविषयम्, विशेषानभिधानात् ॥ मनुः—

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेतहारैः समं तत्र दशरात्रेण शुद्ध्यति ॥

अस्यार्थः शुद्धिविवेके । यथा हि-यश्शिष्यो वेदाध्येता गुरुकुले तिष्ठन् गुरोः संस्कारं करोति तस्य त्रिरात्रम् । तत्र मनुः—

'त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति ।'

संस्थिते मृते इति । गुरुलक्षणमाह—

अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।

तमपीह गुरुं विद्यादिति ।

बौधायनः--त्रिरात्रमहोरात्रमेकरात्रमिति कुर्वीत आचार्योपाध्यायतत्पुत्रेष्विति । अत्र मृतेष्विति शेषः । मातामहेमृते त्रिरात्रमाह बृहस्पतिः--

त्र्यहम्मातामहाचार्यश्रोत्रियेषु शुचिर्नरः ।
मातुले पक्षिणी रात्रिः शिष्यर्त्विग्बान्धवेषु च ॥

पक्षिणी तु दिनद्वयसहिता रात्रिः 'आगामिवर्त्तमानाहर्युक्तायां निशि पक्षिणी'--इत्यमरकोषात् । तुल्यन्यायात् रात्रिद्वयसहितं दिनमपि पक्षिण्येव । गौतमः--पक्षिण्यसपिण्डे योनिसम्बन्धे सहाध्यायिनि च । मृत इति शेषः । योनिसम्बन्धाश्च-मातृष्वसृपितृष्वसृमातुलमातुलानीमातुलपुत्रमातृष्वस्रेयपितृष्वस्रेयदौहित्रभगिनीभागिनेयाः श्वश्रूश्वशुरौ चेति । स्वगृहे मृते मातुले श्वशुरे गुरौ, स्वगृहमृतायां मातृष्वसरि श्वश्र्वां च त्रिरात्रमिति शुद्धिविवेकः । अत्र योनिसंबन्धाश्च मातुलमातृष्वस्रेयपितृष्वस्रेया इति मिताक्षरा । तत्रैव यम इत्यनुवर्त्य--

मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च ।
अशौचम्पक्षिणी रात्रिर्मृता मातामहो यदि ॥ इति ।

तथा--'संस्थिते पक्षिणी रात्रि दौहित्रे भगिनीसुते ।'

संस्थिते मृते । अथ स्वगृहे कस्मिंश्चिन्मृते गृहस्थस्याशौचमाहाङ्गिराः—

गृहे यस्य मृतः कश्चिदसपिण्डः कथञ्चन।
तस्याप्यशौचं विज्ञेयन्त्रिरात्रमिति निश्चयः॥

गौतमः—मत्स्यमांसादि न भक्षेयुराप्रदानात्। प्रदानमाद्यश्राद्धम्। तेन मांसादिभक्षणनिषेधोऽशौचाभ्यन्तरे सर्वसाधारण इति शुद्धिनिर्णयः। आप्रदानाच्छ्राद्धे मांसप्रदानादित्यर्थ इति रत्नाकरः। अशौचप्रकरणे—

मनुः—'मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ।'

आप्रदानादिति स्वरसात् मृतकाशौचे एव मांसादिभक्षणनिषेधो न तु जननाशौचे। मार्कण्डेयपुराणे—

तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनं च यत्।
तेन वाऽऽप्यायते जन्तुर्यच्चाश्नन्ति सुबान्धवाः॥ इति।

अयञ्चाभ्यङ्गोऽस्थिसञ्चयनानन्तरमिति वाचस्पतिमिश्राः।

अथाशौचान्तिमदिनकर्तव्यमाह बृहस्पतिः—

'नवमे वाससां त्यागो नखलोम्नां तदन्तिके।'

नवम इति अशौचोपान्त्यदिनोपलक्षकम्। ब्रह्मपुराणे—

यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमन्त्वहः।
स तत्र वस्त्रशुद्धिं च गृहशुद्धिं करोत्यपि॥
समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम्।
ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे च वाससी॥
अन्त्यानामाश्रितानां च त्यक्त्वा स्नानङ्करोति च।
(१) श्मश्रुकेशनखानां च यत्त्याज्यं तज्जहात्यपि॥

पश्चिमम् अशौचान्तिमम्, वस्त्रशुद्धिः वस्त्रप्रक्षालनम्, गृहशुद्धिरुपलेपनादिः, पिण्डदानानन्तरं श्राद्धकर्तुर्नखकेशच्छेदनं समाप्य 'दशमम्पिण्डमित्यादि' स्वरसात्साम्प्रदायिकव्यवहाराच्च, त्याज्यं जहात्यनेनात्याज्यानाङ्कक्षाक्षिकेशानां शिखानां च न त्याग इत्यवगम्यते। अत एव वशिष्ठः—'श्मश्रुकेशनखान् वापयेदक्षिलोमशिखावर्जम्' इति। वपनं केषामित्याहापस्तम्बः—'एषु चोदकदानन्तावन्तङ्कालमनुभाविनां च परिवापनम्।' अनुभवन्तीत्यनुभाविनः, अनुभवशालिन इति यावत्। अनुभवस्तु सपिण्डादिमरणस्य तेन सपिण्डा-

---

(१) इदं च क्षौरं निषिद्धकालेऽपि कार्यम्।
क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम्। पित्रादिमृतियात्रासु प्रायश्चित्ते च तीर्थके॥' इति।
तत्र निषिद्धकालस्तु—
'रव्यारसौरवारेषु रात्रौ पाते व्रताहनि। श्राद्धाहः प्रतिपद्रिक्ता भद्राः क्षौरेषु वर्जयेत्॥' इति।
केचन निषिद्धसमये क्षौरस्यावश्यककर्त्तव्ये मन्त्रमिमं पठन्ति—
'केशवमानर्त्तपुरं पाटलिपुत्रपुरीमहिच्छत्राम्।
दितिमदितिं च स्मरतां क्षौरकर्मसु भवति कल्याणम्॥' इति।
तत्र—'उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत् धीः।' इत्यपरार्के।

दिमरणानुभवशालिनां सर्वेषामेव वापनमिति पर्यवसितम् । यत्तु अनु पश्चाद्भावि इत्यनुभाविनः कनिष्ठाः, तेन प्रेतकनिष्ठानामेव वपनमिति वाचस्पतिमिश्रैर्व्याख्यातं तच्च व्यवहारविरोधात्त्याज्यमेव, व्यवहारविरोधानुरोधेन रत्नाकरलिखितमप्युपेक्षितम् । यत्र व्यवहारविरोधो नापतितः, तत्र 'यथारत्नाकरमेव व्यवस्थेति' ग्रन्थेन शुद्धिविवेककर्त्रा व्यवहारबलवत्त्वस्योक्तत्वात् । मनुः-

विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥
अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ।
संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति ॥

गौतमः—'श्रुत्वा चोर्ध्वं दशम्याः पक्षिणी' इति ।

देवलः—ऊर्ध्वं संवत्सरार्द्धात्तु श्रूयते चेन्मृतः स्वकैः ।
भवेदेकाहमेवात्र तच्च संन्यासिनां न तु ॥

एषां वचनानामयं भावः-अशौचाभ्यन्तरे मरणश्रवणेऽवशिष्टाऽशौचदिनं यावदशुद्धिः । अशौचान्तिमदिनानन्तरं षण्मासाभ्यन्तरं मरणश्रवणे त्रिरात्रम् । षण्मासानन्तरं नवममासपर्यन्तं पक्षिणी । तदनन्तरं वर्षं यावदेकाहोरात्रम् । वर्षानन्तरं स्नानोदकदानपर्यन्तमेवाशौचमिति सर्ववर्णानां सम्पूर्णाशौचविषयम् ।

असम्पूर्णत्र्यहाद्यशौचे तु अशौचाभ्यन्तरे मरणश्रवणेऽवशिष्टाशौचकालेन, तादृशाशौचकाले व्यतीते तु स्नानोदकदानमात्रेण शुद्धिः । तथा हि याज्ञवल्क्यः—

'प्रोषिते कालशेषः स्यात्पूर्णे दत्त्वोदकं शुचिः' इति ।

त्रिरात्रादावशौचकाले व्यतीतेऽशौचाभाव एव इति शुद्धिविवेकः । जननाशौचाभ्यन्तरे जननश्रवणेऽवशिष्टाशौचकाले व्यतीते शुद्धिः । तदशौचानन्तरे जननश्रवणेऽशौचाभावः ।

'नाशौचं प्रसवस्यास्ति व्यतीतेषु दिनेष्वपि ।' इति देवलात् । षष्टियोजनानन्तरदेशो देशान्तरम् । षष्टियोजनाभ्यन्तरेऽपि भाषाभेदगिरिमहानद्येतावत्समुदायव्यवहितदेशो देशान्तर एव, तादृशदेशान्तरयोर्म्मृते सपिण्डानामपि सद्यः शौचमेव । तदाह पैठीनसिः--'देशान्तरमृतस्य सद्यः शौचं सपिण्डस्यापि' इति शेषः । अत्र रुद्रधरोपाध्यायाः-गिर्यादिव्यवधानाभावेऽपि शास्त्रीयषष्टियोजनानन्तरे प्रयागे मृतस्य तीरभुक्तिदेशस्थितं प्रति देशान्तरमृतत्वव्यवहारः । प्रामाणिकास्तु--त्रिंशद्योजनानन्तरे काश्यां मृतस्य गिर्यादिसमुदायव्यवधानाभावात्तीरभुक्तिदेशस्थितं प्रति न देशान्तरमृतत्वव्यवहार इति प्राहुः । एतच्च दिक् प्रदर्शितम् । तेन यत्रैतादृशानन्तर्यमेतादृशसमुदायाव्यवधानं वा तद्देशे देशान्तरत्वाद्देशान्तरत्वमिति पर्यवसितम् ।

मृतस्य त्रिविधा क्रिया पूर्वा मध्यमा उत्तरा चेति । तत्र दाहमारभ्याशौचा-

न्तिमर्दनपर्यन्तकर्त्तव्यक्रिया पूर्वा, एकादशाहसपिण्डनान्तक्रिया मध्यमा, तदुत्तरैकोद्दिष्टादिरूपोत्तरा, तत्र पितृमातृसपिण्डादयः पूर्वां क्रियां कुर्युः। मध्यमायामनियमः। उत्तरां च न कुर्युः। पुत्रपत्नीसोदरभ्रातापिताभ्रातृपुत्राः, इति चोत्तरक्रियायामप्यधिकारिणः।

पितृमातृसपिण्डैस्तु समानसलिलैस्तथा।
तत्सङ्घातान्तर्गतैर्वाऽपि राज्ञा वा धनहारिणा॥

## अथ श्राद्धाधिकारनिर्णयः।

पूर्वाः क्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तरा। इति विष्णुपुराणात्।

तत्राधिकारिपौर्वापर्यक्रमः। तत्र प्रथममौरसः, तदभावे पुत्रिकापुत्रः (दौहित्रः)। तयोरभावे क्षेत्रजादिदशपुत्रा मनूक्तक्रमेणाधिकारिणः, तथाहि--

मनुः--औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च॥
पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा।
स्वयं चोपगतः पुत्रा द्वादशैते प्रकीर्त्तिताः॥

औरसेष्वपि बहुषु सत्सु सर्वपुत्रानुमतो ज्येष्ठ एव श्राद्धाधिकारी। तदाह,

मरीचिः--मृते पितरि पुत्रेण क्रिया कार्या प्रयत्नतः।
बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः॥
सर्वेषान्तु मतं कृत्वा ज्येष्ठेनैकेन यत्कृतम्।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्॥ इति।

अत्र सर्वेषामेवानुमतिर्द्रव्यार्पणद्वारा श्राद्धनिष्पादने प्रत्यवायपरिहारादिति फलसिद्धिः। सत्यप्यधिकारे न पृथगनुष्ठानं वचनाभावादित्यर्थः। एवं च यत्र देशान्तरादौ अनुमतिद्रव्यश्लेषयोरभावस्तत्र पृथगेव श्राद्धम्। अन्यथा प्रत्यवायपरिहारो न स्यादिति शुद्धिविवेकः। यत्तु--

'पृथक् नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्।'

इति लघुहारीतवचनं तत्सर्वेषामनुमतौ द्रव्यसंश्लेषे च पृथक्करणनिषेधकम्। बृहस्पतिः--

अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैः।
न शक्यतेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः॥ इति।

इदन्तनैः कलियुगस्थैः। कलिधर्मप्रस्तावे पराशरः--

'औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः।'

कर्तव्य इति शेषः। अत्र क्षेत्रजपदमौरसविशेषणमिति पुत्रमीमांसायां नन्दपण्डितः। तथा च कलौ औरसदत्तकृत्रिमपुत्राः कर्तव्याः। पुत्रिकापुत्रोऽपि कर्तव्यः औरससमत्वात्। औरससमत्वमाह याज्ञवल्क्यः-'तत्समः

पुत्रिकापुत्रः' इति तत्पदमौरसपरम्। एतच्चतुष्टयभिन्नाः पुत्रा न कर्तव्या द्विजैः कलौ। शूद्रैस्तु पौनर्भवा अपि पुत्राः कर्तव्याः। अत एव शूद्रस्य त्वनूढभार्याजातस्य पुत्रस्य पितृश्राद्धे पौनर्भवत्वादधिकार इति। अनूढशूद्राजातस्य पुत्रस्य जनकशूद्रश्राद्धादावतितरामधिकारः। यत्र च शूद्रस्य विवाहिता भार्या, तथाविधः पुत्रश्च तत्रापि स पुत्र एवाधिकारीति शुद्धिविवेककारा लिखन्ति स्म। स पुत्र एवानूढभार्याजातपुत्र एव इत्यर्थः। शूद्रस्यानूढभार्याऽविवाहितैव, अत एव 'शूद्रस्य द्वे भार्ये ऊढानूढे' इति स्मृतिसारेऽभिहितम्। पुत्रसामान्याभाव एवौरसभिन्नपुत्रकरणम्—

अपुत्रेण सुतः कार्यो यादृक्तादृक् प्रयत्नतः।
पिण्डोदकक्रियाहेतोर्नामसङ्कीर्तनस्य च' ॥ इति वचनात्।

अपुत्रेण द्वादशविधपुत्ररहितेन इति रत्नाकरः। नन्वेवं तर्हि विद्यमान एव युधिष्ठिरपुत्रे पाण्डुर्भीमसेनादीन् क्षेत्रजान् कथमकरोदिति चेत्? ते देवकल्पास्तेषामाचारो नादरणीयो न वा निन्दनीयः।

कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा
नाचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् ॥

इति पुत्रमीमांसाधृतवचनात्। कृत्रिमपुत्रानन्तरमौरस उत्पन्ने कनिष्ठोऽपि औरस एव ज्येष्ठः स एव श्राद्धाधिकारी ज्यैष्ठत्वात्।

'औरसे पुनरुत्पन्ने ज्यैष्ठ्यन्तेषान्निवर्तते।'

इति वचनात् तेषां कृत्रिमादीनामित्यर्थः। अत्र क्रोडपत्रम्—'अपुत्रेण सुतः कार्य' इति प्रागुक्तवचनस्य योग्यपुत्राभाववता सुतः कार्य इति व्याख्यामभिप्रेत्य श्राद्धकरणायोग्येऽतिबालपुत्रादौ सत्वेऽपि कृत्रिमादयो भवन्तीति रामेश्वरोपाध्यायचरणाः। अपुत्रेणेति विद्यमानपुत्राभाववतेति व्याख्यामभिप्रेत्य पुनः गर्भस्थसन्देहेऽपि न कृत्रिमादिकरणमिति वंशधरोपाध्यायाः। व्यवहारस्तु तत्तन्मतानुयायिनां तत्तन्मतव्याख्यानुसारेणेति।

अत्र पुत्रलक्षणमाह, मनुः—

संस्कृतायां तु भार्यायां स्वयमुत्पादयेत्तु यम्।
तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ॥ इति।

तथा च स्वविवाहितपाणिगृहीतायां स्वोत्पादितः पुत्र औरसः इत्यर्थः। पुत्रिकापुत्रमाह, वशिष्ठः—

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम् ॥ इति।

स्वधाकरं श्राद्धकरमित्यर्थः। तथा च कन्यादानकालेऽस्यां यः पुत्रो भविष्यति स मम पुत्रो भविष्यतीति व्यवस्थाऽनन्तरं तस्यां यः पुत्रो भवति स पितृमातामहयोर्द्वयोरपि श्राद्धाधिकारी। तदाह—

देवलः—तत्तुल्यः पुत्रिकापुत्रो दायादस्सोऽथवा भवेत्।
पितुर्मातामहस्यापि निरपत्यस्य पुत्रवदिति॥

अथ पौनर्भवमाह विष्णुः—
या तु पित्रा परित्यक्ता विधवा स्वेच्छयाऽथवा।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते॥ इति।

पुनर्भूत्वा पुनः पुरुषान्तरेण सवर्णेनात्मानं विधाय यं पुत्रमुत्पादयति स पौनर्भवः। कात्यायनः—
क्लीबं विहाय पतितं या पुनर्लभते पतिम्।
तस्याम्पौनर्भवो जातो व्यक्तमुत्पादकस्य सः॥ इति।

अथ दत्तकपुत्रानाह, मनुः—
माता पिता वा दद्यातां यमद्भिः पुत्रमापदि।
सदृशं प्रीतिसंयुक्तौ स ज्ञेयो दत्तकः सुतः॥ इति।

अद्भिः जलैः। जलपदं तिलकुशादीनामप्युपलक्षकम्। आपदि पुत्रासत्त्वे, सदृशं समानजातीयम्, प्रीतिसंयुक्ताविर्त्यनेन भयलोभादिना कृतो न दत्तकः, किन्तु प्रीत्या कृतो दत्तक इति पर्यवसितम्। तथापि सति पत्यौ तदाज्ञया, असति पत्यौ तदाज्ञाविरहेऽपि स्त्रिया दानाधिकारः। 'न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः।' इति वशिष्ठवचनात्॥ 'असति पत्यौ अनुज्ञां विनाऽपि' इति वाचस्पतिलिखनाच्च। एवं शूद्रस्यापि दानेऽधिकारो न ग्रहणे। 'स्त्रीशूद्राश्च सधर्माणः' इति वचनात्। स्त्रीशूद्रग्रहणयोर्निषेधस्तु पुत्रग्रहणाङ्गभूतवैदिकमन्त्रसाध्यव्याहृतिहोमे तयोरनधिकारादेकपुत्रवतां पुत्रदानेऽनधिकारः। 'नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषाम्' इति वाशिष्ठात्।

अत्र पुत्रग्रहणप्रकारः। प्रथमं नित्यकर्म विधायाग्निस्थापनं कृत्वाऽऽघाराज्यभागौ हुत्वा महाव्याहृतिहोमं पञ्चवारुणहोमं सर्वप्रायश्चित्तप्राजापत्यस्विष्टकृद्धोमञ्च कृत्वा व्याहृतिहोमं कुर्यात्। होमानन्तरं पूर्णाहुतिं दत्त्वा पुत्रं गृह्णीयात्। दत्तकस्य जनकगोत्रन्तत्पिण्डदातृत्वं वा तद्धनहारित्वं न तिष्ठति, तथाहि,-मनुः—
ऋक्थगोत्रे जनयितुर्न हरेत्कृत्रिमः सुतः।
ऋक्थगोत्रानुगः पिण्डो व्यपैति ददतः स्वधाम्॥ इति।

किन्तु येन गृहीतः तस्यैव गोत्रं पिण्डदत्वं धनहारित्वं च दत्तकस्य।

अथ कृत्रिमपुत्रमाह मनुः—
सदृशं यं प्रकुर्वीत गुणदोषविचक्षणम्।
पुत्रं पुत्रगुणैर्युक्तं स ज्ञेयः कृत्रिमः सुतः। इति।

सदृशः समानवर्णः, कृत्रिमः सवर्ण इति विवादचन्द्रात्।

कृत्रिमस्तु-मत्पुत्रत्वकरस्य पिण्डप्रदो निजपित्रादीनाञ्च पिण्डप्रद इति व्यामुख्यायनः। तद्विधिस्तु पुत्रकर्त्ता त्वम्मम पुत्रो भवेति वदेत्। तव पुत्री-भूतोऽस्मीति कृतो वदेत्। वस्तुदानमत्राचारप्राप्तं न त्वावश्यकं, पुत्रकरणे उभयोरनुमतिरेव प्रयोजिका, तेन वाक्यविशेषस्य न पुरस्कारः इति रुद्रधरः। भ्रातॄणां मध्ये ज्येष्ठः सोदरभ्रातृरहितोऽपि कृत्रिमो भवत्येव अपवादका-भावात्। पुत्राभावे पौत्रस्तु तदभावे प्रपौत्रोऽधिकारी। तथाहि विष्णुः—

'पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः।' इति।

प्रपौत्राभावे पत्नी, तदभावे सहोदरः। तथाहि, शङ्खः—

पुत्राभावे तु पत्नी स्यात्पत्न्यभावे सहोदरः।

इति पुत्रपदमत्र पौत्रप्रपौत्रपदयोरप्युपलक्षकमिति स्मृतिसमुच्चये हरि-नाथोपाध्यायाः, अतो न विष्णुक्रमविरोधः। सहोदरेष्वपि प्रथमं कनिष्ठः, कनिष्ठाभावे ज्येष्ठः।

(१)'न पुत्रस्य पिता दद्यान्नानुजस्य तथाऽग्रजः।' इति कनिष्ठभ्रातृसद्भावे ज्येष्ठस्यानधिकारबोधकच्छन्दोगपरिशिष्टवचनात्। तत्राप्यव्यवहितावेव ज्ये-ष्ठकनिष्ठौ प्रथमत्यागे मानाभावादिति न्यायात्। सोदराभावे पिता, 'पुत्रो भ्राता पिता वाऽपि' इति प्रचेतोवचनात्, पुत्रपदमत्र पत्नीपर्यन्तोपलक्षक-मतो न विष्णुपुराणादिविरोधः। पितुरभावे सोदरभ्रातृपुत्रः।

'पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः।'

इति प्रागुक्तविष्णुपुराणाद्भ्रातृसन्ततिः। सोदरभ्रातृपुत्रः, तदभावे स्नुषा इति वाचस्पतिमिश्राः। तदभावे सपिण्डा अधिकारिणः, 'पुत्राभावे सपिण्डाः' इति गौतमवचनात्। पुत्रपदमत्र स्नुषापर्यन्तोपलक्षकम्। सपिण्डेष्वपि सन्नि-हितज्येष्ठसपिण्डोऽधिकारी सपिण्डाभावे दुहिताऽधिकारिणी।

'अपुत्रस्य च या पुत्री साऽपि पिण्डप्रदा भवेत्।' इति वचनात्। दुहितुर-

---

(१) अथ प्रसङ्गाज्जीवत्पितृकश्राद्धम्। तत्र पारस्करः—

'पित्रादित्रिषु जीवत्सु श्राद्धं न कर्त्तव्यम्, अत्र षण्णां पुरुषाणां मध्ये यो यो जीवति, तं तं विहाय पुरुषान्तरमादाय श्राद्धं कर्त्तव्यम्। मातामहादित्रिषु जीवत्सु पित्रादित्रिकमात्रश्राद्धं कर्त्तव्यम्।' इति।

तथा च विष्णुः—'पितरि जीवति यः श्राद्धं कुर्यात्, पिता येषां कुर्यात् तेषां कुर्यात्, पितरि पितामहे च जीवति पितामहो येषां कुर्यात्तेषां कुर्यात्पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्। यस्य पिता प्रेतः स्यात् स पित्रे पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात्। यस्य पिता पितामहश्च प्रेतौ स्यातां, स ताभ्यां पिण्डौ दत्त्वा पितामहप्रपितामहाय दद्यात्। यस्य पितामहः प्रेतः स्यात् स तस्मै पिण्डं निधाय प्रपितामहात् परं द्वाभ्यां दद्यात्। यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात्। मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः।' इति। अतएव पित्रादित्रिषु जीवत्सु वृद्धिश्राद्धमपि न भवति।

भावेऽष्टमपुरुषादिसमानोदकसन्ततिः। सपिण्डसन्तत्यन्तमभिधाय एषामभावे सर्वेषां समानोदकसन्ततिरिति विष्णुपुराणात्। मनुः—

'समानोदकभावस्तु निवर्त्तेताचतुर्दशात्।' इति।

समानोदकभावे मातृसपिण्डास्तेषामभावे मातृसमानोदकाः। तथाहि विष्णुपराणम्—'मातृपक्षस्य पिण्डेन सम्बन्धो यो जलेन च'इति पिण्डेन सम्बन्धः सपिण्डः। जलेन सम्बन्धः समानोदक इत्यर्थः। उभयकुलाभावे माताऽधिकारिणी।

'स्वमाता कुरुते तेषां तेऽपि तस्याश्च कुर्वते।'

इति वचनात्तेषां पुत्राणाम्। मातुरभावे यथा कथञ्चित्परिगृहीता स्त्री। 'कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्या क्रिया नृप!' इति वचनात्। स्त्रीभिरिति अयथापरिगृहीतस्त्रीभिः, इति पुरुषश्राद्धाधिकारिणः। स्त्रियास्तु प्रथमम् औरसपुत्रोऽधिकारी, तदभावे सपत्नीपुत्रः, तदभावे कृत्रिमादयः।

'विदध्यादौरसः पुत्रो जनन्या और्ध्वदेहिकम्।
तदभावे सपत्नीजः कृत्रिमाद्यास्तु तावृते॥'

इति वामदेवोपाध्यायधृतस्मृतेः। औरससपत्नीपुत्राभ्यां विनेत्यर्थः। तदभावे पतिः, पत्युरभावे स्नुषा। तदभावे पौत्रप्रपौत्रो क्रमेण, तयोरभावे सपिण्डाः तथाहि, शङ्खः—

भार्यापिण्डं पतिर्दद्यात्पत्यु र्भार्या तथैव चं।
श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः॥ इति।

श्वश्र्वादेरित्यादिपदात्। श्वशुरपरिग्रहः तेनैतद्वचनबलादेव भ्रातृसत्त्वे पत्न्या देवरादिसत्त्वे श्वश्रूश्राद्धे सपिण्डसत्त्वे च श्वशुरश्राद्धे स्नुषाया अधिकारः सिद्ध इति श्राद्धचिन्तामणौ वाचस्पतिमिश्राः। सपिण्डाभावे सकुल्याः, तदभावे पितृसपिण्डा इति। शुद्धिविवेके तु पुत्राभावे पतिस्तदभावे सपत्नीपुत्र इति लिखनं सम्प्रति मिथिलाव्यवहारविरुद्धमतस्तदुपेक्ष्यम्। शुद्धिविवेककृताऽपि 'व्यवहारविरोधाद्रत्नाकरलिखनस्योपलक्षणात्' (इत्युक्तम्)।

पुत्रसपत्नीपुत्ररहितायास्सपिण्डनन्नास्ति। किन्तु वक्ष्यमाणावीराकल्पविधानेन चतुर्थादिदिनक्रमेणैव श्राद्धमधिकारिणा कर्त्तव्यम्। तथा हि सरोजकलिकायां गोभिलः—

अपुत्रायां मृतायान्तु पतिः कुर्यात्सपिण्डनम्।
अभावे पत्युरेवास्याः पुत्राभावे तु योषितः॥
सपिण्डीकरणन्नास्ति नारदो मुनिरब्रवीत्।

अन्यच्च—

पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।
पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि ये॥

पुत्राभावे पतिः कुर्यात्पत्यभावे च नेष्यते ।

पत्रपदमौरसादिपुत्रसपत्नीपुत्रोभयपरम् ।

बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत् ॥

इति मनुवचनात्तस्यापि पुत्रत्वात् । एकपत्नीनामिति एकः पतिर्यासान्ताः एकपत्न्यः तासामित्यर्थः । मार्कण्डेयपुराणे—

'सपिण्डीकरणं तासां पुत्राभावे न विद्यते ।' इति

तासां स्त्रीणां, पुत्रपदमत्राजहत्स्वार्थलक्षणया पतिसपत्नी पुत्रयोरप्युपलक्षणम्, अतो न पूर्वस्माद्विरोधः ।

पुत्रसपत्नीपुत्रपतिशून्यस्त्रिया अवीराकल्पश्राद्धमाह, ब्रह्मपुराणे—

चतुर्थे पञ्चमे चैव नवमैकादशे तथा ।
ततो द्वादशभिर्मासैः श्राद्धाद्द्वादशसंख्यया ॥ इति ।

तथा च चतुर्थपञ्चमनवमैकादशदिनेषु तत्तद्दिनं श्राद्धं कृत्वा द्वादशमासेषु प्रतिमासक्षयाहेषु द्वादशमासिकानि कार्याणीत्यर्थः । चतुर्थादिदिनमतीत्य मरणश्रवणदिन एवातीतश्राद्धं विद्यमानदिनश्राद्धं च कृत्वा अधिकारी भाविदिनश्राद्धं भावितत्तच्छ्राद्धदिने कुर्यात् ।

अथ तच्छ्राद्धप्रयोगः । चतुर्थदिनेऽस्थसञ्चयनं कृत्वा ॐ अपवित्रः पवित्रो वे'त्यादिना अन्नादीन् सिक्त्वा कुशादिकमादाय ॐ अमुकगोत्रायास्सपिण्डाया अमुकप्रेतायाः प्रेतत्वविमुक्तिकामोऽद्यादि यथाकालं षोडशश्राद्धान्यहं करिष्ये इति सङ्कल्प्य षोडशश्राद्धान्तर्गतचतुर्थदिनश्राद्धसङ्कल्पः । ततो गायत्रीं, देवताभ्यः इति त्रिर्जपेत् । तत ॐ अद्यामुकगोत्रे सपिण्डे अमुकप्रेते चतुर्थदिनश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम्, एवं क्रमेण चतुर्थादिदिनेषु ऊहेनैकोद्दिष्टं श्राद्धं कृत्वा एकादशादिने शय्याकाञ्चनपुरुषद्विजदम्पतीपूजनकपिलादानवृषोत्सर्गान् कृत्वा एकादशाहश्राद्धं कुर्यात् । ततो द्वादशमासेषु क्षयतिथौ द्वादशमासिकानि कुर्यादिति श्राद्धविवेकाद्यनुसारीयः पन्थाः ।

अथ मृतस्य षोडशश्राद्धाकरणेऽधिकारिणः पातित्यं, मृतस्य च प्रेतत्वम् । तथा हि सरोजकलिकायाम्—

न करोति च यः श्राद्धं पित्रादीनां विशेषतः ।
पातित्यं जायते तस्य सर्वकर्मविगर्हितम् ॥

अन्यच्च—

यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोडश ।
प्रेतत्वं हि स्थिरन्तस्य दत्तैः श्राद्धशतैरपि ॥ इति ।

एतच्चाधिकारिणः शौचे विहितकालजीवित्वे च सति बोध्यम्। अशौचे विहिते कालेऽजीवनेवाधिकाराभावात् नैतादृशदोषप्राप्तिः। स्मृतिः—

अशौचान्तद्वितीयेऽह्नि शय्यान्दद्याद्विलक्षणाम्।
कांचनं पुरुषं तद्वत्फलवस्त्रसमन्वितम्॥
सम्पूज्य द्विजदाम्पत्यन्नानाभरणभूषितम्।
वृषोत्सर्गस्तु कर्तव्यो देया च कपिला शुभा॥ इति।

अथ विगोत्रो यदि श्राद्धकर्ता तदा चतुर्थदिने शय्याकांचनपुरुषकपिलादान-दम्पतीपूजनवृषोत्सर्गांश्च कुर्यात्, तस्याशौचान्तद्वितीयदिनत्वादिति श्राद्ध-विवेकः। द्वैतनिर्णये तु एकादशाहोत्पन्नाशौचेन यद्याद्यश्राद्धप्रतिरोधस्तदा तदशौचान्ते श्राद्धकरणे शय्यादानादिवृषोत्सर्गश्च न भवति तद्दिने प्रापका-भावात्, प्रकृताशौचमुपक्रम्याशौचान्तद्वितीयेह्नीति श्रवणात्। यत्र तु सङ्क-रेणाशौचवृद्धिस्तत्र द्वितीयसन्निपाते प्रकृताशौचस्याभिवृद्धिरिति सिद्धा-न्तात् तत्र शय्यादिकं भवतीति वाचस्पतिमिश्राः।

वृषोत्सर्गफलमाह, सरोजकलिकाधृतस्मृतिः—

वृषभस्य तु शब्देन पितरः सपितामहाः।
वर्तमानाः प्रदृश्यन्ते स्वर्गलोके न संशयः॥
जलं प्रविश्य लाङ्गूलैर्यत्तोयं वहते वृषः।
दशवर्षसहस्राणि पितरस्तेन तर्पिताः॥ इति।

तत्र नीलवृषोऽतिश्रेष्ठः। तल्लक्षणमाह स्मृतिः—

चरणानि मुखम्पुच्छं यस्य श्वेतानि गोपतेः।
लाक्षारससवर्णश्च तन्नीलमिति निर्द्दिशेत्॥ इति।

गोपतेर्वृषभस्य। लाक्षा लाहीति प्रसिद्धा। वर्णविशेषे वृषविशेषमाह स्मृतिः—वर्णतस्ताम्रकपिलो ब्राह्मणस्य प्रशस्यते।

स्निग्धरक्तेन वर्णेन क्षत्रियस्य प्रशस्यते॥
काञ्चनाभेन वैश्यस्य कृष्णेनाप्यन्त्यजन्मनः। इति।

अन्त्यजन्मनः शूद्रस्य, एतेन शूद्रस्य वृषविशेषोपदेशाद् वृषोत्सर्गाधि-कारे सिद्धेऽत्र वैदिकमन्त्रा अपि तेन पठनीयाः, वृषोत्सर्गान्यथानुपपत्तेः, तयैवोत्सृजेरन्निति वचनाच्च। तयैव वैदिकऋचैव। तद्वृषोत्सर्गान्यथानुप-पत्त्याऽत्र शूद्रस्य वृषोत्सर्गवाक्ये एव वैदिकमन्त्रपाठो नान्यत्रेति श्राद्धविवेकः। शूद्रवत् स्त्रिया अधिकारबोधने प्रमाणाभावान्न वृषोत्सर्गेऽधिकारः। एवमनु-पनीतत्रैवर्णिकस्य वेदशून्यतया न वृषोत्सर्गेऽधिकार इत्यपि स एव। व्यव-हारस्तु ब्राह्मणद्वारा रुद्राध्यायादिवैदिकमन्त्रपाठ इत्येव शूद्रस्य। वृषश्चात्र तरुणः वत्सतरश्च त्रिहायन्यः। 'एतं युवानं पतिं वो ददामि' इति ऋचः।

अष्टाभिर्धेनुभिर्युक्तश्चतुर्भिरथवा क्रमात्।
त्रिहायनीभिर्धन्याभिः स्वरूपाभिः सुशोभिता॥

इति द्वैतनिर्णयधृतवचनाच्च। त्रिहायनी त्रिवर्षा। अग्रिमपाददक्षिणपार्श्वे चक्रेण, पश्चिमपादवामपार्श्वे त्रिशूलेन वृषमङ्कयेदिति श्राद्धरत्नाकरादयः।

एकादशाहश्राद्धं सांवत्सरिकञ्च सिद्धान्नेनैव कर्त्तव्यम्। तथा हि—

एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम्।
अभावे(१)पाकपात्राणान्तदहः समुपोषणम्॥ इति हारीतवचनात्।

एकोद्दिष्टमेकपुरुषोद्देश्यं कर्म, अनुपनीतेनापि आद्यश्राद्धं सांवत्सरिकं च सिद्धान्नेनैव कर्त्तव्यं प्रागुक्तत्वात्, तदन्नन्तु 'गोभ्यो दद्याज्जलेऽपि वा। मासिकस्यैकोद्देश्यकत्वेऽपि व्यवहारादपूपेनापि कर्त्तव्यत्वम्। जाबालः—

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा।
आमश्राद्धं (२) द्विजैः कार्यं शूद्रेण तु सदैव हि॥ इति।

आपदि श्राद्धकर्त्तुर्देशकालयोश्चोपप्लवे। तेन स्वाशक्तौ देशे काले च पाकक्रियया श्राद्धासंभावनायामामेन श्राद्धमिति श्राद्धविवेकः। आमश्राद्धम-सिद्धान्नेन श्राद्धम्। अनग्नौ पाकयोग्याग्न्यभावे आमश्राद्धे पिण्डादिकमप्यामान्नेनैव, 'तेनाग्नौ करणं कुर्यात् पिण्डाँस्तेनैव निर्वपेत्'। इति जाबालवचनात्। अमावास्यादिकाम्यश्राद्धमामान्नेनैव।

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम्।
अमावास्यादिनियतं माससंवत्सरादृते॥ इति लघुहारीतवचनात्। आमश्राद्धे मांसादिव्यञ्जनानि आमान्येव देयानि इति श्राद्धपल्लवः। सांवत्सरिकैकोद्दिष्टमविभक्तैरपि सर्वैरेव भ्रातृभिः कर्त्तव्यम्, पार्वणन्तु अविभक्तेषु ज्येष्ठेनैव। विभक्तैः सर्वैरेव कर्त्तव्यम्। तथा हि—

विभक्ता अविभक्ता वा कुर्युः श्राद्धमदैविकम्।
मघासु च तथाऽन्यत्र नाधिकारः पृथग्विना॥ इति।

अदैविकं विश्वेदेवकर्मरहितम् एकोद्दिष्टमिति यावत्। मघासु मघानिमित्तकश्राद्धेषु। अन्यत्र तद्भिन्नपार्वणे पृथग्विना विभागं विना सर्वेषां नाधिकार इत्यन्वयः।

अथ श्राद्धे प्रशस्तद्रव्याण्याह (३) मत्स्यपुराणे—

उच्छिष्टं शिवनिर्माल्यं वान्तं च मृतकर्पटम्।

---

(१) निर्णयसिन्धूद्धृतवायुपुराणवचनम्—
'पचमानस्तु भाण्डेषु भक्त्या ताम्रमयेषु च। समुद्धरति वै घोरात् पितॄन् दुःखमहार्णवात्॥ तैजसानामभावे तु पिठरे मृन्मयेऽपि च। नवे शुचौ प्रकुर्वीत पाकं पित्रर्थमादरात्॥' इति।

(२) सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते।
आमं वितुषमित्युक्तं सिद्धमन्नमुदाहृतम्। इति शब्दकल्पद्रुम॥

(३) अत्र वस्त्रदानस्यात्यावश्यकत्वमुक्तं ब्रह्माण्डपुराणे अ० १६ श्लो० ३८
वासो हि सर्वदैवत्यं सर्वदेवैरभिष्टुतम्। वस्त्राभावे क्रिया नास्ति यज्ञदानतपांसि च।
तस्माद्वस्त्राणि देयानि श्राद्धकाले तु नित्यशः॥ इति।

श्राद्धे सप्त पवित्राणि दौहित्रः कुतुपस्तिलाः ॥

उच्छिष्टं गव्यदुग्धादि, शिवनिर्माल्यं गङ्गाजलम्, वान्तं मधु, मृतकर्पटं पट्टवस्त्रम्, दौहित्रः खड्गपात्रं, कुतुपो मध्याह्नवेला, अथवा दौहित्रो दुहितृसुतः, कुतुपो नेपालकम्बलः । तथा हि स्मृतिः--

व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत् ।
कुतुपञ्चासनन्दद्यात्तिलैश्च विकिरेन्महीम् ॥ इति ।

मिताक्षरायां याज्ञवल्क्यः--

हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥
ऐणरौरववाराहशाशमांसैर्यथाक्रमम् ।
मासवृद्ध्याऽभितृप्यन्ति दत्तैरिह पितामहाः ॥
खड्गामिषमहाशल्कं मधु मुन्यन्नमेव च ।
लौहामिषं महाशाकं मांसं वा (१) र्ध्रीणसस्य च ॥
यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते । इति

हविष्यान्नं हविर्योग्यतिलव्रीह्यादि, मासं मासपर्यन्तम् । अस्य च पितामहाः पितरः तृप्यन्तीति परेणान्वयः । एवं वत्सरेणेत्यादावप्यन्वयः । मात्स्यं मत्स्यसम्बन्धि, अस्य मांसैरिति परेणान्वयः । हरिणस्ताम्रमृगः ।

'एणः कृष्णमृगो ज्ञेयस्ताम्रो हरिण उच्यते ।'

इत्यायुर्वेदस्मरणात् । उरभ्रो मेषः, शाकुनं भक्ष्यपक्षिसंबन्धि, पृषश्चित्रमृगः, तत्संबन्धि पार्षतम् । रुरुः साबर इति प्रसिद्धः । शशस्येदं शाशं, खड्ग गण्डकः (गेंड़ा) । महाशल्को मत्स्यभेदः । मुन्यन्नं नीवारादिः । नीवार ओइरी इति प्रसिद्धः । लोहो रक्तच्छागः । महाशाकं कालशाकम् । वार्ध्रीणसो वृद्धः श्वेत इन्द्रियक्षीणश्छागः । तथा हि--

त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः पितृकर्मणि ॥ इति ।

पिबतः कर्णौ जिह्वा च यस्य स्पृशति स त्रिभिः पिबतीति त्रिपिबः । अन्यत्सुगमम् ।

श्राद्धनिषिद्धद्रव्याण्याह--

कूष्माण्डं महिषीक्षीरं बिल्वपत्रमगद्विजाः ।
श्राद्धकाले समुत्पन्ने पितरो यान्ति निराश्रयाः(२) ॥ इति ।

मगद्विजाः शाकद्वीपिब्राह्मणाः बिल्वपत्रमगद्विजा इति पाठस्य प्रमादिकत्वे तु अगद्विजाः (३) पर्वतीयब्राह्मणा इत्यर्थः ।

(१) कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः । स वै वार्ध्रीणसः प्रोक्त इत्येषा नैगमी श्रुतिः

(२) वर्णेकोऽधिकः पाठ इति स० ।

(३) पद्मपुराणे--'ये चान्ये पर्वतीयाश्च श्राद्धे नार्हन्ति केतनम् ।' इति केतनं-निमन्त्रणम्

श्राद्धदिने प्राप्ते तु श्राद्धकरणानन्तरं त्याज्यानाह—

पुनर्भोजनसंचारं निद्राऽध्ययनमैथुनम् ।
होमं प्रतिग्रहं संध्यां श्राद्धं कृत्वाऽष्ट संत्यजेत् ॥ इति ।

पुनर्भोजनमत्र गलकवलसंयोगरूपम्, संचारं क्रोशादूर्ध्वं गमनमिति रसमालायाः, अध्वगमने क्रोशपूरणमिति हारीतवचनाच्च । श्राद्धे तदूर्ध्वगमने दोष इति संख्यापरिमाणे केशवमिश्राः ।

अथ श्राद्धकरणानर्हतामाह--

सव्रणः सूतकी सूयी ( पूयी ) मत्तोन्मत्तरजस्वलाः ।
मृतबन्धुरबन्धुश्च वर्ज्यान्यष्टौ स्वकालतः ॥

इति वचनात् सव्रतस्य श्राद्धनिषेधः । 'व्रणसत्त्वे एव स्वकालत' इति श्रुतेः । 'तद्दिने निर्व्रणीभावे' इति वचनाच्च व्रणान्ते व्रणाधिकरणदिनेऽपि श्राद्धकरणे न दोष इत्यायाति ।

अथ मासिकादि द्वादशमासे क्षयतिथौ--

द्वादशमासिकानि, दिनैकोनषष्ठमासे ऊनषाण्मासिकम् । दिनैकोनद्वादशमासे ऊनवार्षिकमिति गौडदेशीयसमुदायः । मुख्ये श्राद्धं मासि मासीति वचनात् । मैथिलसमुदायस्तु द्वादशदिने एव सर्वमासिकानि सपिण्डनं च ।

आनन्त्यात्कुलधर्माणां पुंसाञ्चैवायुषः क्षयात् ।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ॥

इति व्याघ्रपादवचनात् तस्यापि प्रशस्तत्वात् । द्वादशाहपदमत्राशौचान्ततृतीयदिनपरम् । नातस्त्र्यहाद्यशौचिनः पञ्चमादिदिने सर्वमासिककरणेऽप्राशस्त्यम् । अत्र द्वितीयपक्षे पञ्चममासिकानन्तरम् ऊनषाण्मासिकम्, एकादशमासिकानन्तरमूनवार्षिकं कर्त्तव्यम् ।

मृतसम्बन्धिपित्रादित्रयपिण्डे मृतपिण्डमेलनं सपिण्डने कर्त्तव्यं तथाहि-
'पितामहेन पितरं संस्कुर्यादिति निश्चयः ॥' इति ।

तत्र पुत्रेण सपिण्डीकरणे क्रियमाणे पितरमुकप्रेतपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्मन्निति वाक्यम् । भ्रातृभ्रातृजादिभिः क्रियमाणे तु भ्रातुरमुकप्रेत पितृव्यामुकप्रेत इत्यादिवाक्येन तत्तत्सम्बन्धमुच्चार्य पिण्डमेलनम् । कृत्रिमपुत्रेण क्रियमाणे तु मत्पुत्रत्वकर पितरमुकशर्म्मन् इत्यादिवाक्येन तत्तत्सम्बन्धमुच्चार्य पिण्डमेलनं कुर्यात् । सपिण्डीकरणपर्यन्तमेव प्रेतपदप्रयोगः । तथाहि—

सपिण्डीकरणं यावत् प्रेत प्रेत इति स्मृतः ।
सपिण्डीकरणादूर्ध्वं शर्मवर्मादिभाग्भवेत् ॥ इति ।

स्त्रिया(१)स्तु जीवति पत्यौ मृतस्त्रीश्वश्रूप्रश्वश्रूवृद्धप्रश्वश्रूपिण्डेषु स्त्रीपिण्ड-मेलनम्। तथा हि गोभिलः—

अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डनम्।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणम्भवेत्॥ इति।

पत्यौ मृते तु पतिश्वशुरप्रश्वशुरपिण्डेषु स्त्रीपिण्डमेलनमिति समाचारः।

अथ चतुर्थीहोमात्प्रागेव स्त्रिया मरणे सपिण्डीकरणान्तानि तस्याः श्राद्धानि पत्या तद्गोत्रेणैव कार्याणि, सांवत्सरिकानि तु स्वगोत्रेणैव।

संस्थितायान्तु भार्यायां सपिण्डीकरणान्तिकम्।
पैतृकं भजते गोत्रमूर्ध्वन्तु पतिपैतृकम्॥ इति श्रुतेरिति।

एवन्तदानीम्पतिप्रयाणेऽपि न्यायतौल्यात् विगोत्रयाऽपि भार्यया श्राद्धानि कार्याणीति दिगिति द्वैतपरिशिष्टम्।

'सपिण्डीकरणादूर्ध्वं यावदब्दत्रयं भवेत्।
तावदेव न भोक्तव्यं श्राद्धीयान्नं क्षयेऽहनि॥
प्रथमाब्दे तु मांसानि द्वितीयेऽस्थीनि चैव हि।
तृतीये रुधिरं भुङ्क्ते चतुर्थेऽन्नं विशुध्यति॥'

इति वचनाद्वार्षिकत्रय एव श्राद्धीयोत्सृष्टान्नभक्षणे दोषः। चतुर्थवत्स-रीयक्षयाहश्राद्धान्नभक्षणे दोषश्च मैथिलव्यवहारादेवेति न किंचिदनुपपन्नम्॥

मनुः—आपः शुद्धा भूमिगता वितृष्णा यत्र गौर्भवेत्।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः॥
दिवा सूर्यांशुभिः शुद्धं रात्रौ नक्षत्रमारुतैः।
सन्ध्ययोरप्युभाभ्यां च पवित्रं सर्वदा जलम्॥ इति

देवलः-'एकरात्रोषितास्तास्तु त्यजेदापः समुद्धृताः।' इति।

उषिताः पर्युषिताः। स्कान्दे—

वर्ज्यं पर्युषितं तोयं वर्ज्यं पर्युषितं दलम्।
अवर्ज्यं जाह्नवीतोयमवर्ज्यं तुलसीदलम्॥

तोयं जलं, पर्युषितं (वासी) इति प्रसिद्धम्। 'दलं पत्रं छदः पुमान्' इत्यमरकोषात्, दलं पत्रम्। यमः—

प्रपामरण्ये घटकञ्च कूपे द्रोणीजलङ्कोशगतास्तथाऽऽपः।
ऋतेऽपि शूद्रात्तदपेयमाहुरापद्गता भूमिगताः पिबेत्ताः॥ इति।

---

(१) सपुत्राया विषयेऽपि यमस्तथैवाह—

जीवत्पिता पितामह्या मातुः कुर्यात्सपिण्डनम्। प्रमीतपितृकः पित्रा तत्पित्रा पुत्रिकासुतः॥ इति

लौगाक्षिरप्येवमाह—

पितामह्यादिभिः सार्धं मातरं तु सपिण्डयेत्। पितरि म्रियमाणे तु तेनैवोपरते सति॥
पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः। सा मृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रता॥ इति।

प्रपा—पनिशाला इति प्रसिद्धा। द्रोणी काष्ठाम्बुवाहिनीति कोषः। कोशश्चर्मपुटः। बृहस्पतिः (१)—

वापीकूपतडागेषु दूषितेषु विशोधनम्।
घटानां शतमुद्धृत्य पञ्चगव्यन्ततः क्षिपेत्॥ इति।

वापी सोपानयुक्तः कूपः। यत्र शतघटन्यूनमेव जलम्, तत्र सर्वोद्धारमात्रम्। मरीचिः—

येषु स्थानेषु यच्छौचं धर्माचारश्च यादृशः।
तत्र तन्नावमन्येत धर्मस्तत्रैव तादृशः॥
येषु देशेषु ये देवा येषु देशेषु ये द्विजाः।
येषु स्थानेषु यत्तोयं या च यत्रैव मृत्तिका॥

इति मृत्तिकेत्यस्य तत्र तन्नावमन्येत इति पूर्वेणान्वयः। यमः—

अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका।
दशरात्रेण शुध्यन्ति भूमिष्ठं च नवोदकम्॥

याज्ञवल्क्यः—भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोभ्रमणादपि।
सेकनोल्लेखनाल्लेपाद् गृहं मार्जनलेपनात्॥

कालादिति अपवित्रताप्रयोजककारणद्वयो यावत्कालेन भवति तावत्कालादित्यर्थः। सेकः प्रक्षालनम्। उल्लेखनं तत्क्षणम्। मनुः—

सम्मार्जनोपाञ्जनेन सेकेनोल्लेखनेन च।
गवां च परिवासेन भूमिः शुद्धयति पञ्चभिः॥

अञ्जनं गोमयोपलेपनम्। बौधायनः-'घनाया भूमेरुपलेपनम्। शुषिरायाः कर्षणम्, क्लिन्नाया अमेध्यमाहृत्य प्रच्छादनम्।' घना अविषमा, समेति यावत्। शुषिरा विवरयुक्ता, 'सुषिरं विवरं बिलम्' इत्यमरकोषात्। क्लिन्ना अमेध्या, तस्या अमेध्यमाहृत्य मृदन्तरेण पूरणे शुद्धिः॥ ब्रह्मपुराणे—

सुवर्णरूप्यशङ्खाश्मशुक्तिरत्नमयानि च।

---

(१) तत्र विशेषमाह बृहस्पतिः—

मृतपञ्चनखात्कूपादन्त्यजोपहतात्तथा। अपः समुद्धरेत्सर्वाः शेषं वस्त्रेण शोधयेत्॥
वह्निप्रज्वालनं कृत्वा कूपे पक्वेष्टकाचिते। पञ्चगव्यं न्यसेत्पश्चान्नवतोयसमुद्भवे॥ इति।

हारीतः-वापीकूपतडागेषु मानुषं यदि शीर्यति। अस्थिचर्मविनिर्मुक्तं दूषितं श्वखरादिभिः॥
उद्धृत्य तज्जलं सर्वं शोधनं परिमार्जनम्। इति॥

देवलोऽपि-श्वशृगालखरोष्ट्रैश्च कव्याद्भिश्च जुगुप्सितम्। उद्धरेदुदकं सर्वं पञ्चपिण्डान् मृदस्तथा॥

आपस्तम्बोऽप्याह—

उपानच्छ्लेष्मविण्मूत्रस्त्रीरजो मद्यमेव च। एभिर्विदूषिते कूपे कुम्भानां षष्टिमुद्धरेत्॥

अथ यद्युच्छिष्टभक्तद्विदलादि कूपे पतितम्, तदा षष्टिघटाम्बु वा शतघटजलं कूपादुद्धृतमपि चेत्तद्व्यक्तमेव वर्तते तदा न शुद्धिः। तत्र सर्वं जलं निःसार्याधोभूमिञ्च संशोध्य, पञ्चगव्ये तत्र दत्ते शुद्धिरिति।

कांस्यायस्ताम्ररैत्यानि त्रपुशीशमयानि च ॥
निर्लेपानि च शुध्यन्ति केवलेनोदकेन तु ।
शूद्रोच्छिष्टानि शोध्यानि त्रिधा क्षाराम्लवारिभिः ॥
सूतिकाशवविण्मूत्ररजस्वलाहतानि च ।
प्रक्षेप्तव्यानि तान्यग्नौ यच्च यावत्सहेदपि ॥ इति ।

अश्म प्रस्तरम्, अयो लौहम्, रीतिः पित्तलम्, तद्घटितपात्रं रैत्यम्, त्रपु रङ्गम्, निर्लेपम् अनुपहतम्, उच्छिष्टानि उच्छिष्टस्पृष्टानि, उच्छिष्टे शङ्ख-वचनेन शुद्ध्यन्तरस्य वक्ष्यमाणत्वात्। क्षारो भस्म अम्लवारिभिः जम्बीरादिरसैः। तत्र क्षारं कांस्यादौ, अम्लोदकम् ताम्रादौ। अत एव शङ्खः—

उष्णोदकेन ताम्रस्य शीशस्य त्रपुणस्तथा ।
क्षारेण शुद्धिः कांस्यस्य लौहस्य च विनिर्दिशेत् ॥ इति ।

बौधायनः—तैजसानां तु पात्राणामुच्छिष्टोपहतानां त्रिस्सप्तकृत्वः परिमार्जनम्, परिमार्ज्जनं मृद्गोमयभस्मभिरिति। मूत्रपुरीषरेतःप्रभृत्युपहतानां पुनः करणं गोमूत्रे वा सप्तरात्रं संस्थाप्य पूर्ववन्मार्ज्जनम्। शातातपः—

(१)गवाघ्रातेषु कांस्येषु शूद्रोच्छिष्टेषु वा पुनः ।
दशभिर्भस्मभिः शुद्धिः श्वकाकोपहतेषु च ॥

अङ्गिराः—गण्डूषं पादशौचं च यः कुर्यात्कांस्यभाजने ।
भूमौ निःक्षिप्य षण्मासान् पुनराकरमादिशेत् ॥ इति ।

आकरमादिशेद्वह्नौ क्षिपेत्।(२)शङ्खः—

सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्य च ।

---

(१) स्मृतिः—गोभिर्जुष्टेषु भाण्डेषु वस्तुमात्रेषु नित्यशः ।
अश्वच्छागमुखोच्छिष्टान् कृत्वा पूतानाहुर्मनीषिणः ॥ अत्राक्षरद्वयमधिकम्।

(२) शङ्खः—सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्य च। त्रिःसप्तमार्जनाच्छुद्धिर्न तु कांस्यस्य तर्पणम्॥
आदिपुराणे—'शूद्रोच्छिष्टानि शुद्ध्यन्ति त्रिधा क्षाराम्लवारिभिः।'
हारीतः—संहतानां तु पात्राणां यद्येकमुपहन्यते ॥ तथैव शोधनं प्रोक्तं न तु तत्स्पर्शिनामपि ॥
यमः—यदि मूत्रपुरीषाभ्यां रेतसा रुधिरेण वा। चैलं समुपहन्येत अद्भिः प्रक्षालयेत्तु तत् ॥
यद्यम्भसा न शुद्ध्येत्तु वस्त्रं चोपहतं दृढम्। छेदनं तस्य दाहो वा यावन्मात्रमुपहन्यते ॥
शङ्खः—घृतं तु पायसं क्षीरं तथैवेक्षुरसो गुडः। शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति ॥
व्यासः—भासवानरमार्जारखरोष्ट्राणां शुनां तथा। सूकराणाममेध्यं वै स्पृष्ट्वा स्नायात्सचैलकम्॥
अमेध्यं विष्ठाऽस्थिचर्माणि।
मनुः—नारं स्पृष्ट्वाऽस्थि सस्नेहं स्नात्वा विप्रो विशुद्ध्यति ।
आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य च ॥
देवलः—मानुषास्थिवसां विष्ठामार्त्तवं मूत्ररेतसी। मज्जानं शोणितं स्पृष्ट्वा परस्य स्नानमाचरेत् ॥
श्वपाकं पतितं व्यङ्गमुन्मत्तं शवदाहकम्। सूतिकां सूयिकां नारीं रजसाऽभिपरिप्लुताम् ॥
यमः—अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने। दुःस्वप्ने दुर्जनस्पर्शे स्नानमित्यभिधीयते॥
पराशरः—चैत्यवृक्षश्चितिर्यूपश्चाण्डालः सोमविक्रयी। एतांश्च ब्राह्मणः स्पृष्ट्वा सचैलो जलमाविशेत्॥

त्रिःसप्तमार्जनैः शुद्धिर्न तु कांस्यस्य भाजने ॥

देवलः—काष्ठानां तत्क्षणाच्छुद्धिर्मृद्गोमयजलैरपि ।

मृण्मयानां तु पात्राणां दहनाच्छुद्धिरिष्यते ॥

इदमत्यन्तोपहते । देवलः—

तान्तवम्मलिनं पूर्वमद्भिः क्षारैश्च शोधयेत् ।

अंशुभिः शोषयित्वा वा वायुना वा समाहरेत् ॥

ऊर्णापट्टांशुकक्षौमदुकूलात्रिकचर्मणाम् ।

अल्पाशौचं भवेच्छुद्धिः शोषणप्रोक्षणादिभिः ॥

अल्पोपघात इदम् । ब्रह्मपुराणे—

प्रत्यहं क्षालयेद्वस्त्रं दैवे पैत्र्ये च कर्मणि ।

सर्वं विण्मूत्रशुक्रैश्च दूषितं तु मृदम्बुभिः ॥

शुध्यतीति शेषेण पूरणीयम् । शुक्रं वीर्य्यम् । मनुः—

चरूणां स्रुक्स्रुवाणां च शुद्धिरुष्णेन वारिणा ।

स्फ्यशूर्पशकटानां च मुसलोलूखलस्य च ॥

अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ।

प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ॥ इति ।

स्फ्यः खादिरः खड्गः । बहूनामिति बहुत्वं च पुरुषभारहार्याधिकत्वमिति । स एव—

चैलवच्चर्मणां शुद्धिर्वैदलानां तथैव च ।

शाकमूलफलानां च धान्यवच्छुद्धिरिष्यते ॥

चर्मणामिति स्पृश्यपशुचर्मणामित्यर्थः । वैदलानां वंशादिदलनिर्मितानामिति मनुटीकायां कुल्लूकभट्टः । मनुः—

प्रोक्षणात् तृणकाष्ठं च पलाशश्च विशुध्यति ।

मार्जनोपाञ्जनैर्वेश्म पुनः पाकेन मृन्मयम् ॥

उपाञ्जनं लेपनम् । बौधायनः—

आसनं शयनं यानं नावः पन्थास्तृणानि च ।

मरुताऽर्केण शुध्यन्ति पक्वेष्टकचितानि च ॥

आसनादिकं स्वीयमेवात्र बोध्यम् । बौधायनः—'बहूनां कुसुम्भकार्पासगुडलवणानां सर्पिषां कठिनोभूतानां श्वचाण्डालस्पर्शे प्रोक्षणेन शुद्धिः । मनुः—

शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ।

दैवे कर्मणि पित्र्ये च पंचमेऽहनि शुद्ध्यति ॥

प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ।

तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति ॥

प्रथमेऽहनि रजोयोगारम्भदिने चाण्डालीति चाण्डालीवदस्पृश्या न तु वस्तुगत्या चाण्डालीति ।

ब्रह्मपुराणे—मक्षिका दंशमशका घुणाः सूक्ष्मपिपीलिकाः।
आमिषाऽमेध्यसेवी च न ते कीटा विपत्तये॥

दंश (उडश) इति प्रसिद्धः। आमिषामेध्यसेवी शरीरमांसोद्भवकीटः, विपत्तये अन्नदोषाय॥

आममांसं(१) घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः।
म्लेच्छभाण्डस्थिता दूष्या निष्क्रान्ताः शुचयः स्मृताः॥

आमम् असिद्धम्, क्षौद्रं मधु। शातातपः—
गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः।
अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च॥

मीमांसा अत्र विचारः। अमीमांस्यानि अविचारितानि, तेषु शौचाशौचविचारो न कर्त्तव्यः। अविचारितान्येव शौचानीति भावः। बालः पञ्चवर्षवयस्कः। मनुः—
नित्यं शुद्धः कारुहस्तः पण्ये यच्च प्रसारितम्।
ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः॥

कारुः शिल्पी, पण्यं पणग्राह्यम्, प्रसारितं हट्टायाम्। तथा च एतत्सर्वममेध्यानुपहतं सर्वस्मिन् काले शुद्धमित्यर्थः।
श्वभिर्हतस्य यन्मांसं शुचिस्तन्मनुरब्रवीत्।
क्रव्याद्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः॥

श्वभिः कुक्कुरैर्हतस्य खाद्यमृगादेर्यन्मांसं तच्छुचिरित्यन्वयः। क्रव्याद्भिर्व्याघ्रादिभिः। मनुविष्णू—
नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने।
प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः॥

स्त्रीणां स्वस्त्रीणाम्, आस्यं मुखम्। प्रस्रवे गोस्तनपाने वत्सः, शुचिरित्यन्वयः। यमः—
बालकैर्यत्परिक्रान्तं स्त्रीभिराचरितं च यत्।
मशकैर्मक्षिकाभिश्च निलीनं नोपहन्यते॥

निलीनम् आक्रान्तम्।
आसनं शयनं यानं स्त्रीमुखं कुतुपं क्षुरम्।
न दूषयति विद्वांसं यज्ञेषु चसमं तथा॥

शयनं शय्या, क्षुरं अन्यशिरोमुण्डकादिः। देवलः—
'गोशकृच्छुद्धदेशस्थं श्मशानानुद्धृतं शवम्॥' इति।

---

(१) अत्रिः—मक्षिकाः सन्तताधारा भूमिस्तोयं हुताशनः।
मार्जारश्चापि दर्वी च मारुतश्च सदा शुचिः॥

अथ तैलादीनां शुद्धिकरणमुक्तं तत्रैव—
तापनं घृततैलानां प्लावनं गोरसस्य च। तन्मात्रमुद्धृतं शुद्धयेत्कठिनं तु पयोदधि॥

शब्दकल्पद्रुमे—केन्दुपकानि तैलेन पायसं दधि सक्तवः। द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि॥

शातातपः—रेणवः शुचयः सर्वे वायुना समुदीरिताः ।
अन्यत्र रासभाजाविश्वसमूहनीवाससाम् ॥

रेणवो धूलयः, रासभः गर्द्दभः, अविर्मेषः, श्वा कुक्कुरः, समूहनी मार्जनी, तथा च रासभादीनां षण्णां वातोद्धृतधूलयोऽशुचयः तदन्याः शुचय इति भावः । शङ्खः—

'मुखवर्जञ्च गौः शुद्धा मार्जारः क्रमणे शुचिः ।'

मनुः—ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः ।
यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥

खानि छिद्राणि, मेध्यानि पवित्राणि, अधः नाभेरधः ।

यमः—बलात्कारोपभुक्ता वा चौरहस्तगताऽपि वा ।
स्वयं विप्रतिपन्ना वा अथवा विप्रमादिता ॥
अत्यन्तदूषिताऽपि स्त्री न परित्यागमर्हति ।

याज्ञवल्क्यः—व्यभिचाराद्दतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्त्तृवधादौ च तथा महति पातके ॥

व्यभिचारोऽत्र समानजातिकृत उत्तमजातिकृतमदमोहबलात्कारादिप्रमादजन्यः । ऋतौ रजोयोगे गर्भे व्यभिचारजातगर्भे त्याग इति तासामित्यनेनान्वय. । स एवाह—

स्वछन्दगा च या नारी तस्यास्त्यागो विधीयते ।
न चैवं स्त्रीवधं कुर्यान्न चैवाङ्गविकर्त्तनम् ॥

वसिष्ठः—चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

जुङ्गितोपगता शूद्रान्त्यजादिगमनकर्त्री । मरीचिः—

येषु स्थानेषु यच्छौचं धर्माचारश्च यादृशः ।
तत्र तन्नावमन्येत धर्मस्तत्रैव तादृशः ॥
येषु देशेषु ये देवा येषु देशेषु ये द्विजाः ।
येषु स्थानेषु यत्तोयं या च यत्रैव मृत्तिका ॥

अथास्पृश्यस्पर्शशुद्धिः । मार्कण्डेयपुराणे—

अभोज्यसूतिकाषण्ढमार्जाराखुश्वकुक्कुटान् ।
संस्पृश्य शुध्यति स्नानादुदक्या ग्रामशूकरौ ॥

षण्डो नपुंसकः, मार्जारो बिडालः आखुः मूषकः, एतच्च मार्जारकर्मकस्पर्शे । मार्जारकर्तृकस्पर्शे तु न दोषः । मार्जारस्तु 'सदाशुचिरिति' वचनात् ॥ (१) ब्राह्मपुराणे—

(१) अत्र लिङ्गपुराणे विशेषः-श्लो० ८५ अ० ७४ मार्जारस्तु गृहे यस्य सोऽप्यन्त्यजसमो नरः । भोजयेद्यस्तु विप्रेन्द्रो मार्जारान् सन्निधौ यदि ॥ तच्चाण्डालसमं ज्ञेयं नात्र कार्या विचारणा ॥ स्फिग्वातं शूर्पवातं च वातं प्राणमुखानिलम् । सुकृतानि हरन्त्येते संस्पृष्टाः पुरुषस्य तु ॥

उच्छिष्टेनाथ विप्रेण विप्रः स्पृष्टस्तु तादृशः ।
उभौ स्नानं प्रकुरुतः सद्य एव विशुध्यति ॥

तादृशः, उच्छिष्टः । शातातपः--

रजकश्चर्मकृच्चैव व्याधजालोपजीविनौ ।
चेलनिर्णेजकश्चैव नटः शैलूषकस्तथा ॥
मुखे भगस्तथा श्वा च वनिता सर्ववर्णगा ।
चक्री ध्वजी वध्यघाती ग्रामकुक्कुटशूकरौ ॥
एभिर्यदङ्गसंस्पृष्टं शिरोवर्ज्जं द्विजातिषु ।
तोयेन क्षालनं कृत्वा आचान्तः शुचितामियात् ॥ इति ।

नटो नर्त्तकः, शैलूषो नाटकाद्यभिनेता, मुखे भगो मुखयोनिरिति प्रसिद्धः । चक्री तैलिकः, ध्वजो शौण्डिकः, वध्यघाती चौरादिवधे नियुक्तः अत्राजहत्स्वार्थलक्षणया शिरःपदे नाभेरूर्ध्वमुपलक्ष्यते । तेन नाभेरधः रजकादिस्पर्शे प्रक्षालनमाचमनं च पर्यवसितं, नाभेरूर्ध्वं श्वपाकादिस्पर्शे आह देवलः--

श्वपाकं पतितं व्यङ्गमुन्मत्तं शवहारकम् ।
सूतिकां सूयिकां नारीं रजसा च परिप्लुताम् ॥
श्वकुक्कुटवराहांश्च ग्राम्यान् संस्पृश्य मानवः ।
सचैलं सशिरः स्नात्वा तदानीमेव शुद्ध्यति ॥

मनुः--अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥

तथा च पर्युषितवान्ते स्नानमित्यर्थः, इति शुद्धिविवेकः । कालिकापुराणे-

'स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः ।'

निर्माल्यमत्रापनीतमिति रुद्रधरः । बृहस्पतिः--

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति

अथ दानम् । मनुः-

तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमम् ।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥
परितुष्टेन भावेन पात्रमासाद्य शक्तितः ।
यत्किञ्चिदपि दातव्यं याचते नानुसूयया ॥

परं श्रेष्ठं, कृतयुगे सत्ययुगे, शक्तितो वित्तानुसारेण, अनुसूयया परगुण सहिष्णुतया । व्यासः—

यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये धृतं कस्यापि रक्षसि ॥
आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः ।
एकैव गतिरर्थस्य दानमन्या विपत्तयः ॥

गरीयसः अधिकस्य, अर्थस्य धनस्य ।

ग्रासादर्धमपि ग्रासमर्थिभ्यः किन्न दीयते ।
इच्छाऽनुरूपो विभवः कदा कस्य भविष्यति ॥

अर्थिभ्यः याचकेभ्यः ।

दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ।
अदाता पुरुषस्त्यागी सर्वं सन्त्यज्य गच्छति ॥

गच्छतीत्यस्य परलोकमिति शेषः ।

अनाहूतेषु यद्दानं यच्च दत्तमयाचितम् ।
भविष्यति युगस्यान्तस्तस्यान्तो न भविष्यति ॥

तस्य अयाचितदानस्य ।

[ अदृष्टमश्नुते दानमुक्त्वा दानं न दृश्यते ॥
पुनरागमनन्नास्ति पुनर्दानमनर्थकम् ॥ ]

अदृष्टं कुत्रापि स्मृतौ न दृष्टम्, अश्नुते विद्याशून्ये । देवलः--

नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम् ।
श्रद्धा शक्तिश्च दानानां वृद्धिक्षयकरे हि ते ॥
पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं धर्मबुद्ध्या यत्तञ्च धर्मं प्रचक्षते ॥ प्रयोजनं पुण्यातिरिक्तम्

अप्रतिग्राह्यानाह । सुमन्तुः-'शौकाविकव्याधनिषादरजकबुरुडचर्मकाराः अभोज्यान्ना अप्रतिग्राह्याः ।' यमः--

नटनर्तकतक्षाणश्चचर्मकारः सुवर्णकृत् ।
शौण्डिकाः कण्डिकाः षण्ढा अभोज्यान्नाः प्रकीर्तिताः ॥
गन्धर्वो लोहकारश्च सूचिकस्तन्तुवायकः ।
चक्रोपजीवी रजकः कितवस्तस्करस्तथा ॥
ध्वजी मालोपजीवी च शूद्राध्यापकयाजकौ ।
कुलालश्च कुकर्मा च वार्धुषिश्चर्मविक्रयी ॥

अप्रतिग्राह्या इत्यनेनैषां सम्बन्धः ।

(१)उत्तमादिदानान्याह—

अन्नं मधु दधि त्राणं गोभूरत्नाश्वहस्तिनः ।

---

(१) अथ प्रसङ्गात् पुस्तकदानफलमुक्तमपरार्के—

यत्फलं तीर्थयात्रायां यत् पुण्यं यज्ञयायिनाम् । कपिलानां सहस्रेण सम्यग्दत्तेन यत्फलम् ॥
यत्फलं समवाप्नोति पुस्तकैकप्रदानतः ।

अथ छात्रवृत्तिदानफलं तत्रैव—

छात्राणां भोजनाभ्यङ्गं वस्त्रं भिक्षामथापि वा । दत्वा प्राप्नोति पुरुषः सर्वकामानसंशयः ॥
विवेको जीवितं दीर्घं सर्वकामार्थसम्पदः । सर्वं तेन भवेद्दत्तं छात्राणां भोजने कृते ॥

तथा च भारते—

कुक्षौ तिष्ठति यस्यान्नं विद्याभ्यासेन जीर्यति । स तारयत्येकविंशं दशपूर्वान् दशापरान् ॥

दानान्युत्तमदानानि उत्तमद्रव्यदानतः ।

त्राणं रक्षणम् ।

विद्यासंच्छादनावासपरिभोगौषधानि च ।
दानानि मध्यमानीति मध्यमद्रव्यदानतः ॥
उपानत्प्रेङ्ख्यानानि छत्रपात्रासनानि च ।
दीपकाष्ठफलादीनि चरमं बहुवार्षिकम् ॥

चरमम् अधमम् । ब्रह्मवैवर्त्ते प्रकृतिखण्डे—

परकीयतडागे च तडागं यः करोति वै ।
उत्सृजेद् दैवदोषेण मूत्रकुण्डं प्रयाति सः ॥

तत्रैव—यत्फलं च तडागेन पङ्कोद्धारेण तत्फलम् ।
पङ्कोद्धारेण वाप्याश्च वापीतुल्यफलं लभेत् ॥

मत्स्यपुराणे—वापीकूपतडागेषु देवतायतनेषु च ।
पुनः संस्कारकर्त्ता च लभते मौक्तिकं फलम् ॥

शातातपः—अभिगत्य तु यद्दानं यच्च दानमयाचितम् ।
विद्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते ॥

अभिगत्येति सम्प्रदानसमीपं स्वयमेव गत्वेत्यर्थः ।

अन्यायाधिगताङ्गत्वा सकलां पृथवीमपि ।
श्रद्धावर्जमपात्राय न किञ्चिद्गतिमाप्नुयात् ॥

अधिगतामुपार्जिताम् ।

प्रदाय मुष्टिशाकं वा श्रद्धाभक्तिसमन्वितः ।
महते पात्रभूताय सर्वाभ्युदयमाप्नुयात् ॥

याज्ञवल्क्यः—गोभूतिलहिरण्यादि पात्रे(१) दातव्यमर्चितम् ।

---

**तथा विद्यादानफलं तत्रैव—**

वाजपेयसहस्रस्य सम्यगिष्टस्य यत् फलम् । तत्फलं समवाप्नोति विद्यादानान्न संशयः ।
धर्माधर्मौ न जानाति विद्याविरहितः पुमान् । तस्मात् सर्वत्र धर्मात्मा विद्यादानरतो भवेत् ॥
त्रैलोक्यं चतुरो वर्णाश्चत्वारश्चाश्रमाः पृथक् । ब्रह्माद्या देवताः सर्वा विद्यादाने प्रतिष्ठिताः ॥
चतुर्युगानि राजेन्द्र ! एकसप्ततिसंख्यया । कल्पं विष्णुपुरे तिष्ठन् पूज्यमानः सुरोत्तमैः ॥
क्षितिं चागत्य कल्पान्ते राजा भवति धार्मिकः । हस्त्यश्वरथयानाढ्यो दाता भोक्ता विमत्सरी
रूपसौभाग्यसम्पन्नो दीर्घायुर्नीरुजो भवेत् । पुत्रपौत्रैः परिवृतो जीवेच्च शरदां शतम् ॥

दानं विशेषफलदं जगतीह नान्यद्विद्यां विहाय वदनाब्जकृताधिवासाम् ।
गोभूहिरण्यगजवाजिरथादि सर्वं तां यच्छता किमिह पार्थ ! भवेन्न दत्तम् ॥

**तथा चोक्तं नन्दिपुराणे—**

यावच्च पातकं तेन कृतं जन्मशतैरपि । तत्सर्वं नश्यते तस्य विद्यादानेन देहिनः ॥

**यो जन उपाध्यायस्य जीविकां दत्त्वा विप्रानध्यापयति तस्य फलमुक्तं तत्रैव—**

उपाध्यायस्य यो वृत्तिं दत्त्वाऽध्यापयते द्विजान् । किं न दत्तं भवेत्तेन धर्मकामार्थदर्शिना ॥ इति ।

( १ ) **यथार्थपात्रलक्षणमाह याज्ञवल्क्यः—**

न विद्यया केवलया तपसा वाऽपि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ।

नापात्रे विदुषा किंचिदात्मनः श्रेय इच्छता ॥(१)
विद्यावन्तश्च ये विप्राः सुव्रताश्च तपस्विनः ।
सत्यसंयमसंयुक्ता ध्यानयुक्ता जितेन्द्रियाः ॥

दानपात्रा इति शेषः । संवर्तः--
श्रोत्रियाय दरिद्राय अर्थिने च विशेषतः ।
यद्दानं दीयते तस्मै तद्दानं शुभकारकम् ॥

श्रोत्रियलक्षणमाह, यमः--
ओङ्कारपूर्विकास्तिस्रः सावित्रीं यश्च विन्दति ।
चरति ब्रह्मचर्यञ्च स वै श्रोत्रिय उच्यते ॥
अव्रता ह्यनधीयाना यत्र भिक्षाचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः ॥

व्यासः--सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
अधीते शतसाहस्रमनन्तं वेदपारगे ॥

अब्राह्मणो राजसेवकादिः । ब्राह्मणब्रुवमाह, व्यासः--
गर्भाधानादिभिर्युक्तः तथोपनयनेन च ।
कर्मकृच्च न चाधीते स भवेद् ब्राह्मणब्रुवः ॥

बृहस्पतिः--शूद्रे समगुणं दानं वैश्ये च द्विगुणं स्मृतम् ।
क्षत्रिये त्रिगुणं प्राहुर्ब्राह्मणे षड्गुणं स्मृतम् ॥
श्रोत्रिये चैव साहस्रमाचार्येण द्विगुणन्ततः ।
आत्मज्ञे शतसाहस्रमनन्तन्त्वग्निहोत्रिणे ॥

अल्पविद्यस्याल्पं बहुविद्यस्य बहु देयमिति चण्डेश्वरः । दाने व्यासः--
मातापितृषु यद्दानं भ्रातृस्वसृसुतादिषु ।
जायात्मजेषु यद्दानं सोऽनन्तः स्वर्गसंक्रमः ॥

असाधारणधनदाने फलमिदम् । दक्षः--
'दीनानाथविशिष्टेभ्यो दत्तं च सफलं भवेत् ।'

दीनः क्षीणनिर्वाहोपायः । अनाथः पोषकहीनः ।

---

(१) आहारादधिकं नान्नं देयं मूर्खाय कर्हिचित् ।
दाता नरकमाप्नोति दत्तवित्तार्जिताघतः ॥ इति स्मृतिः ।

अथ दानानर्हजनानाह दक्षः--
धूर्ते छद्मनि मल्ले च कुविद्ये कितवे शठे । चाटचारणचौरेषु दत्तं भवति निष्फलम् ॥

व्यासः--ऊषरे वापितं बीजं यच्च भस्मनि हूयते । क्रियाहीनेषु यद्दत्तं न च तत्प्रेत्य नो इह ॥

पात्रेऽपि विशेषनिन्द्यमाह वृद्धमनुः--
पात्रभूतोऽपि यो विप्रः प्रतिगृह्य प्रतिग्रहम् । असत्सु विनियुञ्जीत तस्मै देयं न किंचन ॥
सञ्चयं कुरुते यश्च प्रतिगृह्य समन्ततः । धर्मार्थं नोपयुङ्क्ते च न तं तस्करमर्चयेत् ॥
अतः सर्वथा विचार्य दानं देयमित्यर्थः ।

व्यासः—दयामुद्दिश्य यद्दानमपात्रेभ्योऽपि दीयते ।
दीनान्धकृपणेभ्यश्च तदानन्त्याय कल्प्यते ॥

कृपणो विकलः । विष्णुः--
न दानं यशसे दद्यान्न भयान्नोपकारिणे ।
न नृत्यगीतशीलेभ्यो धर्मार्थमिति निश्चयः ॥

उपकारिणे इति प्रत्युपकारेण धर्मार्थमित्यर्थः । शातातपः—
ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्ज्जिते ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥

ब्राह्मणातिक्रम इति दोषायेति शेषः । (१) यमः—
न प्रतिग्रहमर्हन्ति वृषलाध्यापका द्विजाः ।
शूद्रस्याध्यापनाद्विप्रः पतत्येव न संशयः ॥

वृषलः शूद्रः । व्यासः—
नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
रोदित्यन्नं दीयमानं मया दुष्कर्म किं कृतम् ॥

हिरण्यविस्मरणे विस्मृततुल्यहिरण्यदानमाह, छन्दोगपरिशिष्टे—
प्रमादतस्तु यन्नष्टं तावन्मात्रं नियोजयेत् ।
अन्यथा स्तेयभागी स्याद्धेम्न्यदत्ते विनाशिनि ॥

उत्सृष्टाप्रतिपादितपर इति रत्नाकरः ।

साम्प्रदायिकास्तु—सर्वत्र सङ्कोचात्प्रायश्चित्तमाचरन्ति चौर्यादिना केनापि हृतसुवर्णेन हृततुल्यहिरण्यदानं प्रमादत इत्यभिधानादित्यवगम्यते, किन्तु विस्मरणादिना हिरण्यविनाशे विनष्टहिरण्यतुल्यहिरण्यदानं तस्यादाने हिरण्यचौर्यदोषभागित्वम् । तद्दानप्रकारस्तु ॐ प्रमादनष्टहिरण्यतुल्यहिरण्याय-नमः ३ इति देयहिरण्योपरि अक्षतान्त्रिकार्य्य, कुशोपरि ३ ओं ब्राह्मणाय नमः ३ देयहिरण्यं सिक्त्वा कुशादिकमादाय ओं अद्य मत्प्रमादनष्टहिरण्य-तुल्यपरिमाणं हिरण्याप्रदानहेतुकहिरण्यस्तेयजन्यपापानुत्पत्तिकाम इदं प्रमा-दनष्टहिरण्यतुल्यपरिमाणं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणायाहन्ददे। तद्दशांशं षोडशांशं वा दक्षिणान्दद्यात् । हारीतः—'तस्मादवोक्ष्य दद्यादाल-भ्य च' । इति अवोक्ष्य सिक्त्वा, आलभ्य स्पृष्ट्वा दद्यादित्यर्थः । स्मृतिः—

दद्यात्पूर्वमुखन्दानं गृह्णीयादुत्तरामुखः ।
नामगोत्रे समुच्चार्य प्राङ्मुखो देवकीर्त्तनात् ॥
उदङ्मुखाय विप्राय दत्त्वाऽन्ते स्वस्ति वाचयेत् ॥

नन्दिपुराणे—'तस्मात्सर्वप्रयत्नेन दद्यात्कनकदक्षिणाम् ।'

---

(१) विप्रोऽल्पज्ञोऽपि संपूज्यो न हि वेदविदन्त्यजः ।
बन्ध्याऽपि गौर्यथापूज्या न तु दुग्धवती खरी ॥ इति नीतिः

एतच्च पितृकार्यातिरिक्ते, पितृकार्ये तु रजतमेव दक्षिणेति बोध्यम् ।

बृहस्पतिः—कुटुम्बभक्तवसनाद् देयं यदतिरिच्यते ।
मध्वास्वादो विषं पश्चाद् दातुर्धर्मोऽन्यथा भवेत् ॥

तथा च पोष्यपोषणयोग्यं धृत्वा तदतिरिक्तमेव देयम्, न तु पोष्यपोषणयोग्यमपीति तात्पर्यम् । वृद्धशातातपः—

द्रव्येणान्यायलब्धेन यः करोत्यौर्द्ध्वदेहिकम् ।
न तत्फलमवाप्नोति तस्यार्थस्य दुरागमात् ॥

और्ध्वदैहिकं श्राद्धादि । अङ्गिराः—

बहुभ्यो न प्रदीयन्ते गौर्गृहं शयनं स्त्रियः ।
विभक्तदक्षिणा ह्येता दातारं तारयन्ति हि ॥

जीर्णोद्धारे 'यत्र चैकोऽश्वो गौर्वा द्वयोर्देयत्वेन विहितस्तत्र मूल्यद्वारेण तद्विभागः संप्रदानेनैव कर्त्तव्यः' इति । महार्णवे तु—एका गौरनेकस्मै मूल्यद्वारेणैव दातव्या, न तु स्वरूपेण ।

एका एकस्य दातव्या न बहुभ्यः कदाचन ।
सा विभक्ता च विक्रीता दहत्यासप्तमं कुलम् ॥

इति निषेधादिति यदुक्तं तद्विहितेतरबहुसंप्रदानकगोस्वरूपदानपरमिति सिद्धान्तवागीशः । अङ्गिराः--

देवतानां गुरूणाञ्च मातापित्रोस्तथैव च ।
पुण्यं देयं प्रयत्नेन नापुण्यं देशितं क्वचित् ॥

अपुण्यं पापम्, देशितङ्कथितम् । नन्दिपुराणे--

पापदः पापमाप्नोति नरो लक्षगुणं सदा ।
पुण्यदः पुण्यमाप्नोति शतशोऽथ सहस्रशः ॥

यमः--कन्याप्रदाने यज्ञे वा अन्यस्मिन्धर्मसङ्कटे ।
विघ्नमाचरते यस्तु तमाहुर्ब्रह्मघातकम् ॥
आशान्दत्त्वा ह्यदातारन्दानकाले निषेधकम् ।
दत्त्वा सन्तप्यते यस्तु तमाहुर्ब्रह्मघातकम् ॥

दानकाले इत्युपलक्षणम् । तेन तत्पूर्वमपि दानप्रतिरोधकवाक्यादिकथनेऽपि दोष एव । आदित्यपुराणे—

किङ्करिष्यत्यसौ मूढो गृह्णन्नुभयतोमुखीम् ।
सहस्रं वारुणाः पाशाः क्षुरधारासिसंयुताः ॥

उभयतोमुखी निःसृतवत्समुखमात्रा । तद्दानकर्त्तुर्भूमिदानसमं फलं भवतीत्युक्तम्(१) । एकादशाहे शय्यादानप्रकरणे--

---

(१) यावद्वत्सो योनिगतो यावद्गर्भं न मुञ्चति । तावद्द्यौः पृथिवी ज्ञेया सशैलवनकानना ॥
चतुरर्णा भवेद्दत्ता पृथिवी नात्र संशयः ।

गृहीतायां तु तस्यां स पुनः संस्कारमर्हति।
वेदेषु च पुराणेषु शय्या सर्वत्र गर्हिता॥
तस्यां शय्यायां, पुनः संस्कारं पुनरुपनयनम्।

(१)षोडशमहादानान्याह—

आद्यन्तु सर्वदानानान्तुलापुरुषसंज्ञितम्।
हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम्॥
कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम्।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव हि॥
हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा।
पञ्चलाङ्गलकं तद्वद्धरादानन्तथैव च॥
द्वादशं विश्वचक्रञ्च ततः कल्पलतात्मकम्।
सप्तसागरदानञ्च रत्नधेनुस्तथैव च।
महाभूतघटस्तद्वत्षोडशः परिकीर्त्तितः॥ इति।

अथ दानदेशानाह—

तीर्थे चायतने गोष्ठे कूपारामसरस्सु च।
गृहे वाऽपि वने वाऽपि तडागे रुचिरे तथा॥
महादानानि देयानि संसारभयभीरुणा।
अनित्यं जीवनं यस्माद्वसु चातीव चञ्चलम्।
केशेष्विव गृहीतस्तु मृत्युना धर्ममाचरेत्॥

तडागे इत्यादौ सामीप्ये सप्तमी, तेन तडागादिसमीप इत्यर्थः। वटे गावः सुशेरत इति वत्।

अयने विषुवे पुण्ये व्यतीपाते दिनक्षये।
युगादौ वोपरागे च तथा मन्वन्तरादिषु॥
संक्रान्तौ वैधृतिदिने चतुर्द्दश्यष्टमीषु च
सितपञ्चदशीपर्वद्वादशीष्वष्टकासु च॥

---

याज्ञवल्क्यस्मृतावप्युक्तम्—
सवत्सारोमतुल्यानि युगान्युभयतो मुखीम्। दाताऽस्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत्॥
यावद्वत्सस्य पादौ द्वौ मुखं योन्यां प्रदृश्यते। तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति॥

(१) तुलापुरुषदानं तुलापुरुषस्य तुलोन्मितपुरुषभारसमपरिमितिद्रव्यस्य दानम्, व तुलापुरुषविधिना दानम्। तद्दानधनं न चिरं स्वगृहे रक्षेत्। तदुक्तं यथा—
दीनानाथविशिष्टादीन् पूजयेद् ब्राह्मणैः सह। न चिरं धारयेद् गेहे हेम सम्प्रोक्षितं बुधः॥
तिष्ठद् भयावहं यस्माच्छोकव्याधिकरं नृणाम्। शीघ्रं परस्वीकरणाच्छ्रेयः प्राप्नोति पुष्कलम्॥
तत्र द्रव्यभेदेन फलभेदाः—
अष्टानामपि धातूनां यस्तुलां कुरुते नरः। सर्वपापैः प्रमुच्येत मनोवाक्कायसम्भवः॥
एवं कामभेदेन पदार्थभेदा उक्ताः शब्दकल्पद्रुमे, तेऽत्र विस्तृतिभीत्या न लक्षिताः। जिज्ञासुभिर्दानशब्दे द्रष्टव्या इत्यलम्।

यज्ञात्मके विवाहेषु दुःस्वप्नाद्भुतदर्शने ।
द्रव्यब्राह्मणलाभे च श्रद्धा वा यत्र जायते ॥

अत्र गुरुशुक्रबाल्यवार्द्धक्यास्तमयसिंहादित्यगुर्वादित्यपौषादिमासचतुष्टयान्यतमैकद्वित्रितदधिकान्यतमदिनवृष्ट्युत्तरैकद्वित्रिसप्तान्यतमादिनिषिद्धसमयादन्यस्मिन्निति दानरत्नाकरः ।

श्रवणाश्विधनिष्ठार्द्रा नागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

(१)अथ युगादिः—ब्रह्मपुराणे--

वैशाखे शुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्तिके शुक्लपक्षे च त्रेता तु नवमेऽहनि ॥
अथ भाद्रपदे कृष्णचतुर्दश्यान्तु द्वापरम् ।
माघे तु पौर्णमास्यान्तु घोरं कलियुगन्तथा ।
युगारम्भास्तु तिथयो युगाद्यास्तेन कीर्त्तिताः ॥

अथ मन्वन्तरादिमाह मत्स्यपुराणे—

अश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
श्रावणस्य त्वमावस्या पौषस्यैकादशी तथा ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढी च पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ।
मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारकाः ॥

भूमिदाने जाबालः—

महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
दशहस्तां महीं दत्त्वा मुच्यते सर्वकिल्विषैः ॥
यत्किञ्चित्कुरुते पापं पुरुषो वृत्तिकर्षितः ।
अपि गोचर्ममात्रेण भूमिदानेन शुद्ध्यति ॥

(२)अथ गोचर्मप्रमाणमाह—

दशहस्तेन दण्डेन त्रिंशद्दण्डैस्तथाऽऽयतम् ।

---

(१) अत्रोक्तयुगादिसमयादन्यस्मृतौ भिन्नक्रमो दृश्यते-यथाऽऽह नारदः—
कार्तिके शुक्लनवमी चादिः कृतयुगस्य सा । त्रेतादिर्माधवे शुक्ला तृतीया पुण्यसम्मिता ॥
कृष्णा पञ्चदशी (३०) माघे द्वापरादिरुदीरिता । कल्पादिः स्यात्कृष्णपक्षे नभस्ये च त्रयोदशी ॥

अत्र कृष्णा पञ्चदशी अमावास्येत्यर्थः । एवमेव ज्योतिषेऽपि 'युगाद्याः सिते गोऽग्नी बाहुलराधयोर्मदनदर्शौ भाद्रमाघासिते ।' मु० चि० ॥

(२) ब्रह्ममतेन गोचर्मपरिभाषितभूमिमानम्= ० × ३०=३०० । प्रजापतिमतेन तु २० × २०=४००, इदं त्रिभागोनम्=३०० इदमपि तत्समं, किन्तु वंशप्रमाणयोर्भेदाद्भिन्नं जातम् ।

दश तान्येव विस्तारो ब्राह्मं गोचर्मलक्षणम् ॥

बृहस्पतिः—षष्टिवर्षसहस्राणि स्वर्गे वसति भूमिदः।
आक्षेप्ता चानुमन्ता च तान्येव नरकं व्रजेत् ॥

आक्षेप्ता हरणकर्त्ता, तान्येव षष्टिवर्षसहस्राण्येव। संख्यापरिमाणम्—

मात्स्ये—तडागानां सहस्रेण अश्वमेधशतेन च।
गवाङ्कोटिप्रदानेन भूमिहर्त्ता न शुद्धयति ॥
स्वदत्ताम्परदत्तां च योऽहरद्वै वसुन्धराम्।
षष्टिवर्षसहस्राणि विष्ठायाञ्जायते कृमिः ॥
भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥
दाता दानं स्मरेन्नैव प्रतिग्राही न याचते।
उभौ तौ नरकं यातो यावच्चन्द्रार्कमेदिनी ॥

ब्रह्माण्डे—यद्गोदानं तपो जप्यं श्राद्धं च सुरपूजनम्।
गङ्गायां यत्कृतं सर्वं कोटिकोटिगुणम्भवेत् ॥

भविष्ये—यश्चाक्षयतृतीयायाङ्गङ्गातीरे ददाति वै।
घृतधेनुं विधानेन तस्य पुण्यफलं शृणु ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च।
सहस्रादित्यसंकाशः सर्वकामसमन्वितः ॥
तथैव गोप्रदानञ्च विधिना कुरुते तु यः।
गोलोमसंख्यया तावत्कल्पान्यर्बुदसङ्ख्या ॥
गोलोके शिवलोके वा कामधेनुप्रजाऽन्वितः।
भुञ्जानः सर्वकामांस्तु दिव्यान्नानाविधान् बहून् ॥

गङ्गायां निवर्त्तनद्वयभूमिदानमभिधाय तीर्थचिन्तामणौ ब्रह्माण्डे—
तद्भूमिपरमाणूनां संख्या याऽयुतसंख्यया।
सोमेन्द्रब्रह्मलोकेषु विष्णुलोके तथैव च ॥
शिवलोके तथा श्रीमान्भोगं भुङ्क्ते तथाविधम् ॥

(१) निवर्त्तनलक्षणमाह—मात्स्ये—
'सप्तहस्तेन दण्डेन त्रिंशद्दण्डान्निवर्त्तनम्।
त्रिभागहीनङ्गोचर्ममानमाह प्रजापतिः ॥

तथा—ग्रामं गङ्गातटे योऽसौ विप्रेभ्यस्संप्रयच्छति।
ब्रह्मविष्णुशिवेभ्यश्च दुर्गायै भास्कराय च ॥
सर्वदानेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम्।

---

(१) लीलावत्यां निवर्त्तनलक्षणम्—
'निवर्तनं विंशतिवंशसंख्यैः क्षेत्रं चतुर्भिश्च भुजैर्निबद्धम्।'

सर्वतीर्थेषु यत्पुण्यं सर्वव्रततपस्सु च ॥
सहस्रगुणितं तत्र फलं स्याद् ग्रामदानतः ।

तत्रेति गङ्गायामित्यर्थः । तथा—

यावत्तु ग्रामभूमेर्वै परमाणुषु संख्यया ।
भोगान् भुक्त्वा तथा लोके जायते योगिनां कुले ॥
अणिमादिगुणैर्युक्तः स्वयम्भोगी भवत्यपि ।
देहान्ते निर्मले नित्ये परे ब्रह्मणि लीयते ॥

तथा--गोभूहिरण्यदानेन भक्त्या गङ्गातटे सकृत् ।
नरो न जायते भूयः संसारे दुःखसङ्कटे ॥
दीर्घायुष्ट्वं च वासोभिरन्नदानेन सम्पदः ।

अथ दशधेनूराह, मात्स्ये—

प्रथमा गुडधेनुः स्याद् घृतधेनुस्तथाऽपरा ।
तिलधेनुस्तृतीया तु चतुर्थी जलसंज्ञिका ॥
क्षीरधेनुश्च विख्याता मधुधेनुस्तथाऽपरा ।
सप्तमी शर्क्कराधेनुर्दधिधेनुस्तथाऽष्टमी ॥
रसधेनुश्च नवमी दशमी स्यात्स्वरूपतः ।
स्वरूपधेनुमन्यत्र केचिदिच्छन्ति मानवाः ॥

गुडधेन्वादौ गुडादिप्रमाणमाह, मात्स्ये--

उत्तमा गुडधेनुः स्यात्सदा भारचतुष्टयम् ।
वत्सं भावेन कुर्वीत भाराभ्यां मध्यमा स्मृता ॥
अर्द्धभारेण वत्सः स्यात्कपिला भारकेण तु ।
चतुर्थांशेन वत्सः स्याद् गृहवृत्तानुसारतः ॥

मुख्यकल्पशक्तस्य गौणकल्पकरणे दोषमाह कात्यायनः--

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥

सांपरायिकं पारलौकिकम् । एतदेव घृतादिनवधेनुघृतादिप्रमाणमपि । 'विधानमेतद्धेनूनां सर्वासामिह पठ्यते' इति सामान्येनातिदेशात् ।

## तत्र दानप्रकारः

गोमयोपलिप्तायां भूमौ कुशानास्तीर्य तत्र प्राग्ग्रीवं चतुर्हस्त कृष्णाजिनं धेन्वर्थं पातयित्वा तत्समीपे लघुकृष्णाजिनं प्राग्ग्रीवमेव वत्सार्थं धृत्वा तदुपरि शक्त्यनुसारेण भारचतुष्टयादिना घृतादिना धेनुस्थापितेन धेनुं शक्त्यनुसारेणैकभारादिना घृतादिना घटे स्थापितेन च वत्सं परिकल्प्यो-भावपि शुक्लवस्त्रेण वेष्टितौ शुक्तिमयकर्णौ इक्षुमयपादचतुष्टयौ सुवर्णशृङ्गौ रूपखुरौ सुरभिद्रव्यनिर्मितघ्राणौ धेनुवत्सौ निर्मायाक्षतपुष्पाभ्यां ॐ सोप-

करणसवत्सघेनवे नमः ३ ॐ ब्राह्मणाय नमः ३ इमां सोपकरणां सवत्सां घृतधेनुं ददानीति द्विजकरे जलं दत्त्वा, ददस्वेति तेनोक्ते धेनुं संप्रोक्ष्य ओं या लक्ष्मीरित्यादिपञ्चश्लोकं पठित्वा ओं अद्यात्तयतृतीयायां कल्पकोटिसहस्रबहुकल्पकोटिशतावच्छिन्नहेमरत्नमयहंसभूषितविमानाधिकरणकस्वकीयपितृगणसहितसहस्रादित्यसङ्काशसर्वकामसमन्वितस्वकीयरुद्रलोकसहितत्वतदुत्तरगङ्गाधिकरणान्वितविप्रत्वभवनान्तकालिकब्रह्मविष्णुभवनानन्तरमोक्षप्राप्तिकाम इमां गोमयोपलिप्तास्तृतकुशस्थितां घृतधेनुं सवत्सां तत्तदुपकरणयुक्तामित्यादि। ततः सुवर्णदक्षिणां दद्यात्। एवं गुडधेन्वादावपीति श्राद्धचिन्तामणौ गुडधेन्वादीनां प्रकारः।

## अथोभयमुखीगोदानम्

मात्स्ये—रुक्मशृङ्गीं रौप्यखुरां मुक्तालाङ्गलभूषिताम्।
कांस्योपदोहनां राजन्? सवत्सां द्विजपुङ्गवे॥
प्रसूयमानां यो दद्याद्धेनुं द्रविणसंयुताम्।
यावद्वत्सो योनिगतो यावद्गर्भं न मुञ्चति॥
तावद्द्यौः पृथिवी ज्ञेया सशैलवनकानना।
चतुरर्णा भवेद्दत्ता पृथिवी नात्र संशयः॥
यावन्ति धेनुरोमाणि वत्सस्य च नराधिप!।
तावत्संख्ययुगानेव देवलोके महीयते॥
पितॄन् पितामहांश्चैव तथैव प्रपितामहान्।
उद्धरिष्यत्यसंदेहो नरकाद् भूरिदक्षिणः॥ इत्यादि।

द्रविणसंयुतां दक्षिणाद्रव्यसंयुक्ताम्। भूरिदक्षिण इत्यग्रेऽभिधानादिति लक्ष्मीधरः। सोपकरणप्रसूयमानोभयमुखीगो ज्ञादिकं विधाय ओं अद्य सप्तसमुद्रसशैलवनकाननचतुरर्णपृथिवीदानजन्यसमफलतद्धेनुवत्सरोमसमसंख्ययुगगणावच्छिन्नदेवलोकमहितत्वपितृपितामहप्रपितामहनरकोद्धरणघृतक्षीरवहकुल्याकदधिपायसकर्दमकदेशाधिकरणकेप्सितकामदात्मगोलोकसुलभत्वब्रह्मलोकसुप्रापत्वाजस्रचन्द्रवक्त्रसुतप्तजाम्बूनदतुल्यवर्णमहानितम्बस्तनुवृतमध्यनलिनाभनेत्रानेकदेशाधिकरणकेप्सितनत्रीसेव्यमानत्वकाम इमां रुक्मशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषितां कांस्योपदोहनां सवत्सां प्रसूयमानामुभयतोमुखीं गां रुद्रदैवतामित्यादि। ततो दक्षिणां दत्त्वा पुच्छग्रहणं कारयित्वा कामस्तुतिं पाठयेदिति दानवाक्यावली (१)।

---

(१) अथ कस्मै गौर्न देयेत्युक्तं भारते—
असद्वृत्ताय पापाय लुब्धायानृतवादिने। हव्यकव्यव्यपेताय न देया गौः कथञ्चन॥
कस्मै देयेत्युक्तं तत्रैव—
क्षवे बहुपुत्राय श्रोत्रियायाहिताग्नये। दत्त्वा दश गवां दाता लोकानाप्नोत्यनुत्तमान्॥

अथ द्रव्यदैवतानि—विष्णुधर्मोत्तरे—

अभयं सर्वदैवत्यं भूमिर्वै विष्णुदेवता।
कन्या दासस्तथा दासी प्राजापत्याःप्रकीर्तिताः॥

---

कीदृशी गौर्देयेत्यपि तत्रैवोक्तम्—

वत्सलां गुणसम्पन्नां तरुणीं वस्त्रसंयुताम्। दत्वेदृशीं गां विप्राय सर्वपापैः प्रमुच्यते॥

कीदृशीं न दद्यादित्यपि तत्रैव—

पीतोदकां जग्धतृणां नष्टक्षीरां निरिन्द्रियाम्। जरारोगोपसंपन्नां जीर्णां वापीमिवाजलाम्॥

दत्त्वा तमः प्रविशति द्विजं क्लेशेन योजयेत्॥

दत्त्वा दुष्टा व्याधिता दुर्बला वा नो दातव्या याश्च मूल्यैरदत्तैः।
क्लेशैर्वित्तं योऽफलैः संयुनक्ति तस्यावीर्याश्चाफलाश्चैव लोकाः॥

अथ गोपालनप्रकारमाह तत्रैव—

प्रचारे वा निवाते वा बुधो नोद्वेजयेत गाः। तृषिता ह्यभिवीक्षन्ते नरं हन्युः सबान्धवम्॥

आत्मनो यदि वाऽन्येषां गृहे क्षेत्रे तथा खले। भक्षयन्तीं न कथयेत्पाययन्तीं च वत्सकम्॥

अथ गोः पवित्रत्वमाह—

पितृसद्मनि सततं देवतायतनानि च। पूयन्ते शकृता यासां पूतं किमधिकं ततः॥

अथ गोग्रासदानफलमाह—

घासमुष्टिं परगवे दद्यात्संवत्सरं तु यः। अकृत्वा स्वयमाहारं व्रतं तं सार्वकामिकम्॥

स हि पुत्रान् यशोऽर्थं च श्रियं चाप्यधिगच्छति। नाशयत्यशुभं चैव दुःस्वप्नं चाप्यपोहति॥

अथ गोदोहनप्रकारः—

द्वौ मासौ पाययेद्वत्सं द्वौमासौ द्वौ स्तनौ दुहेत्। द्वौ मासौ त्वेकवेलायां शेषकालं यथारुचि॥

अथ गोबन्धनरज्जुविचारः—

न नारिकेलैर्नच शाणवालैर्न वाऽपि मौञ्जैर्न वज्रशृङ्खलैः।
एतैस्तु गावो न निबन्धनीया बद्ध्वा तु तिष्ठेत्परशुं गृहीत्वा।

आपस्तम्बः—'कुशैः काशैस्तु बध्नीयात् स्थानेऽपायविवर्जिते।'

तथा गोबन्धने विशेषमुक्तं स्कान्दे—

देवैरध्यासितां तान्तु सर्वैर्दस्तद्वयेन तु। मृदुबन्धेन बध्नीयादन्तः श्लक्ष्णेन रज्जुना।

अथ यादृश्याः पयो न पेयं ता आह याज्ञवल्क्यः—

सन्धिन्यनिर्दशावत्सागोपयः परिवर्जयेत्। औष्ट्रमेकशफं स्त्रैणमारण्यकमथाविकम्॥

सन्धिनी साण्डसङ्गिनी वा अन्यवत्सपायिनी, अनिर्दशा प्रसवोत्तरदशदिनान्तर्गता। अवत्सा मृतवत्सा वाऽजातवत्सा वा एतासां पयो न ग्राह्यम्। तथोष्ट्रीदुग्धम्। घोट्याद्येकशफदुग्धम् जाङ्गलिकजन्तुदुग्धं मेषीदुग्धञ्चाजादुग्धं च न गृह्णीयादिति।

अत एव देवल आह—

अजाविमहिषीणान्तु पयः श्राद्धेषु वर्जयेत्। विकारान् पयसश्चैव माहिषं च घृतं हितमिति॥

एवं बह्वयो गावः सन्ति यासां गोमयस्यापि ग्रहणं न कर्तव्यम्,

तदुक्तं शब्दकल्पद्रुमे—

अत्यन्तजीर्णदेहाया वन्ध्यायाश्च विशेषतः। रोगार्त्तानवसूताया न गो गोमयमाहरेत्॥

अमेध्यभोजिनी या गौस्तस्या दुग्धं परित्यजेत्।
स्तनव्रणायाः खिन्नायाः क्षतयोन्याश्च सन्त्यजेत्।

प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः।
तथा चैकशफं सर्वं कथितं यमदैवतम् ॥

**अथ पञ्चगव्ये क्रियमाणे कस्याः किं ग्राह्यं तदाह—**

**पराशरः**—गोमूत्रं कृष्णवर्णायाः श्वेतायाश्चैव गोमयम्।

पयश्च ताम्रवर्णाया रक्ताया गृह्यते दधि ॥ कपिलाया घृतं ग्राह्यं सर्वं कापिलमेव वा ॥

**अथैतेषां परिमाणभेदोऽपि तत्रैव—**

मूत्रमेकपलं दद्यादङ्गुष्ठार्धं तु गोमयम्। क्षीरं सप्तगुणं दद्याद्दधि त्रिपलमुच्यते ॥
घृतमेकपलं दद्यात्पलमेकं कुशोदकम्।

**अथ तत्तत्पदार्थग्रहणे तत्तन्मन्त्रमाह तत्रैव—**

गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम्। आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥
तेजोसीति घृतं तद्वद्देवस्यत्वेति चोदकम्। कुशमिश्रं जपेद्विद्वान् पञ्चगव्यं भवेत्ततः ॥ इति।

अथ गोभक्षितसस्यादौ क्षेत्रवते बीजमात्रमेव धान्यं देयम्।

**तदाह नारदः—**

गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते। सामन्तानुमते देयं धान्यं यत्र तु वापितम् ॥
गोजा[illegible] गोमिना देयं धान्यं यत्र तु वापितम्। एवं हि विनयः प्रोक्तो गवां सस्यावमर्दने ॥

**उशनाः—**

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते। पितरस्तस्य नाश्नन्ति नाश्नन्ति त्रिदिवौकसः ॥
एतत्स्त्रीगवीविषयम्। तथाऽपालकावसरिकम्।
यदि गोचारानुमत्या सस्यचारणं भवेत्तदा स च दोषो नेति।

**याज्ञवल्क्यः—**

पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते। अकामतः कामचारे चौरवद्दण्डमर्हति ॥

**भारते दानानर्हगोलक्षणमाह व्यासः—**

न कृशामपवत्सां वा बन्ध्यां रोगान्वितां तथा। न व्यङ्गां न परिश्रान्तां दद्याद्गोब्राह्मणाय वै ॥
उन्मत्तामङ्गहीनां च मृतवत्सां महाशनाम्। केश-चैल-पुरीषास्थिकव्यादां स्यन्दिनीं खलाम् ॥
पुनर्नवां यमलसूं नित्यं प्रगलितस्तनीम्। न दद्याद् ब्राह्मणेभ्यश्च सदोषं वृषभं तथा ॥

**नन्दिपुराणेऽपात्राय दत्तायां गवि दोष उक्तो यथा—**

अपात्रे सा तु गौर्दत्ता दातारं नरकं भजेत्। कुलैकविंशत्या युक्तं ग्रही[illegible] च पातयेत् ॥ इति।

**पात्रायैव दत्ता श्रेयसे भवति। तथोक्तं भारते-**

न गोदानात्परं किञ्चिद्विद्यते वसुधाधिप !। गौर्हि न्यायागता दत्ता सा हि तारयते कुलम्।

**याज्ञवल्क्यः—**

यावद्वत्सस्य द्वौ पादौ मुखं योन्यां प्रदृश्यते। तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥

**अङ्गिराः**—बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः। विभक्तदक्षिणा ह्येता दातारं तारयन्ति हि ॥
एका एकस्य दातव्या न बहुभ्यः कथंचन। सा तु विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥

**प्रसङ्गान्महिषीदानफलमुक्तं कृत्यशिरोमणौ—**

या स्त्री ददाति महिषीं सा राजमहिषी भवेत्। महाराजश्च पुरुषो व्यासस्य वचनं यथा ॥
यज्ञराट् च भवेद्विप्रः क्षत्रियो विजयी भवेत्। वैश्यस्तु धान्यधनवान् शूद्रः सर्वार्थसंयुतः ॥
तस्मात्सर्वेण दातव्या महिषी विभवे सति। पुत्रपौत्रप्रपौत्राणामात्मनः शुभमिच्छता ॥
दशधेनुसमानां यन्माहिषीं नारदोऽब्रवीत्। त्रिंशद्धेनुसमां व्यासः सर्वदानोत्तमं कविः ॥
सगरेण ककुत्स्थेन जनकेन च गाधिना। दत्ताः सविद्यविप्रेभ्यो महिष्यः सर्वकामदाः ॥

महिषश्च तथा याम्य उष्ट्रो नैर्ऋतकस्तथा ।
रौद्री धेनुर्विनिर्दिष्टा छाग आग्नेय उच्यते ॥
मेषन्तु वारुणं विद्याद्वराहो वैष्णवः स्मृतः ।
आरण्याः पशवः सर्वे कथिता वायुदेवताः ॥
जलाशयानि सर्वाणि विविधानि कमण्डलुः ।
कुम्भं च करकञ्चैव वारुणानि विनिर्दिशेत् ॥
समुद्रजानि रत्नानि समुद्राणि तथैव च ।
आग्नेयं काञ्चनं प्रोक्तं सर्वलौहानि वाऽप्यथ ॥
प्राजापत्यानि शस्यानि पक्वान्नमपि च द्विजाः ! ।
ज्ञेयानि सर्वगन्धानि गान्धर्वाणि विचक्षणैः ॥
बार्हस्पत्यं स्मृतं वासः सौमान्यथ रसानि च ।
पक्षिणश्च तथा सर्वे वायव्याः परिकीर्त्तिताः ॥
विद्या ब्राह्मी विनिर्दिष्टा विद्योपस्करणानि च ।
सारस्वतानि ज्ञेयानि पुस्तकादीनि पण्डितैः ॥
सर्वेषां शिल्पभाण्डानां विश्वकर्मा तु देवता ।
द्रुमाणामथ पुष्पाणां शाकस्य हरितस्य च ॥
फलानामपि सर्वेषां तथा ज्ञेयो वनस्पतिः ।
मत्स्यमांसे विनिर्दिष्टे प्राजापत्ये तथैव च ॥
छत्रं कृष्णाजिनं शय्यां रथमासनमेव च ।
उपानहौ तथा यानं यच्चान्यत्प्राणवर्जितम् ॥
उत्तानाङ्गिरसं त्वेतत्प्रतिगृह्णीत मानवः ।
शूरोपयोगि यत् सर्वं शस्त्रवर्म्मध्वजादिकम् ॥
रणोपकरणं सर्वं कथितं शक्रदैवतम् ।
गृहं तु शुक्रदैवत्यं यदनुक्तं द्विजोत्तमाः ! ॥
तज्ज्ञेयं विष्णुदैवत्यं सर्वं वा विष्णुदैवतम् । इति ।

द्विजोत्तमा इति सम्बोधनम् ।

## अथ गवादिमूल्यम्

छन्दोगपरिशिष्टे—

द्वात्रिंशत्पणिका गावः ।।) चतुः कार्षापणो वरः १) ।(१)
वृषे षट्कार्षापणकः १।।) चाष्टावनडुहि स्मृतः २) ॥
दश कार्षापणं २।।) धेनोरश्वे पञ्चदशैव तु ३।।।) ।
हिरण्ये कार्षापणकः ।=।) पणा नव तथाऽधिकाः ॥

(१) धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका ।
कार्षापणैव मूल्या हि दरिद्राणां प्रकीर्त्तिता ॥ इति प्रा० ग्र० ।

वस्त्रे ।) कार्षापणच्छागेऽष्टौ पणा =) द्वादशाविके ≡) ।
वृषल्यामथ पञ्चशन्मूल्यं कार्षापणाः स्मृताः१२।) ॥
निष्के पञ्चाशदेव १२।) स्यद्गजे पञ्चशतानि वै १२५) ।
पञ्च कार्षापणाः प्रोक्ता दोलायां १।) षड्रथे १।।) तथा ॥
गृहेऽष्टकार्षापणकः २) ताम्रकर्षः पणः स्मृतः ।
कार्षापणः षोडश ते इति मूल्यप्रकल्पना ॥
अधिकं प्रकल्पयेन्मूल्यं न्यूनं वित्तानुसारतः ।
पञ्च कार्षापणा दासी १।) दासः स्यात्पञ्चमाषकः ५) ॥

महिषी वृषवदिति ।

अथ संस्काराः । (१) गौतमः—
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा ।'

---

(१) **तत्र संस्कारकरणावश्यकतामाह**—मनुः—
गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः । बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥
**तत्र तावत्संस्कारभेदा उक्ता याज्ञवल्क्यस्मृतौ**—
गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा । षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च ॥
अहन्येकादशे नाम चूडा कार्या यथाकुलम् । एवमेनः शमं याति बीजगर्भसमुद्भवः ॥
**तत्रोपनयनादिसंस्कारसमयमाह**, व्यासः—
औपनायनिकः कालः परः षोडशवार्षिकः । द्वाविंशतिः परोऽन्यस्य स्याच्चतुर्विंशतिः परः ॥
ब्राह्मणक्षत्रियविशां कालश्चेदत्ययादयम् । सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥
**अथ मेखलानिर्णयः । मनुः**—
मौञ्जी त्रिवृत् समाश्लक्ष्णा कार्या विप्रस्य मेखला । क्षत्रियस्य तु मौर्वीज्या वैश्यस्य शणतान्तवी ॥
**एवमुक्तं गोभिलगृह्यसूत्रे**—'मुञ्जकाशताम्बल्यो रशनाः । **तत्र पारस्करगृह्यसूत्रे** 'मेखलां बध्नीते ।' अस्य हरिहरभाष्यम्-ततो मेखलां मौञ्ज्यादिकां वक्ष्यमाणलक्षणां बध्नीतीते कटिप्रदेशे त्रिवृतां प्रवरग्रन्थियुतां प्रादक्षिण्येन परिवेष्टयति । **एवं गदाधरभाष्यम्**—'तत आचार्यो माणवककट्यां मेखलां रशनां बध्नीते, अत्रैवं बन्धनम् 'आचार्यस्त्रिगुणां मेखलामादाय बटोः कटिप्रदेशे प्रादक्षिण्येन त्रिर्वेष्टयति, तृतीये वेष्टने ग्रन्थयस्त्रयः सप्त वा कार्याः ॥' **विश्वनाथभाष्यन्तु** "बध्नीते परिधापयति परिवेष्टनं च कटिवेष्टनं बहिर्वासवत् ।" इति ।
**एवमेव गोभिलगृह्यसूत्रभाष्यकर्ता सत्यदेवोऽप्याह**—'एषां रशनाः कटिबन्धनरज्जवो मुञ्जकाशताम्बल्यः कार्याः ।' इति । **अथैवं वाचस्पत्याभिधाने**-'मेखला......उपनयनकाले ब्रह्मचरिधार्ये मौञ्ज्यादौ कटिसूत्रे ।' इति ।

एभिराप्तवाक्यैर्मेखला कटिप्रदेशे एव धार्या, न हि यज्ञोपवीतवदिति स्पष्टम् ।
**तथोत्तररामचरिते भवभूतिरपि**—मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकम् ।'
**तथा माघकाव्ये**—पिशङ्गमौञ्जीयुतमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां विडम्बयन्तं शितिवाससस्तनुम् ॥
**एवं कुमारसंभवे** १ स० ५ श्लोकः 'आमेखलं सञ्चरतां घनानामित्यस्य **टीकायां मल्लिनाथः** 'आमेखलं नितम्बपर्यन्तम् ।' एवं कुमारसंभवशिशुपालवधमेघदूतरघुवंशकाव्येषु बहुशो मेखलायाः कटिप्रदेशधारित्वमेवोक्तं महाकविभिः **पद्धतौ तु** 'त्रिकं वेष्टयेत्' त्रिकं नितम्बोर्ध्वम् । 'पृष्ठवंशाधरे

'जातकर्म नामकरणमन्नप्राशनं चूडोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः' । सहधर्मचारिणीसंयोगो विवाहः । सुमन्तुः—'ब्राह्मणक्षत्रियविशां वृत्तिः गर्भाधानसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशनचूडोपनयनव्रतचरणाध्ययनसमावर्त्तनविवाहश्लोष्यन्तीयज्ञदानादि ।' श्लोष्यन्ती सुखप्रसवार्थं कर्म प्रसवशूलहरम् । याज्ञवल्क्यः—

'गर्भाधानमृतौ पुंसः सवनं स्यन्दनात्पुरा ।'

पुंसः सवनं पुंसवनं, स्यन्दनाद् गर्भचलनात् , बैजवापः—सप्तमे मासि प्रथमे वा गर्भे सीमन्तोन्नयनम् । स्मृतिः—

एतस्मान्नाधिकारोऽस्य न वेदे न स्मृताविति ।
विवाहमात्रसंस्कारं शूद्रोऽपि लभतां स्वयम् ॥

अस्य शूद्रस्य, मात्रपदं विशेषविहितविवाहान्यसंस्कारव्यवच्छेदकम् । विष्णुपुराणे—सचैलस्य पितुः स्नानं जाते पुत्रे विधीयते ।
जातकर्म ततः कुर्याच्छ्राद्धमाभ्युदये च यत् ॥

गौतमः—'जननाद्दशरात्रे व्युष्टे शतरात्रे सव्वत्सरे वा नामकरणम्' व्युष्टे व्यतीते, दशरात्रं स्वस्वाशौचान्तिमदिनपरम् , 'अशौचव्यपगमे नामधेयम्' इति विष्णुवचनात् । गृह्यपरिशिष्टे-'द्व्यक्षरं चतुरक्षरं वा घोषवदाभ्यन्तरस्थमध्यं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितान्तम् ।' वर्गाणां तृतीयचतुर्थपंचमा

---

त्रिकमित्यमरकोषात् । श्रीमद्भागवतेऽपि-'कदम्बकिंजल्कपिशङ्गवाससा ह्यलंकृतं मेखलया नितम्बे ।' इत्यादि ।

अत्र जातस्य जन्मन्यनिष्टफलदान्याह रामाचार्यः—

गण्डान्तेन्द्रभशूलपातपरिघव्याघातगण्डावमे, संक्रान्तिव्यतिपातवैधृतिसिनीवालीकूहूदर्शके ।
वज्रे कृष्णचतुर्दशीषु यमघण्टे दग्धयोगे मृतौ, विष्टौ सोदरभे जनिर्न पितृभे शस्ता शुभा शान्तितः ॥

आद्ये पिता नाशमुपैति मूलपादे द्वितीये जननी तृतीये ।
धनं चतुर्थोऽस्य शुभोऽथ शान्त्या सर्वत्र सत्स्यादहिभे विलोमम् ॥
स्वर्गे शुचिप्रोष्ठपदेषु माघे भूमौ नभः कार्त्तिकचैत्रपौषे ।
मूलं ह्यधस्तात्तु तपस्यमार्गवैशाखशुक्रेष्वशुभं च तत्र ॥
अभुक्तमूलं घटिकाचतुष्टयं ज्येष्ठाऽन्त्यमूलादिभवं हि नारदः ।
वशिष्ठ एकद्विघटीमितं जगौ बृहस्पतिस्त्वेकघटी प्रमाणकम् ॥
अथोचुरन्ये प्रथमाष्टघट्यो मूलस्य शाक्रान्तिमपञ्चनाड्यः ।
जातं शिशुं तत्र परित्यजेद्वा मुखं पिताऽस्याष्टसमा न पश्येत् ॥

अथ प्रसङ्गतो जातस्योर्ध्वपंक्तौ प्रथमदन्तजनने वा सदन्तबालोत्पत्तौ दोष उक्तो विष्णुधर्मोत्तरे-

उपरि प्रथमं यस्य जायन्ते च शिशोर्द्विजाः । दन्तैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम ! ॥
मातरं पितरं वाऽथ खादेदात्मानमेव वा ।

अस्य शान्तिः शान्तिमयूखादौ द्रष्टव्येति । तत्र प्रथममासे दन्तजनने स्वस्य नाशः । द्वितीये कनिष्ठस्य । तृतीये भगिन्याः । चतुर्थे मातुः । पञ्चमेऽग्रजस्य । षष्ठेऽतुलभोगः । सप्तमे पितुः सुखम् । अष्टमे पुष्टत्वम् । नवमे लक्ष्मीलाभः । दशमे सौख्यलाभ इति ।

यरलवा हकारश्च घोषवन्तस्ते नाम्न आदौ देयाः। यरलवा अन्तस्थास्ते नाम्नो मध्ये, कृतं कृदन्तम्।

शङ्खलिखितौ–'कुलदेवतानक्षत्रादिसंबद्धम्' इति। नाम कुर्यादिति शेषः। कुलसंबद्धं वशिष्ठ इति, देवसंनद्धं केशव इति,नक्षत्रसम्बद्धं चैत्र इति।

यमः--'ततोऽन्नप्राशनं मासि षष्ठे कुर्याद्यथाविधि।'

देवलः--गर्भाष्टमे उपनयनार्हो भवति इति ब्राह्मणस्य मुख्यकालः। गौणस्तु पंचदशवर्षपर्यन्तः। तथा हि, याज्ञवल्क्यः—

(१)आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः स्मृतः।
अत ऊर्ध्वं पतन्त्येते सर्वधर्म्मबहिष्कृतः।

आषोड्शादिति पंचदशवर्षपर्यन्तमित्यर्थः। एवमाद्वाविंशादित्यादावपि। तथा च ब्राह्मणादित्रयाणां क्रमेण पंचदशैकविंशतित्रयोविंशतिवर्षमुपनयनस्य गौणः कालः। अत ऊर्ध्वमुपनयनं व्रात्यप्रायश्चित्तं कृत्वा कर्तव्यम्। क्षत्रियवैश्ययोर्मुख्योपनयनकालमाह, याज्ञवल्क्यः—

'राज्ञामेकादशे सैके विशामेके यथाकुलम्।'

सैके एकसहिते, तथा च राज्ञां द्वादशवर्षो मुख्यः कालः। मनुः--

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा न्याय्या द्विजजातीनां दारकर्मणि मैथुने॥

दारकर्मणि विवाहे, मैथुने रतौ। याज्ञवल्क्यः--

पंचमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा।
सपिण्डता निवर्त्तेत सर्ववर्णेष्वयं विधिः॥ इति।
पितृतः सप्तमीं वर्ज्जयेन् मातृतः पंचमीन्त्यजेत्।

विवाह इति शेषः। व्यवहारात्पितृतः सप्तम्यपि विवाह्या, व्यवहारे बलवत्त्वस्य प्रागुक्तत्वात्। सुमन्तुः—'सर्वाः पितृपत्न्यो मातरस्तद्भ्रातरो मातुलास्तद्दुहितरो भगिन्यस्तदपत्यानि भागिनेयानि ताश्च न परिणेतव्याः।' ताः परिणीताः सङ्करकारिण्यस्तथाऽध्यापयितुरेतदेव। एतेन सपत्नीमातुर्भ्रातृपुत्री तत्पुत्री न विवाह्येति पर्यवसितम्। सपत्नीमातुर्भगिनीपरिणयने न दोषः प्रापकाभावात्।

---

(१) आषोडशादित्यस्य षोडशवर्षान्तपर्यन्त इत्यर्थो बोध्यः। उपनयनविहितवर्षस्य द्विगुणे वर्षेऽतीते गौणत्वप्रतिपादनात्। तथोक्तं ज्योतिषे मुहूर्त्तचिन्तामणौ संस्कारप्रकरणे—

विप्राणां व्रतबन्धनं निगदितं गर्भाज्जनेर्वाऽष्टमे। वर्षे वाऽप्यथ पञ्चमे क्षितिभुजां षष्ठे तथैकादशे।
वैश्यानां पुनरष्टमेऽप्यथ पुनः स्याद् द्वादशे वत्सरे कालेऽथ द्विगुणे गते निगदिते गौणं तदाहुर्बुधाः॥

राजमार्तण्डे नवमवर्षेऽपि व्रतबन्धनस्य विधानमुक्तम्—

प्रायः संस्करणं प्राप्ते पञ्चमे हायने हितम्। व्रतं गर्भाष्टमे कार्यमष्टमे नवमेऽपि वा॥

अथ कन्यादानाधिकारिण आह, कात्यायनः—

स्वयमेवौरसीं दद्यात्पित्रभावे स्वबान्धवाः ।
दीर्घप्रवाससक्तेषु (१) पौगण्डेषु च बन्धुषु ॥
माता तु समये दद्यादौरसीमपि कन्यकाम् ।

बान्धवाः पितामहपितृव्यभ्रात्रादयः । दीर्घप्रवाससक्तेषु अतिदूरविदेशस्थितेषु । पौगण्डेषु व्यवहारासमर्थेषु । स्मृतिः—

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
एते कन्याप्रदातारः पूर्वाभावे परः परः ॥

राजमार्त्तण्डे—षोडशाब्दे गर्भधराऽष्टमे मासि प्रसूतिका ।
उभयोरपि मरणं स्यात्सत्याचार्यः प्रभाषते ॥
अब्दे पञ्चदशे गर्भे प्रसवः षोडशेऽपि वा ।
दम्पत्योश्चैव नाशः स्यादेकस्मिन्नेकनाशनम् ॥
षोडशाब्दगता नारी भवेद्गर्भसमन्विता ।
अग्रतो म्रियते माता पश्चात्पुत्रो विनश्यति ॥

अथ तच्छान्तिः—दद्याद्गर्भवतीं छागीं वस्त्रालङ्कारभूषिताम् ।
पुंसवेन विधानेन संक्रमे शिवसन्निधौ ॥
गौरीं तु सम्यक् सम्पूज्य काञ्चनीं कांस्यभाजने ।
दासीं गर्भवतीं दद्याद्दैवज्ञाय च गोयुताम् ॥

उपनयनविवाहादिसंस्कारे आभ्युदयिकश्राद्धमावश्यकम् । तथाहि स्मृतिः-
'नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत् ।' इति ।
तच्च पित्रा तदन्येन वा कर्त्तव्यमिति । तथाहि—
'पिता कुर्यात्तदन्यो वा तस्याभावे तु तत्क्रमात् ।' इति ।

तत्र क्रममाह । कात्यायनः—

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मणि ।
पिण्डानोद्वाहनात्तेषान्तस्याभावे तु तत्क्रमात् ॥ इति ।

पिण्डानिति पिण्डपदं श्राद्धोपलक्षकम् । आभ्युदयिके पिण्डरहितत्वात्पिण्डान् आ उद्वाहनाद् इत्यत्र गुणे कृते पिण्डानोद्वाहनादिति सिद्ध्यति, उद्वाहनं विवाहः आविवाहाद्विवाहपर्यन्तमिति यावत्, तस्याभावे माणवकपितुरभावे, अभावोऽत्र विनाशरूपः । तत्क्रमात् माणवकादिसंस्कार्यक्रमादित्यर्थः । तथा च पितृकर्तृके आभ्युदयिके जीवति पितरि तत्प्रतिनिधिकृते वा संस्कार्यपितामहादि तिसृणां पितामहादित्रयाणां पितृमातामहादित्रयाणामेव श्राद्धम् । संस्कार्यपितरि मृते तु आभ्युदयिके संस्कार्यमाणवकादिमात्रादीनां पित्रादीनां संस्कार्यमाणवकादिमातामहादीनां श्राद्धमिति पर्यवसितम् । तत्रापि यो

---

(१) पौगण्डं दशमावधि । इति ।

यो जीवति तं तं परित्यज्य तदूर्ध्वन्तेन श्राद्धं कर्तव्यम्। अत्र तस्याभावे संस्कार्यपितुरभावे, न तु तस्मिन्प्रमीते तद्वदेव कार्यमिति द्वैतपरिशिष्टे। तस्मिन्प्रमीते पितरि प्रमीते, तद्वदेव पितृवदेव, अस्य न त्विति पूर्वेणान्वयः। स्मृतिः—

मातृश्राद्धं तु पूर्वं स्यात्पितॄणान्तदनन्तरम्।
ततो मातामहादीनां वृद्धौ श्राद्धत्रयं स्मृतम्॥

मातृश्राद्धं मात्रादित्रयश्राद्धम्, एवमग्रेऽपि। तथा च प्रथमं मातृपितामहीप्रपितामहीनां, ततः पित्रादित्रयाणां, ततो मातामहादित्रयाणामिति क्रमेण श्राद्धं कर्तव्यमिति भावः।

अर्घे गन्धादिदाने च अवनेजनपिण्डयोः।
प्रत्यवनेजने सूत्रे ये चात्रं षट्सु योजयेत्॥

इति वचनात्सामगानां ये चात्रेति पाठः श्राद्धे विहितः, स चाभ्युदयिकादौ नास्ति। तथाहि, स्मृतिः—

प्रेतश्राद्धे स्त्रियः श्राद्धे वृद्धिश्राद्धे तथैव च।
तथा स्त्रीकर्तृके श्राद्धे ये चात्रं नाभियोजयेत्॥ इति।

प्रेतश्राद्धे प्रेतोद्देश्यकैकादशाहादिश्राद्धे, वृद्धिश्राद्धे आभ्युदयिके

अथ बलानां प्राथमिककेशकर्त्तनम्। राजमार्त्तण्डे—

जन्मादौ सममासि पुत्रविषये स्त्रीणान्तु तद्व्यत्यये
कार्य्यं चादिमकेशखण्डनमिदं सूर्ये च सौम्यायने।
आदित्यद्वयदस्रपौष्णशशभृद्विष्णुत्रयार्कत्रये
पूर्वाह्णे शुभवासरे जयतिथौ ह्यष्टम्यमावर्जिते॥ इति।

आदित्यद्वये पुनर्वसूपुष्ये, दस्र अश्विनी, पौष्णं रेवती, शशभृन्मृगशिरा, विष्णुत्रयं श्रवणादित्रयम्, (श्र०ध०श०)। अर्कत्रये हस्तत्रये (ह०चि०स्वा०)। अमा अमावास्या, यु(१)ग्मवर्षत्याग इति समाचारात्।

---

(१) अथ प्रसङ्गात् कर्णवेधमुहूर्त्तः—

हित्वैतांश्चैत्रपौषावमहरिशयनं जन्ममासं च रिक्तां,
युग्माब्दं जन्मताराम्ऋतुमुनिवसुभिः संमिते मास्यथो वा।
जन्माहात्सूर्यभूपैः परिमितसमये ज्ञेज्यशुक्रेन्दुवारे-
ऽथोजाब्दे विष्णुयुग्मादितिमृदुलघुभैः कर्णवेधः प्रशस्तः॥

सारार्थः—चैत्रपौषजन्ममासभिन्नमासेष्वपि हरिशयनभिन्नसमयः। तिथिक्षयचतुर्थीनवमीचतुर्दशीभिन्नतिथयः। प्रथमतृतीयपञ्चमप्रभृतिवर्षाणि। जन्ममासमारभ्य ततः षष्ठसप्ताष्टममासाः। जन्मदिनाद्द्वादशषोडशदिने। बुधगुरुशुक्रचन्द्रवासराः। श्रवणधनिष्ठापुनर्वसूमृगशिरोरेवतीचित्राऽनुराधाहस्ताश्विनीपुष्याभिजिन्नक्षत्राणि। एतानि जन्मनक्षत्रवर्जितानि कर्णवेधे शुभानि।

तत्र जन्ममासलक्षणमुक्तं पीयूषधारायाम्—

'आरभ्य जन्मदिवसं यावत् त्रिंशद्दिनं भवेत्। जन्ममासः स विज्ञेयो गर्हितः सर्वकर्मसु॥'

अथ(१)स्त्रीस्वभावः। तत्र मनुः--

अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्।
विषयेषु च संसक्त्यः संस्थाप्यात्मानमात्मना॥

संसक्त्यः प्रसक्ताभवन्त्यः। नारदः--

स्वातन्त्र्याद्धि प्रणश्यन्ति कुले जाता अपि स्त्रियः।
अस्वातन्त्र्यं यतस्तासां प्रजापतिरकल्पयत्॥

स्वातन्त्र्यं स्वेच्छया गमनाचारादिकर्तृत्वं, कुले सत्कुले। मनुः--

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या प्रयत्नतः।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः॥
इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम्।
यतन्ते रक्षितुं भार्यां भर्त्तारो दुर्बला अपि॥

मनुः--स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च।
स्वधर्म्मेण प्रयत्नेन जायां रक्षन् हि रक्षति॥
स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः।
तेन नारद! नारीणां सतीत्वमुपजायते॥

याज्ञवल्क्यः--रक्षेत्कन्यां पिता विन्नां पतिः पुत्राश्च वार्द्धके।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियः॥

कन्यां कुमारीं, विन्नां विवाहितां, तेषां पुत्रादीनामभावे इत्यनेनास्य सम्बन्धः। हारीतः--

जीविते जारजः कुण्डो मृते भर्त्तरि गोलकः।
तस्माद्रेतोपघाताच्च जायां रक्षेत्प्रयत्नतः॥

जीविते इत्यस्य भर्त्तरीत्यग्रिमेणान्वयः। जारः पतिभिन्नः। 'जारस्तूपपतिः समौ'इत्यमरः। मृते भर्त्तरीति जारज इति पूर्वेणान्वयः, रेतोपघातात्, परपुरुषवीर्यजनितवर्णसंकरदोषात्।

---

अथ कर्णवेधावश्यकतोक्ता तत्रैव—

कर्णरन्ध्रे रवेश्छाया न विशेदग्रजन्मनः। तं दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुरातनाः॥

तथा च शालङ्कायनः—

अविद्धकर्णैर्यद्भुक्तं लम्बकर्णैस्तथैव च। दग्धकर्णैश्च यद्भुक्तं तद्वै रक्षांसि गच्छति॥

(१)लिङ्गपुराणे-पिता माता च पुत्राश्च पौत्राः श्वशुर एव च।
एते न बान्धवाः स्त्रीणां भर्त्ता बन्धुः परा गतिः॥

स्त्रीणां माता पिता बन्धुः सखा मित्रं च बान्धवाः। भर्त्ता एव न सन्देहस्तथाऽप्यासदमायया॥
कृत्वाऽपि सुमहत्पापं या भर्त्तुः प्रेमसंयुता। प्राप्नुयात्परमं स्वर्गं नरकं च विपर्ययात्॥
स्वामिसेवां परित्यज्य कृतं देवार्चनव्रतम्। सकलं क्षयमेत्याशु चान्ते च नरकं ध्रुवम्॥

शिवपुराणे—स्त्रीणां तु भर्तृशुश्रूषा धर्मो नान्यः कदाचन।
ममार्चनं च कल्याणि! नियोगो भर्त्तुरस्ति चेत्॥

या नारी भर्तृशुश्रूषां विहाय व्रततत्परा। सा नारी नरकं याति नात्र कार्या विचारणा॥

बृहस्पतिः—अप्रयच्छन् पिता काले पतिश्चानुपयन्नृतौ ।
पुत्रश्चाभक्तदो मातुर्गर्ह्यदण्ड्याश्च धर्मतः ।

अप्रयच्छन् कन्यादानमकुर्वन्, काले दशवर्षाभ्यन्तरे, अनुपयन् मैथुनमकुर्वन्, ऋतौ रजोयोगानन्तरचतुर्थादिदिने, अभक्तदः भरणमकुर्वन् ।

नैता रूपं प्रतीच्छन्ते नैता वयसि संस्थितिम् ।
न रूपं रूपवन्तं वा पुमांसश्चापि भुञ्जते ॥

रामायणे-नैवाङ्गनानान्दयितो नापि द्वेष्योऽस्ति कश्चन ।
सर्वमेवावलम्बन्ते लता गहनजा इव ॥

अङ्गनानां स्त्रीणां, दयितः प्रियः । तथा च वयोरूपाद्यपेक्षा नास्त्येव स्त्रियाः । किन्तु पुरुषमात्रस्यापेक्षेति भावः । दक्षः—

साशङ्का बालभावे तु यौवनेऽभिमुखी भवेत् ।
तृणवन्मन्यते ना वृद्धभावे स्वकं पतिम् ॥

वृद्धभावे वार्द्धकावस्थायाम् ।

स्वकाम्ये वर्त्तमाना सा स्नेहान्न च निवारिता ।
अपथ्याऽभिभवेत्पश्चाद्यथा व्याधिरुपेक्षितः ॥

स्वकाम्ये स्वेच्छायां, सा स्त्री, अपथ्या दुःखदायिनी ।

तथा च प्रथमं स्वच्छन्दचारिणी चेत्तदा पश्चाद्दुःखदायिनी भवतीति तात्पर्यम् । महाभारते—

कुलीना रूपवत्यश्च नाथवत्यश्च योषितः ।
मर्यादासु न तिष्ठन्ति दोषश्च स्त्रीषु नारद ! ॥

नारदेति सम्बोधनम् ।

अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च ।
मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु ॥
अलाभात्पुरुषाणां च भयात्परिजनस्य च ।
वधबन्धभयात्, नैव स्वयं गुप्त्या (प्ताः) भवन्ति ताः ॥

भयादिभिरेव रक्षिता भवन्ति, न स्वभावाद् इति भावः । तथा च—

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकस्सर्वभूतानां न पुंसां वामलोचना ॥

आपगा नद्यः, अन्तको यमः, वामलोचना स्त्री । मनुः—

एवं स्वभावं ज्ञात्वाऽऽसां प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति ॥ स्त्रिया इति शेषः ।

तस्मात् स्त्री अस्वतन्त्रैव कर्त्तव्या, स्वातन्त्र्ये बहुदोषस्य पूर्वमभिहितत्वात् ।

अथ तीर्थविधिः, महाभारते—

बहूपकरणा यज्ञा नानासम्भारविस्तराः ।
प्राप्यन्ते पार्थिवैरेव समृद्धैर्वा नरैः क्वचित् ॥

नार्थन्यूनैरवगणैरेकात्मभिरसंहतैः ॥

अवगणैः सहायशून्यैः । एकात्मभिः स्त्रीरहितैः । तथा च पत्नीरहितेन न वशिष्टफलं प्राप्यत इति भावः । तत्रैव तीर्थाभिगमनात्पुण्यं यज्ञैरपि विशेष्यम्। ब्रह्मपुराणे—

गङ्गादितीर्थेषु वसन्ति मत्स्या देवालये पक्षिगणाश्च सन्ति ।
भावोज्झितास्ते न फलं लभन्ते तीर्थाच्च देवायतनाच्च मुख्यात् ॥
भावन्ततो हृत्कमले निधाय तीर्थानि सेवेत समाहितात्मा ॥

गङ्गादौ भावनयैव फलमिति तात्पर्यम् ।

गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम् ।
नरयाने तदर्द्धं स्यात्पद्भ्यां तच्च चतुर्गुणम् ॥

पद्भ्यामिति उपानहादिव्यतिरेकेण सातिशयं तीर्थफलं भवति, न तु तत्परिधाने दोषो निषेधाश्रवणात् । मिताद्वरास्वरसोऽप्येवम् ।

यत्त्वर्द्धं हरति पादुकेति पठन्ति तन्निबन्धकृद्भिरनादरणादनाकरमिति निर्णीयते, एवं च—

वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च ।
शरीरत्राणकामस्तु सोपानत्कः सदा व्रजेत् ॥

इति विष्णुपुराणीयवचनेन तीर्थयात्रायामपि उपानत्परिधानमनिषिद्धमावश्यकमिति । तीर्थचिन्तामणौ तीर्थप्राप्तौ तन्निमित्तकश्राद्धमर्घावाहनवर्ज्जितं कर्तव्यमाह देवीपुराणे—

'श्राद्धं च तत्र कर्त्तव्यमर्घावाहनवर्जिम् ।'

तथा—अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः ॥
प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणम् ॥ इति ।

तत्रेति निमित्तसप्तमी तन्निमित्तकश्राद्धमित्यर्थः । अकालेऽपि निषिद्धकालेऽपि । तथा च तीर्थप्राप्तौ विहिततिथ्यादिविचारो न कर्त्तव्य इति भावः । सायाह्नादौ तीर्थप्राप्तौ उत्तरदिने तीर्थश्राद्धं कुर्यात्, प्राप्त्युत्तरविहितमुहूर्ते एव तीर्थश्राद्धविधानात् । तीर्थोपवासः काम्यः, न त्वावश्यकः 'त्रिरात्रमुषित्वा सर्वपापेभ्यो मुच्यते' इति देवलवचनात्फलश्रवणात् । मुण्डनञ्च प्रयागावच्छिन्नगङ्गायामेव नान्यत्र 'गङ्गायां भास्करक्षेत्रे' इत्यादि वर्ज्जयित्वा 'गयाङ्गङ्गाम्' इत्यादि वचनानामविगीतशिष्टाचारविषयत्वात् ।

अथ प्रयागविधिः, पद्मपुराणे—

पश्चिमाभिमुखी गङ्गा कालिंद्या सह सङ्गता ।
हन्ति कल्पशतं पापं सा माघे नृप ! दुर्लभा ॥
अमृतं कथ्यते राजन् ! सा वेणी भुवि कीर्त्तिता ।
तस्यां माघे मुहूर्त्तन्तु देवानामपि दुर्लभम् ।

पश्चिमाभिमुखी प्रयागे वटशाखादौ, क्वचित् कालिन्द्या सह सङ्गता तु प्रयागे, तत्रैव—

पृथिव्यां यानि तीर्थानि पुर्यः सन्तीह याः पुनः ।
स्नातुमायान्ति ता वेण्यां माघे मासि नराधिप ! ॥
सर्वतीर्थानि कृष्णानि पापिनां सङ्गदोषतः
भवन्ति शुक्लवर्णानि प्रयागे माघमज्जनात् ।

माघस्नानमन्त्रस्तु—
मकरस्थे रवौ माघे गोविन्दाच्युत ! माधव ! ।
स्नानेनानेन देवेश ! यथोक्तफलदो भव ॥ इति ।

तथा—त्रीणि कुण्डानि राजेन्द्र ! तेषां मध्ये तु जाह्नवी ।
प्रयागस्य प्रवेशेन पापं नश्यति तत्क्षणात् ॥

त्रीणीति एकं प्रयागनगरे, द्वितीयं प्रतिष्ठाननगरे ( झूँसीति भाषया प्रसिद्धम् ) तृतीयं यमुनादक्षिणे (१) ।

प्रयागे वपनं कुर्याद् गयायां पिण्डपातनम् ।
दानं दद्यात्कुरुक्षेत्रे वाराणस्यां तनुं त्यजेत् ॥
किं गयापिण्डदानेन काश्यां वा मरणेन किम् ।
किं कुरुक्षेत्रदानेन प्रयागे मुण्डनं यदि ॥ इति ॥
केशानां यावती संख्या छिन्नानां जाह्नवीजले ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
यावन्ति नखलोमानि वायुना प्रेरितानि वै ।
पतन्ति जाह्नवीतोये नराणां पुण्यकर्मणाम् ॥
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ।

अत्र (२) स्त्रिया अपि समूलसर्वकेशमुण्डनमेव । न च—
सर्वान्केशान् समुद्धृत्य च्छेदयेदङ्गुलिद्वयम् ।
एवमेव हि नारीणां मुण्डमुण्डनमादिशेत् ॥

इति प्रायश्चित्तप्रकरणे श्रुतस्य आकांक्षातौल्यात्तद्वयङ्गुलकेशकर्त्तनमेव प्रयोगेऽप्युचितमिति वाच्यम् ?

केशमूलान्युपाश्रित्य सर्वपापानि देहिनाम् ।
तिष्ठन्ति तीर्थस्नानेन तस्मात्तां वापयेत्तु वै ॥

इत्यादिना तीर्थे समूलकेशवपनस्यैव विशिष्य विहितत्वात् । एतच्च मुण्डनं स्नाननित्यकर्मादि कृत्वा सङ्कल्प्य कर्त्तव्यम् ।

---

( १ ) कूर्मपुराणे—
उत्तरे यमुनातीरे प्रयागस्य च दक्षिणे । ऋणप्रमोचनं नाम तीर्थं तु परमं स्मृतम् ॥

( १ ) साधवाया-इत्यर्थः । विधवानां केशच्छेदनमतीर्थेऽपि समये कर्त्तव्यमेवेति विधवाधर्मे द्रष्टव्यम् ।

सङ्कल्पस्तु ओं अद्येत्यादि छेदनीययावल्लोमसमसंख्यबहुवर्षसहस्रावच्छिन्नस्वर्गलोकमहितत्वकामो गङ्गायां वपनमहं करिष्ये इति सङ्कल्प्य वपेत्।

ततः श्राद्धाधिकारिणा तीर्थप्राप्तिनिमित्तकपार्वणं कार्यम्। तदसम्पत्तौ षट्पुरुषपिण्डदानमपि कर्त्तव्यम्। तदुत्तरदिने ऋणमोचनतीर्थे स्नायात्। ओं अद्येत्यादि सकलर्णविमुक्तिस्वर्गलोकावाप्त्यमृतत्वकामः ऋणमोचतीर्थे स्नानमहं करिष्ये। ओं अद्येत्यादि सर्वपापविमुक्तिपूर्वकस्वर्गगमनकामोऽद्यादिमाघे ऽयहं प्रातःस्नानमहं करिष्ये।

प्रयागपश्चिमे कम्बलाश्वतरसमीपे यमुनोत्तरकूले यमुनास्नाने--

ओं अद्येत्यादि सर्वपापविमुक्तिकामः कम्बलाश्वतरसमीपे यमुनायां स्नानमहङ्करिष्ये इति सङ्कल्पः। स्नानानन्तरं तर्पणं तत्रापि, अत्र जलपानेऽप्येतदेव फलम्। अत्रैव महादेवदर्शनम्।

ततो दशाश्वमेधिकस्थलं गच्छेत्। ओं अद्येत्यादि अश्वमेधजन्यफलसमफलप्राप्त्याढ्यत्वरूपवत्वदत्तत्वदातृत्वधार्मिकत्वभवनकामो दशाश्वमेधिकतीर्थस्नानमहङ्करिष्ये इति सङ्कल्पः।

ततः स्नानतर्पणे कुर्यात्। प्रयागे हेमशृङ्गिसवत्सगोदाने गोब्राह्मणौ सम्पूज्य ओं अद्येत्यादि गङ्गायमुनासङ्गमे एतद्गोवत्सोभयरोमसमसंख्यकवर्षसहस्रावच्छिन्नस्वर्गलोकमहितत्वनरकादर्शनोत्तराक्षयसकलहर्षबहुदारपुत्रभृत्यवर्गबहुविधघोरमहापातकसंक्रमपरित्राणकाम इमां स्वर्णशृङ्गीं रौप्यखुरां चेलकण्ठीं पयस्विनीं कपिलां गां रुद्रदैवतामित्यादि। ततो दक्षिणा।

तीर्थे न प्रतिगृह्णीयात्पुण्येष्वायतनेषु च।
निमित्तेषु च सर्वेषु अप्रमत्तो भवेद्द्विजः॥

निमित्तेषु संक्रान्त्यादिषु अप्रमत्तः प्रमादशून्यः।

जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात्।
परस्त्रीभिर्मनो दग्धं कथं सिद्धिर्वरानने!॥

अतो जिह्वाहस्तमनश्चक्षुषां शुद्धौ तीर्थफलमन्यथा नेति।

अथ गयाविधिः (१)। तत्राविभक्तानां मध्ये ज्येष्ठस्य तदाज्ञया कनिष्ठस्यापि श्राद्धेऽधिकारः। विभक्तानान्तु सर्वेषामेवाधिकारः।

---

(१) गरुडपुराणे—तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम्।
अब्दमध्ये न कुर्वीत मातापितृविपत्तिषु॥

तथा च भविष्ये—'गयाश्राद्धं पितॄणान्तु पूर्णे त्वब्दे प्रशस्यते।'
किन्तु द्वादशाहे सपिण्डीकरणे कृते वर्षाभ्यन्तरेऽपि गयाश्राद्धकरणे न दोषः। पूर्वं वर्षान्ते बहुधा सपिण्डीकरणकरणादुपर्युक्तवचने तन्निषेधकथनं ज्ञेयम्'।
तत्र यद्यपि सदैव श्राद्धं प्रशस्तमेव तथाऽपि विशेषफलजनकसमय उक्तो वायुपुराणे—
मीने मेषे स्थिते सूर्ये कन्यायां कार्मुके घटे। नारद! त्रिषु लोकेषु गयाश्राद्धं सुदुर्लभम्॥

तत्र नारदः—भ्रातृणामविभक्तानामेको धर्मः प्रवर्त्तते।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्॥ इति।
एवमेव पार्वणेऽपि। एकोद्दिष्टे तु सर्वेषामेव पृथगधिकारः। द्वैतपरिशिष्टे तु-
एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः।
तेषां वै समवेतानां यद्येकोऽपि गयां व्रजेत्॥

इति वचने समवेतानामविभक्तानामिति व्याख्याय गयाश्राद्धे अविभक्तानामपि पृथगधिकारमाहुस्ते भ्रान्ताः। 'भ्रातृणामविभक्तानाम्' इत्यादि नारदवाक्यबलाद्बाधसापेक्षत्रिध्यापत्तेः। किञ्च समवेतानामित्यस्य तदर्थकत्वे मानाभावान्मिलितानामित्यस्यैव तदर्थकत्वाल्लिखितवचनादेव संसर्गानन्तरं न पृथगधिकारो द्रष्टव्य इति गयाश्राद्धे कालानियमः। तथा हि वायव्ये—
गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः॥
न त्यजेच्च गयाश्राद्धं सिंहस्थे च बृहस्पतौ॥

अत्रार्घावाहनवर्जितं श्राद्धम्। तथाहि—
पायसेन गयायां च सक्तुना पिण्डकेन वा।
चरुणा तण्डुलाद्यैर्वा पिण्डदानं विधीयते॥

श्राद्धासम्पत्तौ पिण्डमात्रमपि दद्यात्।
पिण्डदानं ततः शस्तं पितृणाञ्चातिदुर्लभम्।
विलम्बो नैव कर्त्तव्यो नैव विघ्नं समाचरेत्॥ इति स्मृतेः।

अत्र पतितानामसंस्कृतानामपि श्राद्धम्। तथा हि गारुडे—
ब्रह्महत्यां सुरापानं स्तेयं गुर्वङ्गनागमः।
पापं तत्संगमं सर्वं गयाश्राद्धाद्विनश्यति॥
असंस्कृता मृता ये च पशुचौरहताश्च ये।
सर्पदष्टा गयाश्राद्धान्मुक्ताः स्वर्गं व्रजन्ति ते॥

अत्र ब्रह्महत्येत्यादेर्यमुद्दिश्य गयाश्राद्धं क्रियते तस्य महापातकमपि नश्यति इति तात्पर्यम्। असंस्कृता इति ते हि गयाश्राद्धात्सुगतयो भवन्तीति तात्पर्यमिति तीर्थचिन्तामणिः। सम्वँत्सरानन्तरं पतितस्वर्गकामनया गयाश्राद्धम्। तथा हि ब्रह्मपुराणे—
क्रियते पतितानान्तु गते सम्वँत्सरे क्वचित्।
देशधर्मप्रमाणत्वाद् गयाकूपेषु बन्धुभिः॥

फलमाह मात्स्ये—
पितृतीर्थं गया नाम सर्वतीर्थवरं स्मृतम्।

---

तथा पिण्डदानद्रव्याणि—
पायसेनाथ चरुणा सक्तुना पिष्टकेन वा। तण्डुलैः फलमूलाद्यैर्गयायां पिण्डपातनम्॥
तिलकल्केन खण्डेन गुड़ेन सघृतेन च। केवलेनैव दध्ना वा अन्नेन मधुनाऽथ वा।
पिण्याकं सघृतं खण्डं पितृभ्योऽक्षयमित्युत॥

यत्रास्ते देवदेवेशः स्वयमेव पितामहः ॥
यत्रैषा पितृभिर्गीता गाथा भागमभीप्सुभिः ।
'एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ।'

गारुडे--ब्रह्मज्ञानं गयाश्राद्धं गोमहे मरणं तथा ।
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥
सकृद्गयाऽभिगमनं सकृत्पिण्डप्रपातनम् ।
दुर्लभं किम्पुनर्नित्यमस्मिन्नेव व्यवस्थितः ॥ इति ।

अपुत्रं विशालराजानं प्रत्याह वाराहे--
राजन्(१)पितॄँस्तर्पय पुत्रहेतोर्गत्वा गयायां विधिवच्च पिण्डैः ।
ध्रुवं सुतस्ते भविता नृवीर ! सहस्रदाता सकलक्षितीशः ॥

अत्र महापातकिनोऽपि श्राद्धोद्देश्यस्य गयाश्राद्धेन सद्गतिर्भवति कर्तृपुत्रकामत्वे तस्य पुत्रोऽपि भवतीत्यर्थ इति तीर्थचिन्तामणिः । गारुडे--
गयायां पिण्डदानेन यत्फलं लभते नरः ।
न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि ॥ इति ब्रह्मवाक्यम् ।

बृहस्पतिः--काङ्क्षन्ति पितरः पुत्रान्नरकाद् भयभीरवः ।
गयां यास्यति यः पुत्रः सोऽस्मान्संतारयिष्यति ॥
गयायां धर्मपृष्ठे च सदसि ब्रह्मणस्तथा ।
गयाशीर्षेऽक्षयवटे पितृदत्तमथाक्षयम् ॥
ब्रह्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च ।
दृष्ट्वैतानि पितॄंश्चात्र वंशान् विंशतिमुद्धरेत् ।

वायव्ये--'महाकल्पकृतं पापं गयायां च विनश्यति' ।

महाभारते पुलस्त्ययात्रायाम्--
ततो गयां समासाद्य ब्रह्मचारी जितेन्द्रियः ।
अश्वमेधमवाप्नोति गमनादेव भारत ! ॥
यत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः ।
यत्र दत्तं पितृभ्यस्तु भवत्यक्षयमित्युत ॥

तथा--शुक्लकृष्णावुभौ पक्षौ गयायां यो वसेन्नृप ! ।
पुनात्यासप्तमं तत्र कुलान्यत्र न संशयः ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
तत्तारयति सन्तप्तान् दशपूर्वान् दशावरान् ॥

अवरान् अधःस्थान् पुरुषानिति शेषः । अत्र पितुः पृथगेव मात्रादिश्राद्धम् । तथा हि वायव्ये--

---

(१) मत्स्यपुराणे १५ अ० ४० श्लो० पितॄन् प्रीणाति यो भक्त्या ते पुनः प्रीणयन्ति तम्। यच्छन्ति पितरः पुष्टिं स्वर्गारोग्यं प्रजाफलम् ॥ देवकार्यादपि पुनः पितृकार्यं विशिष्यते ॥

अष्टकासु च वृद्धौ च गयायां च क्षयाहनि ।
मातुः श्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सह ॥

वृद्धौ आभ्युदयिके, क्षयाहनि वार्षिके । तथा चैतच्चतुष्टये पृथगेव, एतद्भिन्ने सर्वकर्मणि पार्वणादौ न मातॄणां पृथक् श्राद्धकरणम् । पितृश्राद्धेनैव तच्छ्राद्धसिद्धेरिति भावः । स्मृतिः—

ब्रह्मणा प्रथितो विष्णुः फल्गुको ह्यभवत्पुरा ।
दक्षिणाग्नौ हुतं नूनं तद्भवं फल्गुतीर्थकम् ॥
तीर्थानि यानि सर्वाणि भुवनेष्वखिलेष्वपि ।
तानि स्नातुं समायान्ति फल्गुतीर्थं सुरैः सह ॥
गङ्गा पादोदकं विष्णोः फल्गुर्ह्यादि गदाधरः ।
इयं हि रुद्ररूपेण तस्माद् गङ्गाऽधिकं विदुः ॥
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ।
नासौ तत्फलमाप्नोति फल्गुतीर्थे यदाप्यते ॥
फल्गुतीर्थे विष्णुजले करोति स्नानमादृतः ।
पितॄणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये ॥

तथा—फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ।
आत्मानं पितृभिः सार्द्धं यन्नयेद्वैष्णवं पदम् ॥

अथ वाराणसी ।

ब्रह्मपुराणे—वरणा चाप्यसिश्चैव द्वे नद्यौ सुरवल्लभ ।
अन्तराले तयोः क्षेत्रं भूमावपि विशेन्न तत् ॥
पञ्चकोशप्रमाणन्तत्क्षेत्रं दत्तं मया तव ॥

एतेन असीवरणयोर्म्मध्यं वाराणसीक्षेत्रमिति नियमः । असीबाह्यस्य वाराणसीक्षेत्रत्वाभावः सिद्धः ।

(१) द्वियोजनन्तु तत्क्षेत्रं पूर्वपश्चिमतः स्थितम् ।
अर्द्धयोजनविस्तीर्णं दक्षिणोत्तरतः स्मृतम् ॥

योजनं चतुःक्रोशम् । स्कान्दे—

ब्रह्मघ्नगोघ्नगुरुतल्पगभिन्नवृत्तन्यासापहारिकुहकादिनिषिद्धवृत्तिः ।
संसारभूतदृढपाशविमुक्तदेहो वाराणसीञ्च समुपैति हि योऽपि लोकः ॥

मात्स्ये—प्रयागादपि तीर्थाग्र्यादिदमेव महत्तरम् ।
अल्पायासेन चैवात्र मोक्षप्राप्तिः प्रजायते ॥

इदं वाराणसीक्षेत्रम् । लैङ्गे—

ब्रह्महा योऽभिगच्छेत्तु अविमुक्तं कदाचन ।
तस्य क्षेत्रस्य माहात्म्याद् ब्रह्महत्या निवर्तते ॥

अविमुक्तं वाराणसी । तथा हि मात्स्ये—

---

(१) स्याद्योजनं क्रोशचतुष्टयेन इति पाटीगणितोक्तत्वात् ।

विमुक्तन्न मया यस्मान्मोदयते न कदाचन ।
महत्क्षेत्रमिदं तस्मादविमुक्तमिदं स्मृतम् ॥
तथा--अज्ञानाज् ज्ञानतो वाऽपि स्त्रिया वा पुरुषेण वा ।
यत्किंचिदशुभं कर्म कृतं मानुषबुद्धिना ॥
अविमुक्तं प्रविष्टस्य तत्क्षणं भस्मसाद्भवेत् ।

अत्र वासफलमाह लैङ्गे—
सदा जयति यज्ञेन सदा दानं प्रयच्छति ।
सदा तपस्वी भवति ह्यविमुक्ते स्थितो नरः ॥
न सा गतिः कुरुक्षेत्रे गङ्गाद्वारे न पुष्करे ।
या गतिर्विहिता पुंसामविमुक्तनिवासिनाम् ॥
सर्वात्मता तपः सत्यं प्राणिनां नात्र संशयः ।
अविमुक्ते वसेद्यस्तु मम तुल्यो भवेन्नरः ॥
अविमुक्ते स्थितो नित्यं पांशुभिर्भस्मनेरितैः ।
स्पृष्ट्वा दुष्कृतकर्माणो यास्यन्ति परमां गतिम् ॥
स्वर्गापवर्गयोर्हेतुरेतत्तीर्थवरं भुवि ।
यस्त्वत्र पञ्चतां याति मोक्षं याति न संशयः ॥
जन्मान्तरसहस्रेण मुञ्चन्योगी यदाप्नुयात् ।
तमिहैव परं मोक्षं मरणादधिगच्छति ॥

पञ्चतां मरणम्, इहैव इह जन्मन्येव । अन्यच्च—
प्राणांस्त्यजन्ति ते त्वत्र प्राणिनस्तत्त्वतस्तथा ।
रुद्रत्वं ते समासाद्य मोदन्ते भवता सह ॥
अकामो वा सकामो वा अपि तिर्यग्गतोऽपि वा ।
अविमुक्ते त्यजन् प्राणान् मम लोके महीयते ॥ इतीश्वरोक्तिः ।
लैङ्गे--अविमुक्ते स्थिता रुद्रा भक्तानां प्रतिदायकाः ।
कर्णजापं प्रयच्छन्ति तिमिचण्डेश्वरादयः ॥

कर्णजापस्तारकब्रह्मोपदेशः । अत्र मरणस्य यद्यपि परममुक्तिसायुज्यसारूप्यसालोक्यानि फलत्वेन श्रूयन्ते । तथाऽपि शुचीनां परमात्मभक्तानां तदर्पितकर्मणां परममुक्तिस्तथा अपकृष्टानाम् अग्निप्रविष्टानां सायुज्यं, तिर्यक्प्रभृतीनामत्यन्तपापीयसां च सारूप्यम्, ततोऽप्यधमानां पतितादीनां सालोक्यमिति द्रष्टव्यमिति तीर्थचिन्तामणिः । लैङ्गे—
नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी ।
ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम् ॥
तत्रैव—दशानामश्वमेधानां यज्ञानां यत्फलं स्मृतम् ।
तदवाप्नोति धर्मात्मा स्नात्वा तत्र वरानने ! ॥
तत्रैव--स्वल्पमप्यत्र यो दद्यात् ब्राह्मणे वेदपारगे ।

शुभां गतिमवाप्नोति अग्निवच्चैव दीप्यते ॥
दशसौवर्णिकं पुष्पं यो विमुक्ते प्रयच्छति ।
अग्निहोत्रफलं धूपगन्धदाने शृणु प्रिये ! ॥
भूमिदानेन तुल्यं च गोप्रदानफलं स्मृतम् ।

दशसौवर्णिकेत्यादि एकपुष्पप्रदाने दशसुवर्णदानजन्यफलमित्यर्थः ।

तथा--किमर्थं बहुनोक्तेन यद्दानं क्रियते नरैः ।
धर्मकामार्थमुद्दिश्य तदनन्तफलं लभेत् ॥
उपवासं तु यः कृत्वा विप्रान् सन्तर्पयेन्नरः ।
स सौत्रामणियज्ञस्य फलमाप्नोति निश्चितम् ॥

ब्राह्मे--तत्र दीपप्रदानेन ज्ञानवत्स्फुरतीन्द्रियम् ।

तत्रेति काश्यामित्यर्थः । तथा—
एकाहमुपवासं ये करिष्यन्ति यशस्विनि ! ।
फलं वर्षशतस्येह लभते तत्परायणः ॥

वर्षशतस्योपोषितस्येत्यर्थः ।
अविमुक्ते महादेवमर्चयन्ति स्मरन्ति ये ।
सर्वपापविमुक्तास्ते सन्तिष्ठन्त्यजरामराः ॥
अविमुक्तं समासाद्य लिङ्गमर्चयते नरः ।
कल्पकोटिशतैश्चापि तस्य नास्ति पुनर्भवः ॥

पुनर्भवः पुनर्जन्म । कापिलह्रदमुपक्रम्य ईश्वर आह--
तत्रापि स्वयमेवाहं वृषध्वज इति स्मृतः ।
कपिला ह्रदतीर्थेऽस्मिन् स्नात्वा संयतमानसः ॥
वृषध्वजमिमं दृष्ट्वा सर्वयज्ञफलं लभेत् ।
स्वर्लोकतां मृतश्चापि अर्चयित्वा तु मामिह ॥
लभते देहभेदेन गणत्वञ्चापि दुर्लभम् ।

कापिलह्रदः काश्यामुत्तरे पञ्चक्रोशपथि, पञ्चक्रोशेऽनेके देवा अनन्तफलदायिनो विस्तरभयान्नेह तेषां फलान्यभिहितानि, पञ्चक्रोशस्तु त्रिपञ्चसप्तदिनेन वा यथाशक्ति कुर्यात् । गङ्गास्नाने विष्णुपुराणे—
स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति ।
अपूर्वपुण्यावाप्तिस्तु सद्यो मैत्रेय ! जायते ।

भारते—स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः ! प्रयतात्मनाम् ॥
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥

व्युष्टिः पुण्योपचयः ।
अपहत्य तमस्तीव्रं यथा भात्युदये रविः ।
तथाऽपहत्य पापानि भाति गङ्गाजलोक्षितः ॥
अनेकजन्मसम्भूतं पुंसां पापं प्रणश्यति ।

स्नानमात्रेण गङ्गायाः सद्यः स्यात्पुण्यभाजनम् ॥
महापातकसंयुक्तो युक्तो वा सर्वपातकैः ।
गङ्गास्नानेन विधिना मुच्यते सर्वपातकैः ॥

महापातकं जन्मान्तरीयम् , न त्वैहिकम् , अन्यथा अनधिकारापत्तिः ।
आग्नेये—यो गृहे वर्त्तमानोऽपि त्वां स्नाने कीर्त्तयिष्यति ।
स यास्यति दिवं नित्यमित्याह वरुणस्त्विह (१) ॥

अथ पुरुषोत्तमक्षेत्रम् ।

तत्रास्ते भारते वर्षे दक्षिणोदधिसंस्थितः ।
औड्रदेश इति ख्यातः स्वर्गमोक्षप्रदायकः ॥
समुद्रस्योत्तरे तीरे तस्मिन्देशे द्विजोत्तमाः ! ।
आस्ते गुह्यं परं क्षेत्रं मुक्तिदं पापनाशनम् ॥
सर्वत्र बालुकाकीर्णं पवित्रं सर्वकामदम् ।
दशयोजनविस्तीर्णं क्षेत्रं परमदुर्लभम् ॥
वर्णानां ब्राह्मणो यद्वद्वैनतेयस्तु पक्षिणाम् ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ।
सत्यं सत्यं पुनः सत्यं क्षेत्रं तत्परमं महत् ॥
पुरुषाख्यं सकृद् दृष्ट्वा सागराम्भः सकृन्मतम् ।
ब्रह्मविद्यां सकृज् ज्ञात्वा गर्भवासो न विद्यते ॥

पुरुषाख्यं पुरुषोत्तमं जगन्नाथमिति यावत् ।

धन्यास्ते विबुधप्रख्या ये वसन्त्युत्कले वराः ।
तीर्थराजजले स्नात्वा पश्यन्ति पुरुषोत्तमम् ॥
स्वर्गे वसन्ति ते मर्त्या न तु ते राजसालये ॥

तीर्थराजः समुद्रः, राजसालये मनुष्यलोके । तथा—

दक्षिणस्योदधेस्तीरे न्यग्रोधो यत्र तिष्ठति ।
यस्तु कल्पे समुत्पन्ने महदुल्कानिबर्हणे ॥
विमाशान्नैवमस्येति स्वयं तत्रैवमास्थितः ।

---

(१) सनत्कुमारसंहितायाम्—

रथ्यान्तरे मूत्रपुरीषमध्ये चाण्डालवेश्मन्यथवा श्मशाने ।
कृतप्रयत्नोऽप्यकृतप्रयत्नो देहावसाने लभतेऽत्र मोक्षम् ॥

तीर्थान्तरे अन्तरिक्षादिमरणदोषोऽस्ति सोऽप्यत्र नास्ति । तदुक्तं पाद्मे—

भूमौ जलेऽन्तरिक्षे वा यत्र क्वापि मृतो द्विजः ।
ब्रह्मैकत्वमवाप्नोति काशीशक्तिरुपाहिता

नाप्यत्र दुर्मरणदोषोऽस्ति, तदुक्तं पद्मपुराणे—

सच्चग्रमात्रमपि नास्ति ममास्पदेऽस्मिन् स्थाने सुरैश्च विमृतस्य न यत्र मुक्तिः ॥
भूमौ जले वियति वा भुवि मध्यतो वा । सर्पाग्निदस्युपविभिर्निहतस्य जन्तोः ॥ इति शिववाक्यम् ।

दृष्टमात्रे वटे तस्मिन् छायामाक्रम्य वा सकृत ॥
ब्रह्महत्या प्रमुच्येत पापेष्वन्येषु का कथा ।
प्रदक्षिणं कृतं यैस्तु नमस्कारन्तु जन्तुभिः ॥
सर्वे विधूतपापास्ते गताः स्युः केशवालयम् ।

न्यग्रोधो वटः(१) भगवद्वचः—

इन्द्रद्युम्नसरो नाम तीर्थं यज्ञाङ्गसम्भवम् ।
यत्र स्नात्वा सकृल्लोकः शक्रलोकमवाप्यते ।
दापयिष्यति यः पिण्डांस्तटे तस्मिन् सरः शुभे ॥
कुलैकविंशमुद्धृत्य शक्रलोकं गमिष्यति । इति ।

तीर्थचिन्तामणौ—

मार्कण्डेयह्रदं गत्वा स्नात्वा चोदङ्मुखः शुचिः ।
निमज्जयेत् त्रींस्तु वारान् इमं मन्त्रमुदीरयेत् ॥
संसारसागरे मग्नं पापग्रस्तमचेतसम् ।
त्राहि मां भगनेत्रघ्न ! त्रिपुरारे ! नमोऽस्तु ते ॥
नमः शिवाय शान्ताय सर्वपापहराय च ।
स्नानं करोमि देवेश ! मम नश्यतु पातकम् ॥
नाभिमात्रे जले स्थित्वा विधिवद्देवताऋषीन् ।
तिलोदकेन मतिमान् पितॄनन्यांश्च तर्पयेत् ॥
मार्कण्डेयह्रदे चैव स्नात्वा दृष्ट्वा च शङ्करम् ।
दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥
दृष्ट्वा वटं वैनतेयं यः पश्येत्पुरुषोत्तमम् ।
सङ्कर्षणं सुभद्रां च स याति परमां गतिम् ॥
मार्कण्डेयवटं कृष्णं रौहिणेयं महोदधिम् ।
इन्द्रद्युम्नसरश्चैव पञ्चतीर्थविधिः स्मृतः ॥
यत्फलं सर्वदेवेषु सर्वयज्ञेषु यत्फलम् ।
तत्फलं समवाप्नोति नरः कृष्णं प्रगम्य च ।
किञ्चात्र बहुनोक्तेन महात्म्यं तस्य भो द्विजाः ? ।
दृष्ट्वा कृष्णं नरो भक्त्या मोक्षं प्राप्नेति दुर्लभम् ।
पापैर्विमुक्तः शुद्धात्मा कल्पकोटिसमुद्भवैः ॥
श्रिया परमया युक्तः सर्वैः समुदितो गुणैः ।
सर्वकामसमृद्धेन विमानेन सुवर्चसा ॥
त्रिसप्तकुलमुद्धृत्य नरो विष्णुपुरं व्रजेत् ।
ततः कल्पशतं यावद् भुक्तभोगान्मनोरमान् ॥
गन्धर्वाप्सरसैः सार्द्धं यथा विष्णुश्चतुर्भुजः ।

(१) 'न्यग्रोधो बहुपाद्वटः' इत्यमरः ।

तत्रैव—श्वेतगङ्गां नरः स्नात्वा यः पश्येच्छ्वेतमाधवम् ॥
मत्स्याख्यं माधवं चैव श्वेतद्वीपं स गच्छति ।

श्वेतोनाम राजा । तथा—

देवानृषीन्मनुष्यांश्च पितॄन् सन्तर्प्य यत्नतः ।
तिलोदकेन विधिना नामगोत्रविधानवित् ॥
स्नात्वैवं विधिवत्तत्र सोऽश्वमेधफलं लभेत् ।

अथ गङ्गामाहात्म्यम् ।

तत्र भारते—(१)ते देशास्ते जनपदास्ते शैलास्तेऽपि चाश्रमाः ।
येषां भागीरथीगङ्गा मध्ये याति सरिद्वरा ॥
पूर्वे वयसि कर्म्माणि कृत्वा पापानि ये नराः ।
शेषे गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम् ॥
तिष्ठेद्युगसहस्रन्तु पादेनैकेन यः पुमान् ।
मासमेकं तु गङ्गायां समौ स्यातां न वा समौ ॥

गङ्गायामिति तिष्ठेदिति शेषः । भविष्ये—

कृते तु सर्वतीर्थानि त्रेतायां पुष्करं वरम् ।
द्वापरे यज्ञमेवाहुर्दानमेकं कालौयुगे ॥

वरमिति सर्वत्र सम्बध्यते । ब्रह्मपुराणे—

कलौ तु सर्वतीर्थानि स्वं स्वं वीर्यं स्वभावतः ।
गङ्गायां प्रतिमुञ्चन्ति सा तु देवी न कुत्रचित् ॥

सा देवी गङ्गेत्यर्थः । स्कान्दे—

योऽसौ सर्वगतो विष्णुश्चित्स्वरूपो जनार्दनः ।
स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः ॥

---

(१) तिथितत्त्वे-

गङ्गां प्राप्य सरिच्छ्रेष्ठां कम्पन्ते पापसञ्चयाः । केशानाश्रित्य तिष्ठन्ति तस्मात्तांस्तत्र वापयेत ॥
गङ्गां प्राप्य सरिच्छेष्ठां मुण्डनं यो न कारयेत् । क्रिया तस्याक्रिया सर्वा तीर्थद्रोही भवेन्नरः ॥

भविष्ये—गच्छँस्तिष्ठन् स्वपन् ध्यायन् जाग्रद् भुञ्जन् श्वसन् वदन् ।
यः स्मरेत् सततं गङ्गां स च मुच्येत बन्धनात् ॥

तत्र त्रयोदशक्रियावर्जनं ब्रह्माण्डपुराणे—

गङ्गां पुण्यजलां प्राप्य त्रयोदश विवर्जयेत् । शौचमाचमनं सेकं निर्माल्यं मलघर्षणम् ॥
गात्रसंवाहनं क्रीडां प्रतिग्रहमथो रतिम् । अन्यतीर्थरतिं चैव अन्यतीर्थप्रशंसनम् ॥
वस्त्रत्यागमथाघातं सन्तारं च विशेषतः ॥

अथ गर्भतीरयोर्लक्षणम्—

भाद्रकृष्णचतुर्दश्यां यावदाक्रमते जलम् । तावद्गर्भं विजानीयात्तदूर्ध्वं तीरमुच्यते ॥
सार्धहस्तशतं यावद्गर्भतस्तीरमुच्यते ॥

गङ्गाम्भो जलम् ।

वर्ज्यं पर्युषितं तोयं वर्ज्यं पर्युषितं दलम् ।
अवर्ज्यं जाह्नवीतोयमवर्ज्यं तुलसीदलम् ॥

पूर्वदिनोद्धृतमुत्तरदिने पर्युषितं तोयं जलम्, दलं पत्रम्, अवर्ज्यमत्याज्यम् । तथा च गङ्गाजले पर्युषितत्वदोषो नास्तीति भावः । मात्स्ये—

तीर्थयात्राविधिं कृत्स्नमकुर्वाणोऽपि यो नरः ।
गङ्गातोयस्य माहात्म्यात्सोऽप्यत्र फलमाप्नुयात् ॥

भविष्ये—सर्वयज्ञतपोदानयोगस्वाध्यायकर्मभिः ।
यत्फलं लभते भक्त्या गङ्गातीरे निवासतः ॥
समातृपितृदाराणां कुलकोटिमनन्तकम् ।
गङ्गाभक्तिस्तारयति संसारार्णवतो ध्रुवम् ॥

भविष्ये—कन्यादानैस्तथाऽन्यत्र भूमिदानैश्च भक्तितः ।
अन्नदानैश्च गोदानैस्स्वर्णदानादिभिस्तथा ॥
वराश्वगजदानैश्च यत्पुण्यं परिकीर्तितम् ।
ततः शतगुणं पुण्यं गङ्गागण्डूषतो भवेत् ॥
चान्द्रायणसहस्राणां यत्फलं परिकीर्त्तितम् ।
ततोऽधिकफलं गङ्गातोयपानादवाप्यते ॥

स्कान्दे—गण्डूषमात्रपानेन अश्वमेधफलं लभेत् ।
स्वच्छन्नं यः पिबेदम्भस्तस्य मुक्तिः करे स्थिता ।
त्रिभिस्सारस्वतं तोयं सप्तभिस्त्वथ यामुनम् ।
नार्मदं दशभिर्मासैर्गङ्गा वर्षेण जीर्यति ॥

त्रिभिरित्यादिस्तृतीयान्तत्रयं मासैर्जीर्यतीत्यनेनान्वेति । महाभारते—

वाङ्मनःकर्मजैर्ग्रस्तः पापैरपि पुमानिह ।
वीक्ष्य गङ्गां भवेत्पूतस्तत्र मे नास्ति संशयः ॥
सप्तावरान् सप्तपरान् पितॄंश्चापि यमालयात् ।
पुमाँस्तारयते गङ्गां सम्यग्दृष्ट्वाऽवगाह्य च ॥
दर्शनात्स्पर्शनात्पानात्तथा गङ्गेति कीर्त्तनात् ।
पुण्यात्पुनाति पुरुषान् शतशोऽथ सहस्रशः ॥

भविष्ये—सहस्रयोजनस्थाश्च गङ्गां भक्त्या स्मरन्ति ये ।
गङ्गां गङ्गेति च ब्रूयुर्मुच्यन्तेऽपि च पातकात् ॥
ये स्मरन्ति च वै गङ्गां गङ्गाभक्तिपराश्च ये ।
तेऽप्यशेषैश्च पापैश्च मुच्यन्ते नात्र संशयः ॥

ब्रह्माण्डे— एकेन स्नानमात्रेण विधिना भक्तिमान्नरः ।
अश्वमेधफलं सद्यो गङ्गायां प्राप्नुयाद्ध्रुवम् ॥

तथा--अन्यस्थानकृतं पापं गङ्गातीरे विनश्यति ।
गङ्गास्थानकृतं पापं गङ्गास्नाने न नश्यति ॥
अत्र स्नाने इत्यनन्तरं नाञ् पदं, न तु स्नानेनेति तृतीयान्तम् ।
भविष्ये--
संक्रान्त्यां पक्षयोरन्ते ग्रहणे चन्द्रसूर्ययोः ।
गङ्गास्नातो नरः कामात् ब्रह्मणस्सदनं व्रजेत् ॥
ब्रह्माण्डे--
चन्द्रसूर्यग्रहे चैव योऽवगाहेत जाह्नवीम् ।
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम् ॥
गवाङ्कोटिसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
तत्फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे ॥
मात्स्ये--
कुरुक्षेत्रसमा गङ्गा यत्र कुत्रावगाहिता ।
कुरुक्षेत्राद्दशगुणा यत्र विन्ध्येन सङ्गता ॥
विन्ध्याच्छतगुणा प्रोक्ता काशीपुर्यान्तु जाह्नवी ।
विन्ध्यसंगता तु विन्ध्यवासिनीसमीपे । कर्णतीर्थे ।
तथा--
विन्ध्याच्छतगुणा प्रोक्ता यत्र पश्चिमवाहिनी ।
तस्मात्सहस्रगुणिता यत्र चोत्तरवाहिनी ॥
पश्चिमोत्तरवाहिनी तु प्रयागे वटेशादौ च ।
भविष्ये--
गंगाद्वारे कुशावर्त्ते स्नाने पुण्यफलं शृणु ।
सप्तानां राजसूयानां फलं स्यादश्वमेधजम् ॥

गङ्गायां सन्ध्यातर्पणयोः फलमाह--गङ्गायां शतसाहस्रीति गङ्गायामिति सन्ध्यादिकरणे इति शेषः, शतसाहस्रीति, तथा चान्यत्र सन्ध्यादिकरणफलं लक्षगुणफलं गङ्गायामित्यर्थः ।

विष्णुपुराणे--
दत्ताः पितृभ्यो यत्रापस्तनयैः श्रद्धयाऽन्वितैः ।
अक्षयन्तु प्रयच्छन्ति तृप्तिं मैत्रेय ! दुर्लभाम् ॥
यावन्तश्च तिला मर्त्यैर्गृहीताः पितृकर्मणि ।
तावद्वर्षसहस्राणि पितरः स्वर्गवासिनः ॥
पितरः पितृलोकवासिनः इति तीर्थचिन्तामणिः ।
भविष्ये--गङ्गातर्पणसुप्रीताः श्राद्धे पिण्डसुतर्पिताः ।
आरुह्य सहसा यान्ति ब्रह्मलोकं सनातनम् ॥

श्राद्धादिकं जलोपकण्ठे कर्त्तव्यम् ।

गङ्गान्तर्जले मरणे फलमाह, आग्नेये विष्णुवाक्यम्—

ये मुञ्चन्ति नराः प्रणान् तिष्ठन्तः सन्निधौ तत्र ।
ते मे लोकं गमिष्यन्ति पूज्यमाना दिवौकसाः ॥

तथा—

अर्द्धोदके तु जाह्नव्यां म्रियत्तेऽनशनेन यः ।
स न चैति पुनर्जन्म ब्रह्मसायुज्यमेति च ॥

अर्द्धोदकं चरणान्नाभिपर्यन्तमुदकम् ।

ब्रह्माण्डे—

या गतिर्योगयुक्तस्य सत्त्वस्थ सुमनीषिणः ।
सा गतिस्त्यजतः प्राणान् गङ्गायान्तु शरीरिणः ।
अनशनं गृहीत्वा यो गङ्गातीरे मृतो नरः ।
सद्य एव परं मोक्षं प्राप्नोति पितृभिः सह ॥
अत्र दूरे समीपे च सदृशं योजनद्वयम् ।
गङ्गायां मरणेनेह नात्रं कार्या विचारणा ॥
ज्ञानतोऽज्ञानतो वाऽपि कामतोऽकामतोऽपि वा ।
गङ्गायान्तु मृतो मर्त्यः स्वर्गं मोक्षं च विन्दति ॥

महाभारते-

तीर्थं च शौकरन्नाम महापुण्यं मुने ! शृणु ।
यस्मिन्नाविरभूत्पूर्वं वराहाकृतिरच्युतः ॥
शतमग्निचितां पुण्यं ज्योतिष्टोमद्वयस्य च ।
अग्निष्टोमसहस्रस्य फलमत्राप्नुयान्नरः ॥

अत्र निवासदिनदर्शनादिलघुगुरुत्वादिभेदेन फलभेदः ।

तथा—

तत्रैव ब्रह्मणस्तीर्थं ज्योतिष्टोमायुतस्य च
अश्वमेधत्रयस्यापि स्नातस्तत्र फलं लभेत् ॥

तथा—

गङ्गाद्वारे कुशावर्ते बिल्वके नीलपर्वते ।
तीर्थे कनखले स्नात्वा धूतपापो दिवं व्रजेत् ॥

काशीमभिधाय तत्रैव—

पवित्राख्यं ततस्तीर्थं सर्वतीर्थात्पवित्रकम् ।
द्वयोर्विश्वजितस्तत्र स्नानात्पुण्यं लभेन्नरः ॥
वेणीबाह्यन्ततस्तीर्थं सरयू यत्र संगता ।
सुपुण्या च महापुण्या स्वसा स्वद्रेव संगता ॥

हरेर्दक्षिणपादाब्जक्षालनत्वमवाप ह ।
वामपादोदकं विद्धि सरयूं मानसोद्भवाम् ॥
तीर्थे तत्रार्चयन् रुद्रं विष्णुर्विष्णुत्वमाप्नुयात् ।
पंचाश्वमेधफलदं स्नानन्तस्मिनघापहम् ॥

वेणीबाह्यं दर्दरीति प्रसिद्धम् ।

तत्रैव गाण्डकन्तीर्थं गण्डकी यत्र सङ्गता ।
गोसहस्रस्य दानं च तत्र स्नानेन सम्मतम् ॥
रामतीर्थं ततः पुण्यं वैकुण्ठो यत्र सन्निधौ ।
सोमतीर्थं ततः पुण्यं यत्राऽसौ मुद्गलो मुनिः ॥
चंपकाख्यं ततस्तीर्थं यत्र गङ्गोत्तरायणी ॥

तथा—

गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ।
स्नात्वैव ब्रह्मणो विष्णोः शिवस्य च पुरं व्रजेत् ॥

महाभारते—

गङ्गायास्त्वथ राजेन्द्र ! सागरस्य च सङ्गमे ।
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥

अश्वमेधं दशगुणं फलमिति शेष ॥

इति 'मिथिला' देशावयव 'भागलपुर' मण्डलान्तर्गत 'चयनपुर'
ग्रामनिवासिपगुलवाडमूलोत्पन्नसच्छ्रोत्रिकश्रीमानिकशर्मात्मज-
सत्तार्किकमहामहोपाध्याय श्रीमदमृतनाथशर्मकृत-
सारसमुच्चयार्णवे कृत्यसारसमुच्चयः समाप्तः ॥

॥ इति शम् ॥

श्रीगणेशाय नमः ।

# परिशिष्टम् ।

श्यामामुदारहृदयां सदयां प्रणम्य लम्बोदरं गुरुपदद्वयमादरेण ।
संगृह्य भूरिविषयानिह कृत्यसारे संयोज्यतेऽलसमुदे परिशिष्टरूपम् ॥

( १ ) वैशाखस्य मलमासत्वे रविव्रतं तत्रैव कर्त्तव्यं न तु शुद्धमासे, (पृ० ५ टिप्पण्याम् । ) तथोक्तं सूर्यब्जाहस्करे—
सूर्यव्रतं तु वैशाखे मलमासो यदा भवेत् । तदा तत्रैव कर्त्तव्यं वृषादित्ये न कारयेत् ॥

साम्बपुराणेऽपि—
अलिमेषगते भानौ भगवत्यर्कवासरे । शुक्लपक्षे सविधिवद् व्रतं साम्ब ! समाचरेत् ॥
धनुर्वृषगते भानौ यः कुर्यात् सवितुर्व्रतम् । सप्तजन्मनि कुष्ठी स्याद्दरिद्रश्चोपजायते ॥

मेषराशिः सूर्यस्योच्चभं, तत्र ग्रहस्यातिप्रसन्नचित्तत्वाद्रविव्रतमतिप्रशस्तम् । वृश्चिकस्य मित्रगृहत्वात्तत्र स्थितस्यापि सूर्यस्य मुदितत्वात्सौरमार्गशीर्षेऽपि प्रशस्तमेवोक्तम् । वृषराश्यधिपस्य शुक्रस्य सूर्यशत्रुभाच्छत्रुगृहे ग्रहस्य खिन्नत्वात् , खिन्नदशायां विशेषफलदातृत्वाभावाद् 'वृषादित्ये न कारयेत्' इत्युक्तम् । पौषचैत्रयोः स्वरूपेणैव शुभकर्मसु निन्दितत्वाद्धनुष्यपि निषेधः । सिंहराशेः सूर्यक्षेत्रत्वात्तत्रापि विशेषफलप्रदं रविव्रतमिति ।

( २ ) आषाढकृत्येऽम्बुवाचीलक्षणमुक्तं ( पृ० ९, टि० ) राजमार्त्तण्डे—
मृगशिरसि निवृत्ते रौद्रपादोऽम्बुवाची यदि भवति च पृथ्वी वर्जयेत् त्रीण्यहानि ।
यदि वपति कृषीकः क्षेत्रमासानु बीजं न भवति फलभागी दर्शिते कामयोगे ॥
रवौ रौद्राद्यपादस्थे भूमेः सञ्जायते रजः । तस्माद्दिनत्रयं यावद्बीजाधानं न कारयेत् ॥ इति ।

( ३ ) आषाढशुक्लद्वितीयायां श्रीजगन्नाथरथयात्रोत्सवो भवति । तत्र यद्युभयदिने द्वितीया तदा यस्मिन् दिने पुष्यनक्षत्रयोगस्तद्दिने, तथोक्तं निर्णयसिन्धौ—
आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता । तस्यां रथे समारोप्य रामं वै भद्रया सह ॥

उभयदिने नक्षत्रयोगस्य भावेऽभावे वा उदयव्यापिन्याम् उदये द्वितीया यदि मुहूर्त्ताल्पा तदा तद्दिने कर्मानर्हत्वात्पूर्वदिने एव रथयात्रोत्सवः कर्त्तव्य इति ।

( ४ ) श्रावणपूर्णिमायां ( पृ० ११ मूले ) ग्रहणसंक्रान्ती समुपस्थिते उपाकर्म श्रावणशुक्लपञ्चम्यामेव कर्त्तव्यम् । तथा चोक्तं राजमार्त्तण्डे—
यदि स्याच्छ्रवणं पर्व ग्रहसंक्रान्तिदूषितम् । स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य च ॥

तथा च स्मृतिमहार्णवे—
संक्रान्तिर्ग्रहणं वाऽपि पौर्णमास्यां यदा भवेत् । उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः ॥

अत्र वाजसनेयिभिरित्यनेन सामवेदिभिः श्रावणशुक्लपञ्चम्यामुपाकर्म न कर्त्त-

व्यम्, किन्तु भाद्रकृष्णतृतीयायामेव। 'भाद्रकृष्णतृतीयायां कर्त्तव्यं सामवेदिभिः' इति वचनात्। यजुर्वेदिविषये वचनान्तरमपि तत्रैव दृश्यते—

संक्रान्तिर्ग्रहणं वाऽपि यदि पर्वणि जायते।
तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते॥ इति।

(५) अगस्त्यर्घदाने (१७ पृ० मूले) विशेषविधिरुक्तो राजमार्त्तण्डे—

काशपुष्पमयीं रम्यां कृत्वा मूर्तिं तु वारुणे। प्रदोषे विन्यसेत्तां तु पूर्णकुम्भेऽप्यलङ्कृते॥
कुम्भस्थं पूजयेत्तं तु पुष्पधूपविलेपनैः। दध्यक्षतैर्बलिं दद्याद्रात्रौ कुर्यात्प्रजागरम्॥
प्रभाते तां समादाय यायात्पुण्यं जलाशयम्। निशान्ते तां तु विन्यस्य जलांशे प्रतिमां मुनेः॥
अर्घं दद्यादगस्त्याय भक्त्या सम्यगुपोषितः। पुष्पैर्मूलैः फलैर्भक्ष्यैः शारदैश्च सुगन्धिभिः॥
द्राक्षाखर्जूरकर्कन्धूनारिकेलादिभिः शुभैः। पञ्चरत्नसमायुक्तं हेमरूप्यसमन्वितम्॥
सप्तधान्यसमायुक्तं दधिचन्दनमिश्रितम्। अर्घपात्रं समादाय अर्घं दद्युर्द्विजातयः॥ इति

(६) अथ चान्द्रायणव्रतविधानम्। (पृ० २२ मूले पं० ११)

त्रैलोक्यकल्याणकरीं दयार्द्रां कालीं प्रणम्यापि गुरोः पदाब्जम्।
निरीक्ष्य नानास्मृतिमादरेण चान्द्रायणस्यात्र विलिख्यते विधिः॥

तत्र चन्द्रस्य कलाक्रमोपचयापचयवद् ग्रासस्य क्रमवृद्धिह्रासाभ्यामयनं चरणं यस्मिन् तच्चान्द्रायणं व्रतम्। तद्भेदप्रतिपादकानि प्रायश्चित्तमयूखधृतयमवचनानि—

वर्द्धयेत्पिण्डमेकैकं शुक्ले, कृष्णे च ह्रासयेत्। एतच्चान्द्रायणं नाम यवमध्यं प्रकीर्त्तितम्॥
एकैकं ह्रासयेत्कृष्णे पिण्डं, शुक्ले च वर्द्धयेत्। एतत्पिपीलिकामध्यं चान्द्रायणमुदाहृतम्॥

त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः।
हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम्॥

चतुरः प्रातरश्नीयाच्चतुरः सायमेव च। पिण्डानेतद्धि बालानां शिशुचान्द्रायणं स्मृतम्॥
पिण्डानष्टौ समश्नीयान्मासं मध्यन्दिने रवौ। यतिचान्द्रायणं ह्येतत्सर्वकल्मषनाशनम्॥

यथा कथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः।
मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम्॥

एभिर्वचनैस्तस्य षड्विधत्वम्, यवमध्य-पिपीलिकामध्य-ऋषिचान्द्रायण-शिशुचान्द्रायण-यतिचान्द्रायण-सामान्यचान्द्रायणभेदात्।

तथा तद्भेदा उक्ता मनुना—

एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्द्धयेत्। उपस्पृशँस्त्रिषवणमेतच्चान्द्रायणं स्मृतम्॥
एतमेव विधिं कृत्स्नमाचरेद्यवमध्यमे। शुक्लपक्षादिनियतश्चरंश्चान्द्रायणं व्रतम्॥ २॥

अष्टावष्टौ समश्नीयात् पिण्डान् मध्यन्दिने गते।
नियतात्मा हविष्याशी यतिचान्द्रायणं चरेत्॥ ३॥
चतुरः प्रातरश्नीयात्पिण्डान् मध्यन्दिने गते।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम्॥ ४॥

यथा कथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः ।
मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम् ॥ ५ ॥

अत्रादितश्चतुर्भिः श्लोकैः क्रमेण पिपीलिकामध्य-यवमध्य-यतिचान्द्रायणशिशुचान्द्रायणेति चत्वारो भेदाः स्पष्टतयोपर्युक्तयमस्मृतिप्रतिपादिता इव सन्ति वरन्त्वन्तिम ( पञ्चम ) श्लोकस्य 'यथा कथञ्चित्पिण्डाना'-मित्यादियोगियाज्ञवल्क्यवचनस्यानुसारेण सामान्यचान्द्रायणमित्यर्थः स्यात्तदा मनुमतेन पञ्चभेदाः सिद्धाः । एतद्भाष्यकर्त्रा कुल्लूकभट्टेनापि पञ्चमश्लोकस्यावतरणिकायां 'चान्द्रायणान्तरमाहे'-ति लिखितम् । परन्तु प्रायश्चित्तविवेककृता पञ्चमश्लोकविषयश्चत्वारिंशदधिकशतद्वयमिति सकलग्रासयोगरूपः सर्वेषु पिपीलिकायवमध्यकल्पादिषु संयोजितः । तेन च यवकल्पे शुक्लप्रतिपदादितो व्रतारम्भे ग्राससंख्या पञ्चविंशत्यधिकशतद्वयमितामेवागम्यते शङ्खलिखितवचनबलाद् व्रतारम्भपूर्वामावास्यायां पञ्चदशग्रासभोजननियमादेशात्तत्रापि चत्वारिंशदधकद्विशती ग्राससंख्या सामान्यशिशुचान्द्रायणवत् साधिता । परन्त्वत्र द्वितीयश्लोकेन प्रतिपादिते यवमध्यलक्षणे 'शुक्लपक्षादिनियतः'-इति दर्शनात्प्रायश्चित्तविवेकस्य युक्तिरन्यस्मृतिभिन्नैव, यथोक्तं मिताक्षरायाम् 'अतस्तयोर्नायं ग्राससंख्यानियमः । किन्तु पञ्चविंशत्यधिकशतद्वयसंख्यैवेति-दर्शनात् सामान्यचान्द्रायणवत्तयोर्ग्राससंख्यानियमो नास्तीति सूच्यते । तिथिक्षयवृद्धिसम्भवे तच्चत्तिथिक्रमप्रोक्तग्राससंख्यालोपवृद्धिविधानाच्च न सकलग्रासंयागो नियत इति । तथा जाबालेन तस्य पञ्चविधत्वमुक्तं यथा—

पिपीलिकं यवमध्यञ्च यतिचान्द्रायणं तथा । चान्द्रायणं तथा ज्ञेयं चतुर्थं सर्वतोमुखम् ॥
पञ्चमं शिशुसंज्ञञ्च तुल्यपुण्यफलोदयम् ।

अत्र सर्वतोमुखं पूर्वोक्तसामान्यचान्द्रायणसमानम् । ऋषिचान्द्रायणं नात्र विद्यते तथा योगियाज्ञवल्क्येन तद्भेदा उक्ताः—

'तिथिवृद्ध्या चरेत् पिण्डान् शुक्ले शिखण्डसंमितान् ।
एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरन् ॥ १ ॥
यथा कथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम् ।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥ २ ॥

अत्र प्रथमश्लोकेन शुक्लकृष्णयोः पक्षयोर्ग्रासोपचयापचयशोक्त्योः क्रमिकयोगेन यवमध्यं, तदुत्क्रमवशात् पिपीलिकामध्यलक्षणमप्यर्थसिद्धम् । द्वितीयश्लोकेन सामान्यचान्द्रायणलक्षणमुक्तम् । शिशुयतिचान्द्रायणयोरपि ग्राससंख्यानां चत्वारिंशदधिकशतद्वयपरिमितत्वात्सामान्यचान्द्रायणलक्षणान्तर्गतमेव योगिना गणितम् । ऋषिचान्द्रायणमत्रापि नास्ति । तथा वशिष्ठोक्तास्तद्भेदाः—

एकैकं वर्द्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् । इन्दुदये न भुञ्जीत एष चान्द्रायणो विधिः
मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश । ग्रासोपचयभोजी सन् पक्षशेषं समापयेत् ॥
तथैव शुक्लपक्षादौ ग्रासं भुञ्जीत चापरम् । ग्रासोपचयभोजी सन् पक्षशेषं समापयेत् ॥

अनेन यवमध्यपिपीलिकामध्यभेदावुक्तौ । एवं गौतमेन तद्भेदा उक्ताः—

'पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वा एकैकापचयेनापरपक्षमश्नीयात् ।

अमावास्यायामुपोष्य एकैकोपचयेन पूर्वपक्षं विपरीतमेकेषाम् ॥'

अनेन पिपीलिकामध्यकल्पो मुख्यत्वेन, यवमध्यकल्पोऽपि तद्वैपरीत्येन, अत्र पूर्णिमायां व्रतारम्भोऽन्यस्मृतिभ्यो विलक्षणविषयः । अनेनैकत्रिंशद्दिनसाध्योऽयमेतन्मते भवति । परन्तु सन्ततं पौनःपुन्येन यः कश्चिदेतत् कर्त्तुमिच्छेत्तस्य पूर्वापरकृष्णादिमासव्रतयोर्मध्ये पूर्णिमायाः पतनादुभयमासेऽपि तद्ग्रहणान्नायं युक्तियुक्तो नियमः । तर्हि कथमेवमुक्तं गौतमेनेत्युच्यते यः सकृत्तद्व्रतं कर्त्तुमिच्छेत्तेन तु पूर्णिमायामेव तदारम्भो विधेयः । यः सन्ततं पुनः पुनः कर्त्तुमिच्छेत्तेनापि प्रथममासव्रतारम्भः पूर्णिमायां कर्त्तव्यस्तदनन्तरं कृष्णप्रतिपदादितो द्वितीयादिपिपीलिकाकल्पस्य चान्द्रायणस्यारम्भो विज्ञेय इति न कश्चिद्विरोधः । पिपीलिकाया मुखापेक्षया पश्चाद्भागस्य किञ्चिल्लघुत्वकर्शनात्कृष्णप्रतिपद्यारम्भस्तदुत्तरपूर्णिमायां तत्पूर्त्तिरुचिता । तथात्वेऽन्तिमपूर्णिमातिथिप्राप्तपञ्चदशग्रासापेक्षया तत्पूर्वं कृष्णपक्षीयप्रतिपत्तिथिप्राप्तचतुर्द्दशग्राससंख्यायाः किञ्चिन्न्यूनता सिद्ध्यति । एवं लिखितस्मृतौ—

ग्रासं चन्द्रकलावृद्ध्या प्राश्नीयाद्वर्द्धयन् सदा ।
ह्रासयेच्च कलाहानौ व्रतं चान्द्रायणं स्मृतम् ॥

शुक्लपक्षे सदा चन्द्रकलावृद्ध्या ग्रासं वर्द्धयन् प्राश्नीयात् । कलाहानौ कृष्णपक्षे ग्रासं ह्रासयेदित्यनेन यवमध्यकल्पः । पिपीलिकामध्यकल्पोऽप्युत्क्रमत उक्तो भवति ।

एवं पराशरस्मृतौ—

एकैकं ह्रासयेद् ग्रासं कृष्णे शुक्ले च वर्द्धयेत् ।
अमावास्यां न भुञ्जीत ह्येष चान्द्रायणो विधिः ॥

अनेन पिपीलिकामध्यकल्प उक्तः । एतदुत्क्रमेण यवमध्यकल्पोऽपि ।

एवमत्रिणाऽपि उक्तम्—

एकैकं वर्द्धयेन्नित्यं शुक्ले कृष्णे च ह्रासयेत् ।
अमावास्यां न भुञ्जीत एष चान्द्रायणो विधिः ॥

शुक्ले यवकल्पपूर्वार्द्धे पिपीलिकाकल्पोत्तरार्द्धेऽपि तिथिवृद्ध्या एकैकं ग्रासं वर्द्धयेत् कृष्णे यवकल्पापरार्द्धे पिपीलिकापूर्वार्द्धेऽपि एकैकं ग्रासं ह्रासयेत् । उभयत्र अमायां न भुञ्जीत । एवं भेदद्वयमुक्तं भवति । तथा चाग्निपुराणे—

'अष्टाभिः प्रत्यहं ग्रासैर्यतिचान्द्रायणं स्मृतम् ।
प्रातश्चतुर्भिः सायं च शिशुचान्द्रायणं स्मृतम् ॥
तथा कथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम् ।
मासेन भक्षयेदेतत्सुरचान्द्रायणं चरेत् ॥'

तथा चोक्तं देवीभागवते—

एकैकं तु ह्रसेत् पिण्डं कृष्णे शुक्ले च वर्धयेत् ।
अमावास्यां न भुञ्जीत एवं चान्द्रायणो विधिः ॥

उपस्पृश्य त्रिषवणमेतच्चान्द्रायणं स्मृतम्।
चतुरः प्रातरश्नीयाद्विप्रः पिण्डान् कृताह्निकः॥
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम।
अष्टावष्टौ समश्नीयात् पिण्डान् मध्यन्दिने स्थिते॥
नियतात्मा हविष्यस्य यतिचान्द्रायणं व्रतम्॥ इति।

एवञ्चोक्तं बौधायनधर्मसूत्रे—

एकवृद्ध्या सिते पक्षे एकहान्याऽसिते ततः।
पक्षयोरुपवासौ द्वौ तद्धि चान्द्रायणं स्मृतम्॥
चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम्॥
अष्टावष्टौ मासमेकं पिण्डान् मध्यन्दिने स्थिते।
नियतात्मा हविष्यस्य यतिचान्द्रायणं चरेत्॥
यथाकथञ्चित्पिण्डानां द्विजस्तिस्रस्त्वशीतयः।
मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम्॥
यथोद्यंश्चन्द्रमा हन्ति जगतस्तमसो भयम्।
तथा पापाद्भयं हन्ति द्विजश्चान्द्रायणं चरन्॥

तथा तत्रैव—अतोऽन्यच्चरित्वा सर्वेभ्यः पातकेभ्यः पापकृच्छुद्धो भवति। कामाय कामायैतदहार्यमित्याचक्षते। यं कामं कामयते तमेतेनाप्नोति। एतेन वा ऋषयः आत्मानं शोधयित्वा पुरा कर्माण्यसाधयन्। तदेतद्धन्यं पुण्यं पौत्र्यं पशव्यमायुष्यं स्वर्ग्यं यशस्यं सार्वकामिकं नक्षत्राणां द्युति सूर्याचन्द्रमसोः सायुज्यं सलोकतामाप्नोति॥ इति। अथैवं प्रायश्चित्तविवेके--(शङ्खलिखितौ)
'अमावास्यां व्रतोपायनं यवमध्यमम्। अमावास्यायां पञ्चदश पिण्डानश्नीयात्।'

अत्रोपायनमारम्भः। युक्तं चेदम। अमायामपि पञ्चदशकलात्मकस्य चन्द्रस्य सूर्ये प्रविष्टत्वात्। अत्र एकैककलानिर्गमस्य प्रतिपदादिषु वृद्धिशब्दत्वात्।'

एवं शूलपाणिमहामहोपाध्यायलिखितशङ्खलिखितवाक्याशय उच्यते 'कृष्णप्रतिपदि एककलायाः सूर्ये प्रविष्टत्वादेकग्रासहानिः। एवं कृष्णद्वितीयायां चन्द्रस्य कलाद्वयं ततो निर्गत्य सूर्ये प्रविष्टत्वाद्ग्रासद्वयहानिः' तर्हि कृष्णपक्षान्तेऽमायां सकलकलायाः सूर्ये प्रविष्टत्वात् कथं न सकलग्रासहान्योपवासः सिद्ध्यति इति त एव जानन्ति। एवं यद्यपि यवमध्यकल्पेऽन्तिमायाममायामुपवासे न विवादलेशः (द्रष्टव्यं पराशरस्यात्रेश्च वचनम्)। किन्तु पूर्वस्याममावास्यायां पञ्चदशग्रासग्रसनाङ्गीकारे सा चामावास्या यत्पक्षस्य चरमतिथिस्तत्पक्षादितः केनाप्यनुष्ठिते पिपीलिकाकल्पे तस्याममायामुत्तरोत्तरग्रासहान्योपवासः स्वतः सिद्धः। अथवा तद्यवकल्पाद्यमावास्या यन्मासान्तिमतिथिस्तन्मासादितो विधीयमाने यवकल्पे तस्यामेवोपवासः सिद्ध्यति। कथं तेन तस्यां पञ्चदशग्रासग्रसनमुक्तम्। तथा च तत्र पञ्चदशग्रासभोजनेन यवाकृतेर्विकृतत्वात्तन्मतं युक्त्यासञ्जातमिव न भातीति,

अत एव गोतमेनोक्तम् 'परदिनेऽमा चेत्तत्राप्युपोष्येति' तथा च 'पक्षयोरुपवासौ द्वौ' इति बौधायनवचनादमायामभोजने न विवादलेशोऽपि ।

अथ तेषां मध्ये सुखबोधाय यवमध्यजल्पलक्षणम् ।

शुक्लप्रतिपदादिपञ्चदश्यन्तपञ्चदशतिथिषु चन्द्रकलानामेकैकोपचयक्रमेण, ग्रासानामपि क्रमिकोपचयः कार्यः । अर्थाच्छुक्लप्रतिपदि एको ग्रासः, तदुत्तरद्वितीयायां द्वौ ग्रासौ तत्तृतीयायां त्रयश्चतुर्थ्यां चत्वार एवं प्रत्येकतिथौ तत्तत्तिथिसंख्यका ग्रासा अतः पूर्णिमायां पञ्चदश ग्रासाः सम्भवन्ति । ततोऽग्रिमदिने कृष्णप्रतिपदि पूर्णचन्द्रकलाभ्यः एकापचयादेकोनाः पञ्चदश अर्थाच्चतुर्दश ग्रासाः । तथा चोक्तं वशिष्ठेन 'मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश ।' इति । तत्र यथा कृष्णप्रतिपदि चतुर्दश, तथैव शुक्लचतुर्दश्यां चतुर्दश, पूर्णिमाप्राप्तपूर्ण (पञ्चदश) ग्रासदिनादेकदिनपूर्वपरयोर्दिनयोस्तुल्यह्रासत्वात् । एवं कृष्णद्वितीयायां शुक्लत्रयोदश्यां च त्रयोदश । तथा कृष्णतृतीयायां शुक्लद्वादश्यां च द्वादश । एवं कृष्णचतुर्थ्यामेकादश, ततः पञ्चम्यां दशैवं क्रमह्रासात्कृष्णपक्षेऽमायां ग्राससंख्याशून्यत्वेन भोजनाभावः ।

अत्र शुक्लादिमुख्यचान्द्रमासे आद्यान्त्ययोर्ग्रासक्रमदैर्घ्यान्मध्ये पूर्णिमायां ग्रासपुष्टत्वेन स्पष्टतया यवाकारकत्वादेतादृशकल्पस्य यवमध्यचान्द्रायणमिति युक्तं लाक्षणिकं नाम। अत्र शुक्लपक्षे तिथिवृद्धौ तत्तिथिसंख्यका ग्रासास्तदुभयदिने भोज्याः । तिथिक्षये तत्तिथिक्रमप्राप्तग्राससंख्याया लोपः कार्यः । यथा षष्ठ्याः क्षयावसरे पूर्वदिने चतुर्थ्यां चत्वारः । तदुत्तरदिने पञ्चम्यामुदयव्यापिन्यां पञ्च । तदुत्तरदिने सप्तम्यां सप्तैव न षट्, एवं कृष्णेऽपि यस्याः क्षयवृद्धी भवेतां तत्तिथिप्राप्तग्राससंख्याया लोपवृद्धी विधेये, कथमन्यथा पक्षान्ते यथा पूर्णिमायां पञ्चदश ग्रासा भविष्यन्ति, अर्थात् शुक्लपक्षे षष्ठ्याः क्षयावसरे प्रतिपदादितिथिषु एकापचयेत पूर्णिमायां चतुर्दशैव ग्रासाः सम्भवेयुस्तत्र तत्पक्षतिथीनां चतुर्दशसंख्यकत्वात् । एवं सप्तम्या वृद्धिस्थले उभयदिने सप्त सप्त-ग्रासकल्पनाभावे तत्पक्षतिथिसंख्यानां षोडशसंख्यकत्वात्पूर्णिमायां षोडशग्रासाः सम्भवेयुः । अथ कृष्णपक्षे तिथिक्षयसम्भवे तत्तिथिक्रमप्राप्तग्रासलोपकरणाभावेऽमायामेको ग्रासः सम्भवेदिति वा तत्र तिथिवृद्धौ ग्रासवृद्धिविधानाभावे चतुर्दश्यामेव ग्रासाभावः सिद्ध्यति इत्थमनर्थः सम्भवति, अत एवोक्तं 'तिथिवृद्ध्या चरेत् पिण्डान्' इत्यादि ।

अथ पिपीलिकाकल्पलक्षणम् ।

कृष्णप्रतिपदि चतुर्दश, तदुत्तरद्वितीयायां त्रयोदश, तृतीयायां द्वादश एवं यवमध्यकल्पोत्तरार्धवत्पिपीलिकाकल्पे पूर्वार्धे चन्द्रकलाऽपचयक्रमानुरोधेन ग्रासानामेकैकापचयेनामावास्यायां ग्रासशून्यत्वेनोपवासः सिद्धस्तदुत्तरदिने शुक्लप्रतिपदि एकग्रासः । द्वितीयायां द्वौ, तृतीयायां त्रय एवं चन्द्रकलोपचयवशात्तत्तिथौ तत्तत्तिथिसंख्यका ग्रासः, पक्षान्ते ( पूर्णिमायां ) पञ्चदश ग्रासा भवन्ति । अत्राद्यन्तयोः प्रान्तदिनयोर्ग्राससंख्याऽऽधिक्यात् , प्रान्ताभ्यां मध्याभिमुखं क्रमदैर्घ्यादमान्ते ग्रासाभावेन पिपी-

लिकाऽऽकृतिवत्सकलग्रासयोजनयेति युक्तमस्य पिपीलिकातनुमध्यत्वम् । यदि पक्ष-योरपि तिथिह्रासवृद्धी न स्तस्तदा कृष्णप्रतिपदादितोऽग्रिमपूर्णिमावसानावधिकत्रिंश-च्चान्द्रदिनसाध्यम् । तिथिक्षयवृद्धिवशात्कदाचिदूनत्रिंशदेकत्रिंशद्दिनसाध्यम् । यद्येक-स्मिन् पक्षे तिथिक्षयो द्वितीयपक्षे तु तिथिवृद्धिस्तदाऽपि त्रिंशद्दिनसाध्यमेव, तस्य दिनानां तिथिक्षयवृद्धिवशाद्ह्रासवृद्धी विज्ञेये । एवं तिथिक्षयवृद्ध्यभावे सकलग्रास-संख्यासंकलनया पञ्चविंशत्यधिकशतद्वयी सिद्ध्यति । तिथिक्षयवृद्धिसम्भवे तु सकल-ग्राससंख्यासङ्कलनेनानियतसंख्यासंभवान्नात्र यवपिपीलिकाकल्पयोः संख्यानियमः । संख्यानियमस्तु तत्रैव यत्र तिथिक्रमेण ग्रासस्यापचयोपचयौ न भवतः, यथा यतिशिशु-साधारणकल्पास्तेषु प्रतिदिनं ग्रासैकरूपसंख्यकत्वात् ।

परन्तु विवेककारेणास्य कल्पस्य गौतमवचनानुसारेण पूर्णिमायामारम्भविधिं वदताऽत्रापि पञ्चदश्यां पञ्चदशग्राससंयोगेन पूर्णिमामारभ्य पूर्णिमाऽन्तपर्यन्तैकत्रिंश-द्दिनसाध्यं पिपीलिकाकल्पं मत्वा सकलग्राससंख्या चत्वारिंशदधिकशतद्वयपरिमिता साधिता । तिथिक्षयवृद्ध्यवसरे तु चन्द्रकलाक्रमह्रैण्यवृद्ध्यननुरोधेनैव ग्रासग्रसननियमः स्वकल्पितः प्रदर्शितः । वस्तुतः 'ग्रासं चन्द्रकलावृद्धया' इति वचनाद्ग्रासानां क्रमि-कह्रासवृद्धिविधानोचितत्वात्तादृशोऽर्थो युक्तियुक्त इव न लक्ष्यते ।

तथा च नैरुक्तर्बेण प्रतिमासं चान्द्राणव्रतं कुर्वतां पूर्वमासीयव्रतविरामतिथिर्या पञ्चदशी सैवाग्रिममासीयचान्द्रायणस्य प्रारम्भतिथिरतः पूर्वमासे पूर्णिमाप्राप्तपञ्चदश-ग्राससंख्यानां योजनाभावेन कथं ग्राससंख्यापूरणोपायः स्यादत एतद् व्रतं न हि पञ्च-दश्यादिकमपितु कृष्णप्रतिपदादिकमेवेति मिताक्षरासम्मतम् ।

अस्मिन् कल्पेऽपि तिथिक्षयवृद्धिवशाद् ग्राससंख्याक्षयवृद्धी वेदितव्ये । यथा कल्प्यते–शुक्लपक्षे सप्तम्या वृद्धिस्तदा दिनद्वयं सप्त सप्त ग्रासा ग्रसनीयाः । यदि तस्मि-न्नेव पक्षे नवम्याः क्षयस्तदाऽष्टम्यामष्टौ ग्रासान् भुक्त्वा तदुत्तरदिने क्रमप्राप्तान् नव ग्रासान् त्यक्त्वा दशग्रासानेव भुञ्जीत, कथमन्यथा कृष्णपक्षेऽमायां ग्रासाभावेन भोज-नाभावः सम्पद्यते । तथा च शुक्ले पूर्णिमायां पञ्चदश ग्रासाः सिद्ध्यन्ति । अथ यद्येक-स्मिन्नेव पक्षे कस्याश्चित्तिथेः क्षयः कस्याश्चिद्वृद्धिस्तत्रापि क्षयतिथिप्राप्तग्राससंख्या-लोपः । वृद्धितिथिप्राप्तसंख्योभयदिनगता भवति । यत्र च त्रयोदशदिनपक्षे तिथिद्वय-स्यैकस्मिन्नेव पक्षे क्षयस्तत्रापि तत्तत्क्षयतिथिप्राप्तसंख्या तत्तत्तिथौ लुप्ता भवति । यथा द्वितीयायाश्चतुर्दश्याश्च क्षयस्तदा तत्र प्रतिपदि एकः तदुत्तरदिने तृतीयायां त्रयः । एवं त्रयोदश्यां त्रयोदश, तदुत्तरदिने पूर्णिमायां पञ्चदशैव ग्रासस्य चन्द्रकला-ऽनुसरणात् । यथा च कस्मिन्नेव पक्षे तिथिद्वयस्य वृद्धिस्तदा तत्तत्तिथिप्राप्तसंख्यायाः वारद्वयं वृद्धिः ।

तथा चोक्तं मिताक्षरायाम्—'यदा त्वेकस्मिन् पक्षे तिथिवृद्धिह्रासवशात् षोड-शदिनानि भवन्ति चतुर्दश वा तदा ग्रासानामपि वृद्धिह्रासौ वेदितव्यौ । तिथिवृद्ध्या पिण्डांश्चरेदिति नियमात्' इति ।

### अथ यवमध्यकल्पचान्द्रायणचक्रम् ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| तिथिसंख्या शुक्ले | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |
| ग्राससंख्या | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| तिथिसंख्या कृष्णे | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | ३० |
| ग्राससंख्या | १४ | १३ | १२ | ११ | १० | ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ | ० |

### अथ पिपीलिकाकल्पचक्रम् ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| तिथिसंख्या कृष्णे | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | ३० |
| ग्राससंख्या | १४ | १३ | १२ | ११ | १० | ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ | ० |

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| तिथिसंख्या शुक्ले | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |
| ग्राससंख्या | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |

### तथा यवमध्यकल्पस्वरूपम् ।




### पिपीलिकामध्यकल्पस्वरूपम् ।




### अथ शिशुचान्द्रायणलक्षणम् ।

दिवा चतुरो रात्रौ चतुर एवं प्रतिदिनं नियमेनाष्टौ ग्रासान् मासं यावदश्नीयात् नात्र शुक्लादितः कृष्णादितो वा प्रारम्भस्य निश्चयः । तथोक्तं मयूखे—

'पिपीलिकायवमध्यभिन्नचान्द्रायणेषु दिनान्तरेऽप्यारम्भो न प्रतिपद्येव ।' इति ।

त्रिंशद्दिनसाध्यमिदमतः ८ × ३० = २४० = सकलग्राससंख्या । नैतच्छिशुमात्रकर्त-

व्यम्। अत्र बालोचितोभयसमयविहितस्वल्पभोजननियमेन शिशुचान्द्रायणमिति संज्ञा। एतदन्यापेक्षया सुखसाध्यम्। नात्र व्रतान्तरविधानम्। अत्र पूर्वदिनकर्त्तव्यतादि अन्यकल्पवदेवेति।

अथ यतिचान्द्रायणम्।

एकमासं यावत्प्रतिदिनमेकवारमेव मध्याह्नसमये नियमेनाष्टौ ग्रासान् भुञ्जीत। अत्रापि सकलग्राससंख्या = ८ × ३० = २४० यमवचनेनास्मिन्नेव कल्पे मध्याह्ने भोजनविधिरिति स्पष्टतया प्रतिपादितम्। विवेककारेण सकलचान्द्रायणकल्पेषु मध्याह्ने ग्रासग्रसनविधिरुक्तः। मयूखकारेण मदनपारिजातकृता च चन्द्रोदये ग्रासग्रसनमुक्तम्। एवमपरार्कटीकायामपि। तथा हारीतस्मृतावपि। तत्र वस्तुतो ग्रासग्रसनात्पूर्वं सर्वत्र स्मृतिषु चन्द्रोपस्थानविधानदर्शनाच्चन्द्रोदयकालिककर्त्तव्यमेव ग्रासग्रसनम्। नात्रापि व्रतान्तरविधानम्। दैनिकनिश्चितग्रासग्रसनोच्छेदेन व्रतभङ्गापत्तिसम्भवात्। तत्र सङ्कल्पितनित्यकाम्यव्रताकरणे प्रत्यवायदर्शनात्पूर्वारब्धमपि व्रतान्तरमन्यद्वारा कारयेत्।

अथ सामान्यचान्द्रायणम्।

इदमपि त्रिंशद्दिनसाध्यम्। अत्र इयानेव विशेषः। प्रतिदिनं ग्रासंसंख्यानियमो न, केनापि विधिना मासे सकलग्राससंख्यासंकलनेन चत्वारिंशदधिकशतद्वयं भवेदेष एव नियमः। यथा दिने दिनेऽष्टौ ग्रासान् भुञ्जीत, अथवा नक्तं चतुरो दिवा चतुरः। अथवैकस्मिन् दिने चतुरोऽपरस्मिन् द्वादश, तत्रैकरात्रमुपोष्यापरस्मिन् दिने षोडश। यद्वा दिनद्वयमुपोष्य तृतीयदिने चतुर्विंशतिर्वा द्वात्रिंशदित्यादि प्रकाराणां मध्ये शक्त्यपेक्षया भुञ्जीत। अत्र तिथ्यपेक्षया ग्रासनियमो नास्तीति। नात्रोपवासान्तरबाधः। नात्र भोजनसमयनियमः। इदमेव विवेके सर्वतोमुखसंज्ञया प्रतिपादितम्। अन्यकल्पापेक्षयाऽत्र विशेषस्वाच्छन्द्यमस्ति। अत्रैतन्मध्यप्राप्तमेकादशीव्रतादिकमपि कर्तुं शक्यते।

अथ ऋषिचान्द्रायणम्।

इदमपि त्रिंशद्दिनसाध्यम्। तत्र शुक्लप्रतिपादितो वा कृष्णप्रतिपदादितो यस्मात्कस्माचिद्दिनात्त्रिंशद्दिनपर्यन्तं प्रतिदिनं त्रीन् त्रीन् ग्रासान् अश्नीयात्। अत्र व्रतान्तरकर्त्तव्यता न प्रतिदिननिश्चितग्रासत्रयग्रसनात्। अत्र ग्राससंख्या—३ × ३० = ९०। दैनिकग्राससंख्याल्पत्वात्कष्टसाध्यत्वेन विशेषतया ऋषिकर्त्तव्यत्वेन ऋषिचान्द्रायणमिति संज्ञा। नैतदृषिमात्रकर्त्तव्यम् अन्येनाऽपि साहसिना कर्त्तव्यमेव। एते सर्वे अपि कल्पाः समानफलदा एवेत्युक्तं जाबालेन 'तुल्यपुण्यफलोदयम्।'

अथ ग्रासप्रमाणनिर्णयः।

योगियाज्ञवल्क्येनोक्तम् 'शिखण्डसंमितान्।' इति। शिखी मयूरस्तदण्डपरिमितानित्यर्थः। तथा पराशरेण 'कुक्कुटाण्डप्रमाणं तु ग्रासं वै परिकल्पयेत्॥' अत्र कुक्कुटश्चरणायुधः। यवनपक्षी (मुरगा) इति भाषा। शङ्खेन तु—

'आर्द्रामलकमात्रास्तु ग्रासा इन्दुव्रते स्मृताः।'

आर्द्रमशुष्कं सरसमिति एतेषां च परिमाणानां शक्त्या विकल्पः। विष्णुना तु

'आस्याविकारमश्नीयात् ।' इत्युक्तम्, यादृशग्रासेन आस्यस्य मुखस्य विकारो न भवति, अर्थादधिकबुभुक्षाक्षोभशान्त्यै महत्परिमाणकग्रासग्रसनेन गल्लोत्फुल्लादिविकारो भवति तथा न ग्रसनीयम् इत्यर्थः । मिताक्षरायां तु 'ग्रासप्रमाणमास्याविकारेण यदुक्तं तद्बालाभिप्रायेण, तेषां शिख्यण्डपरिमितपञ्चदशग्रासभोजनाशक्तेः । क्षीरादिहविष्षु शिख्यण्डसंमितत्वं तु पर्णपुटकादिना सम्पादनीयम् । तथा कुक्कुटाण्डाद्रीमलकानि शक्तिविषयकाणि शिख्यण्डपरिमाणाल्लघुत्वात्तेषाम् । यमेन तूक्तं मयूखे- 'अङ्गुल्यग्रस्थितं ग्रासं सावित्र्या चाभिमन्त्रयेत् ।' अनेन गायत्र्या ग्रासमभिमन्त्र्य भक्षयेदिति ।

अथ भोजनसाधनाग्राह्यपात्रप्रमाणमुक्तं यमेन—

'आयसं तैजसं पात्रं चक्रोत्पन्नं विवर्जयेत् ।
असुराणां हि तत्पात्रं देवपात्रमचक्रकम् ॥'

आयसं लोहधातुनिष्पन्नपात्रम् । तैजसं कांस्यपित्तलादिकं वा मणिखचितम् । चक्रोत्पन्नं कुलालचक्रघटितं घट-कटाह-शरावादिमृत्पात्रम् । एतत्सर्वं राक्षसपात्रम्, 'दैवे कर्मणि वर्जयेत्'। यदचक्रकं चक्रभ्रमणेन न निर्मितं तद्दैवपात्रम् । तद्गृह्णीयादित्यर्थः।

तथा कात्यायनेनोक्तम्—

'कुलालचक्रनिष्पन्नमासुरं मृन्मयं स्मृतम् । तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत् ॥'

तदेव मृन्मयं हस्तनिर्मितं दैविकम् । केवलचक्रोत्पन्नत्वेनैव पात्रदोषः ।

अथ चान्द्रायणमध्येऽन्यव्रतादावुपस्थिते विचारः । प्रायश्चित्तमयूखे—

'एकादश्यादौ नित्यप्राप्त उपवासस्तावच्चान्द्रायणविधिना बाध्यते । एतस्य 'धर्मार्थञ्च चरेदेतच्चन्द्रस्यैति सलोकता'मिति काम्यत्वाल्लशुनभक्षणादिनिमित्ते विहितत्वेन नैमित्तिकत्वाच्च । काम्यस्त्वेकादश्याद्युपवासोऽन्यद्वारा करणीयः प्रतिनिधिना कृतेऽपि फलप्राप्तेः, कात्यायनादिभिरुक्तत्वात् । वचनानि त्वस्मत्कृते समयमयूखे द्रष्टव्यानि । अयञ्चैकादश्याद्युपवासबाधः सामान्यचान्द्रायणभिन्नेष्वेव, तत्र प्रतिदिनग्रासग्रसननियमात् ।'

अथोपस्थानविधिः । ( प्रायश्चित्तमयूखे )

तत्र प्रतिदिनमुदिते चन्द्रे—

ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥ १ ॥
ॐ सन्ते पयांसि समुयन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोमदिवि श्रवांस्युत्तमानिधिष्णु ॥ २ ॥
नव नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो विदधात्यायं प्रचन्द्रमास्तिरते दीर्घमायुः ॥ ३ ॥

एतैर्मन्त्रैः क्रमेण सोमं तर्पयामि । चन्द्रं तर्पयामि । चन्द्रमसं तर्पयामि । इति तर्पयित्वाऽऽज्येन एतैरेव मन्त्रैर्लौकिकेऽग्नौ हुत्वा एतैरेव पात्रस्थं हविरनुमन्त्र्य एतैरेव मन्त्रैश्चन्द्रमुपस्थाप्य ओं यद्देवा देवहेडनं देवासश्चकृमा वयम् । अग्निर्मा तस्मादेनसोविश्वान् मुञ्चत्वंहसः ॥

### अथ गौतमोक्तचान्द्रायणव्रतविधिः ।

'अथातश्चान्द्रायणं, तस्योक्तो विधिः—कृच्छ्रे वपनं व्रतं च चरेत् । श्वोभूतां पौर्णमासीमुपवसेत् । आप्यायस्व, सन्ते पयांसि, नवो नव इति चैताभिस्तर्पणमाज्यहोमौ हविषश्चानुमन्त्रणमुपस्थानं चन्द्रमसो यद्देवा देवहेडन'मिति चतसृभिराज्यं जुहुयात् । देवकृतस्येति चान्ते समिद्भिः । ॐ भूर्भुवः स्वस्तपः सत्यं यशः श्रीरूपं गिरोजस्तेजः पुरुषो धर्मः शिव इत्येतैर्ग्रासानुमन्त्रणं, प्रतिमन्त्रं मनसा नमः स्वाहेति वा सर्वग्रासप्रमाणमास्याविकारेण, चरुभक्ष्य-सक्तु-कण-यावकपयोदधिघृतमूलफलोदकानि हवींषि उत्तरोत्तरं प्रशस्तानि । पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वैकापचयेनापरपक्षमश्नीयात् । अमायामुपोष्यैकोपचयेन पूर्वपक्षम् । विपरीतमेकेषाम् । एष चान्द्रायणो मासो मासमेतमाप्त्वा विपापो, विपाप्मा सर्वमेनो हन्ति । द्वितीयमाप्त्वा दश पूर्वान् दशापरानात्मानं चैकविंशं पङ्क्तीश्च पुनाति । संवत्सरं चाप्त्वा चन्द्रमसः सलोकतामाप्नोति । इति गौतमीये धर्मशास्त्रेऽष्टाविंशोऽध्यायः ।'

अस्यार्थः—कृच्छ्रव्रते, व्रतपूर्वदिने यथा वपन = नखकृन्तनोपवासादिनियमस्तथाऽत्रापि चरेत् कुर्यात् । तदुक्तं हारीतेन 'राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः । केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत् ॥' श्वो भूतां श्वस्तनदिने भूता पौर्णमासी यस्याः सा. तां चतुर्दशीम् । अत्र यवकल्पे करिष्यमाणे पौर्णमासी अमावास्या । पिपीलिकाकल्पे तु पूर्णिमैव । ततो मन्त्राणां पूर्वावयवैः परिचयः । चरुभक्ष्येति चरुः ( हव्यान्नं 'चरुर्भाण्डे च हव्यान्ने' इत्यनेकार्थकोषः । 'चरुर्हव्यान्नभाण्डयो रिति मेदिनी । भक्ष्यं भिक्षया सम्पादितं हविष्यान्नम् । सक्तवो भृष्टयवचूर्णानि चणकादिचूर्णशून्यानि चणकस्यामिषत्वात्, अन्ने हविरुपादानात् । कणाः कुट्टितहैमन्तिकधान्यानां तण्डुलसूक्ष्मावयवाः ( कणोऽतिसूक्ष्मे धान्यांशे इत्यमरः ) । यावकः कुल्माषोऽर्धस्विन्नयवः । ( स्याद्यावकस्तु कुल्माष इत्यमरः ) । वा यवसम्बन्धिमोदकपदार्थः । पयो गोदुग्धम् । दधि = अनुद्धृतगोदुग्धजनितम् । घृतं गोघृतम् । मूलं कन्दं केमुकगृञ्जनलशुनपलाण्डुमूलप्रभृतिवर्ज्यकन्दभिन्नम् । उदकं स्वोद्धृतं जलं वा विप्रशिष्यस्वजातीयस्त्रीभिरुद्धृतम् । एतानि हवींषि उत्तरोत्तरं प्रशस्तानि । चरुतो भैक्ष्यम् । भैक्ष्यात् सक्तवः । सक्तुतः कणाः, ततो यावक एवमुत्तरोत्तरं विशेषफलजनकानि । अत्र क्षीरादिहविषां शिखण्डपरिमितत्वं पर्णपुटकादिना सम्पादनीयमिति मिताक्षरा । अपरपक्षः कृष्णपक्षः । पूर्वपक्षः शुक्लपक्षः । सृष्ट्यादौ शुक्लपक्षस्य प्रथमभूतत्वात् ।

### अथ तद्विधिः ( मयूखे )—

'कृष्णचतुर्दश्यां केशश्मश्रुनखलोमानि श्मश्रूण्येव वा वापयित्वा दिनमुपोष्य सायं संकल्पं कुर्यात् । तत्र सङ्कल्पः-ओं अद्येत्यादि अमुकगोत्राया ( वा अमुकगोत्रस्य ) मम श्री अमुकीदेव्याः ( श्री अमुकशर्मणः ) जन्मजन्मान्तरार्जितागम्यागमनाभक्ष्यभक्षणासंसर्ग्यसंसर्गस्त्रीबालविप्रगोहत्यादेवद्विजवित्तहरणप्रभृतिसकलपातकोपपातक-

महापातकझटितिसमूलध्वंसपूर्वक-दशपूर्वदशापरैकात्मेत्येकविंशकुलोद्धरण-चन्द्रसालोक्यप्राप्तिकामनयाऽमुककल्पचान्द्रायणव्रतमहं करिष्यते इति ।

तत इतरप्रायश्चित्तव्रतपूर्वदिनकर्त्तव्यवदत्रापि नक्षत्रोदये पञ्चगव्यं प्राश्यानाहारस्तद्द्वितीयदिनेऽमायामपि व्रती तिष्ठेत् । तद्द्वितीयदिने शुक्लप्रतिपदि एकस्तत एकवृद्ध्या शुक्लपक्षे तत्पश्चादेकापचयेन कृष्णपक्षं चातीत्यामायामुपवासः । गोदानब्राह्मणभोजनं च कर्त्तव्यम् । एवं पिपीलिकाकल्पे आदौ पञ्चदश्यां पञ्चदश तत एकापचयेन, कृष्णपक्षं, तत एकोपचयेन शुक्लपक्षं व्यतीय पूर्णिमायां व्रतपूर्त्तिः । यः कश्चिदेकवारं व्रतं कृत्वा मासं मासद्वयं वा शरीरं पालयित्वा पुनः कर्त्तुमिच्छेत्तत्र तस्य नैरन्तर्याभावात्पुनश्चतुर्दश्यामेव संयमादि समुचितम् ।

ओं यदि दिवा यदि नक्तमेनांसि चकृमा वयम् । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ ओं यदि जाग्रद्यदिस्वप्न एनांसि चकृमा वयम् । सूर्योमा तस्मादेनसोविश्वान् मुञ्चत्वंहसः ॥

ओं यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्थे यदेनश्चकृमा वयम् । यदेकस्याधिधर्मिणि तस्या वैयजनमसि । देवकृतस्य मनसोऽवयजनमसि । मनुष्यकृतस्यैनसोऽवयजनमसि । पितृकृतस्यैनसोऽवयजनमसि । आत्मकृतस्यैनसोऽवयजनमसि एनस एनसोऽवयजनमसि । यच्चाहमेनो विद्वांश्चकार । यश्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि ॥ ४ ॥ इति ।

चतसृभिश्च प्रत्यृचमाज्यं जुहुयात् । सर्वत्र ( अन्ते ) अग्नये, न मम इति त्यागः । ततो-'देवकृतस्येति' त्रिभिः समित्त्रयं हुत्वा—ओं भूः । भुवः । स्वः । तपः । सत्यम् । यशः । श्रीः । उक् । ईट् । ओजः । तेजः । पुरुषः । धर्मः । शिवः । इत्येतैः पञ्चदशभिरेकैकक्रमेण पात्रस्थं ग्रासमनुमन्त्र्य मनसा नमः स्वाहेत्युक्त्वा सर्वाननुमन्त्र्यैकैकमङ्गुल्यग्रैर्गृहीत्वा सावित्र्याऽनुमन्त्र्य भक्षयेत् । ( अत्र उक् । ईट् ) इति स्थले मिताक्षरायाम्, क्रमेण ऊर्कः । इन्द्रः । इति वर्त्तते, तथा मूलगौतमसंहितायाम् 'रूपं गिः' इति दृश्यते । तत्र मूलग्रन्थस्य प्राधान्यात् तदेव ग्राह्यम् ।

## अथ ग्रासग्रसनविधिः ।

तत्र यवकल्पे प्रथमदिने एकग्रासभक्षणे 'ओं प्राणाय स्वाहा, ओं अपानाय स्वाहा, ओं समानाय स्वाहा, ओं उदानाय स्वाहा, ओं व्यानाय स्वाहा, इति पञ्चभिर्मन्त्रैर्ग्रासमभिमन्त्र्य भक्षयेत् । द्वयोर्ग्रासयोः ( भक्षणे ) आद्यैस्त्रिभिर्मन्त्रैः ( ओं प्राणाय स्वाहा, ओं अपानाय स्वाहा, ओं समानाय स्वाहा, एतैः ) एकं ( ग्रासं ), द्वाभ्यां ( ओं उदानाय स्वाहा, ओं व्यानाय स्वाहा इति मन्त्राभ्याम् ) अपरं ( द्वितीयम् ), भक्षयेत् ।

त्रिषु ग्रासेषु द्वाभ्यां द्वाभ्यां द्वौ ( प्रथमद्वितीयमन्त्राभ्यां ओं प्राणाय स्वाहा, ओं अपानाय स्वाहा, २ एताभ्यां प्रथमग्रासं, तृतीयचतुर्थ्यां ( ओं समानाय स्वाहा २, ओं उदानाय स्वाहा २, एताभ्याम् ) द्वितीयग्रासं, एकेन ( ओं व्यानाय स्वाहा इत्यनेन ) अन्त्यम् ( तृतीयम् ) ।

चतुर्षु ( ग्रासेषु ) द्वाभ्यां ) प्रथमद्वितीयाभ्यां ओं प्राणाय स्वाहा, ओं अपानाय स्वाहा, एताभ्यां ) पूर्वग्रासम् । एकैकेनान्यान् ( ततः शेषैस्तृतीयचतुर्थपञ्चमैर्मन्त्रैः क्रमेण त्रयः शेषा ग्रासा भक्षणीयाः । पञ्चसु ग्रासेषु क्रमेण पञ्चभिर्मन्त्रैः पञ्च ग्रासा ग्रसनीयाः । ) पञ्चभ्योऽधिका ग्रासास्तूष्णीमेव भक्षणीयाः ( षट्सु आदितः पञ्च पञ्चभिर्मन्त्रैः क्रमेण, शेषमेकं तूष्णीम् । सप्तसु आदितः पञ्च पञ्चभिर्मन्त्रैः, शेषौ द्वावमन्त्रकावेवाश्नीयात् । एवं पञ्चाधिकग्रासाः कृष्णनवमीं यावत् । कृष्णदशम्यां पञ्चपञ्चभिर्मन्त्रैः । कृष्णैकादश्यां चत्वारस्तत्र द्वाभ्यां पूर्वं शेषैस्त्रिभिः क्रमेण त्रय एवं पूर्ववद्योज्यम् ) ।

जलपानं सकृदेव कर्त्तव्यमन्यथा दोषमाह—

असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् । उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् ॥

यद्येकवारं पीत्वाऽपि द्वितीयक्षणे पिपासया म्रियमाणस्तदा प्राणरक्षणार्थं पुनर्जलपानेऽपि न दोष उक्तोऽत्रिणा—'अत्यये चाम्बुपानेन नोपवासः प्रणश्यतीति'। अन्यथा दोषो भवत्येव। समाप्तौ त्र्यवरान् ( त्र्यधिकान् ) विप्रान् भोजयित्वा गां दक्षिणां दद्यात्। आसमाप्ति प्रत्यहं त्रिषवणस्नानम्। ( त्रिकालस्नानम् ) सौरमन्त्रैः ( ओं उद्वयन्तमसस्परिस्वः पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्मज्ज्योतिरुत्तमम्। ओं उदुत्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम् ॥ ओं चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्राद्या वा पृथिवी अन्तरिक्ष ठ॰ सूर्य आत्मा जगतस्तस्थुषश्च। ओं तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतं श्रृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ इत्येतैः। ) कृताञ्जलिरादित्योपस्थानं गायत्र्या व्याहृतिभिः कूष्माण्डैर्वाऽज्यहोमः। दिवा स्थितिः। रात्रावुपवेशनम्। अशक्तौ शयनम्, यथाशक्ति आपोहिष्ठेति सूक्तम्। एतोन्विन्द्रम्। ऋतञ्चेति त्र्यृचम्। शन्न इन्द्राग्नी, स्वस्तिनो मिमीताम्। पुनन्तु मा देवजानः। ऋषभं विरजम्। रौरवयोधा जपे सामनी च पठेत् ॥ ( तत्र नियम उक्तो लिखितस्मृतौ—

मुण्डस्त्रिषवणस्नायी अधःशायी जितेन्द्रियः।
स्त्रीशूद्रपतितानां च वर्जयेत् परिभाषणम् ॥
पवित्राणि जपेच्छक्त्या जुहुयाच्चैव शक्तितः।

एवं यमेनापि—

आर्द्रवासाश्चरेत्कृच्छ्रं स्नात्वा वस्त्रं न पीडयेत्।
अङ्गुल्यग्रस्थितग्रासं गायत्र्या चाभिमन्त्रयेत् ॥
प्राशयित्वा उपस्पृश्य पुनरेवाभिमन्त्रयेत्।

तथा तेनैव वर्ज्यान्युक्तानि—

गात्राभ्यङ्गशिरोऽभ्यङ्गताम्बूलमनुलेपनम्।
व्रतस्थो वर्जयेत्सर्वं यच्चान्यद्बलरागकृत् ॥ )

तत्र पूर्वोक्तमन्त्राणामसम्भवे गायत्रीं व्याहृतीः प्रणवं वा जपेत्। एतच्च विप्रभोजनदक्षिणादानादिजपान्तं सर्वेष्वपि प्राजापत्यादिव्रतेषु तुल्यम्। तदुक्तं पराशरेण-प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम्। गोद्वयं वस्त्रयुग्मञ्च दद्याद्विप्रेषु दक्षिणाम्॥

तत्र चान्द्रायणप्रयोजनम्।

नोक्तं भवति यावत्तु यस्य कस्य प्रयोजनम्।
न हि तावत् प्रवृत्तिः स्यादप्यार्त्तस्य जनस्य वै॥

तत्र याज्ञवल्क्य आह—

अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु। धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम्॥

उशना अप्याह—

दुरितानां दुरिष्टानां पापानां महतामपि। कृच्छ्रं चान्द्रायणं चैव सर्वपापप्रणाशनम्॥

हारीतोऽप्याह—

चान्द्रायणं यावकश्च तुलापुरुष एव च। गवां चैवानुगमनं सर्वपापप्रणाशनम्॥

अत्रिराह—रजकः शैलुषश्चैव वेणुकर्मोपजीविनः।
एतेषां यस्तु भुङ्क्ते वै द्विजश्चान्द्रायणं चरेत्
आरूढो नैष्ठिके धर्मे यस्तु प्रच्यवते पुनः।
चान्द्रायणं चरेन्मासमिति शातातपोऽब्रवीत्॥

संवर्त्तः- -श्वविडालखरोष्ट्राणां कपेर्गोमायुकाकयोः।
प्राश्य मूत्रपुरीषे वा चरेच्चान्द्रायणव्रतम्॥

आपस्तम्बः—अगम्यागमनं कृत्वा अभक्ष्यस्य च भक्षणम्।
शुद्धिं चान्द्रायणं कृत्वा अथर्वान्ते तथैव च॥
अग्निहोत्रं त्यजेद्यस्तु स नरो वीरहा भवेत्।
तस्य शुद्धिर्विधातव्या नान्याच्चान्द्रायणादृते॥
चान्द्रायणं पराको वा द्विजातीनां विशोधनम्।
प्राजापत्यं तु शूद्रस्य शेषं तदनुसारतः॥ इत्यादि।

बौधायनधर्मसूत्रे—

यथोद्यंश्चन्द्रमा हन्ति जगतस्तमसो भयम्। तथा पापाद्भयं हन्ति द्विजश्चान्द्रायणं चरन्॥

तथा च तत्रैव—'अतोऽन्यतरच्चरित्वा सर्वेभ्यः पातकेभ्यः पापकृच्छुद्धो भवति। कामाय कामायैतदाहार्यमित्याचक्षते। यं कामं कामयते तमेतेनाप्नोति। एतेन वा ऋषयः आत्मानं शोधयित्वा पुरा कर्माण्यसाधयन्। तदेतद्धन्यं पुण्यं पौत्र्यं पशव्यमायुष्यं स्वर्ग्यं यशस्यं सर्वकामिकम्। नक्षत्राणां द्युतिं सूर्याचन्द्रमसोः सायुज्यं सलोकतामाप्नोति॥'

इति चान्द्रायणविधानम्।

---

अथ हविष्यप्रतिपादकवचनस्यार्थः (३२ पृ० मूले)—

हैमन्तिकं मार्गपौषोत्पन्नं, सितास्विन्नं स्वच्छवर्णमधान्यं हविष्यमित्यर्थः। अनेन स्विन्नं वह्निसंयोगेन सस्वेदं (उशिना) धान्यं, तत्तण्डुला आमिषमिति

शेषः। धान्यं त्रिधा भवति, केषांचित्तुषतण्डुला अपि स्वच्छास्ते हविष्योत्तमाः। केषांचित्तुषमात्रमेव स्वच्छं तण्डुला रक्तास्ते साधारणहविष्यरूपाः। येषां तुषतण्डुला अपि रक्तास्ते न हि हविष्यात्मका इत्यर्थः।

मुद्गाः, तिलाः, यवाः प्रसिद्धाः। कलायं (करावो)। कङ्गुः (काउनि) निवारो मुन्यन्नं (ओइरी) यदनुत्तमेव बहुधा जीर्णजलाशये नद्यादौ जायते यच्छस्य-मर्धपक्कमेव शीर्यते। वास्तूकं (बथुआ) हिलमोचिका (सरहोंची) षष्ठिका (शाठी गम्हड़ी) कालशाकं कालिकाशाकं (प्रायः करमी साग भाषा) मूलकं स्थूलशिफा-रूपं शतावर्यादि, केमुकं (केउआं) कन्दम् तद्भिन्नं कन्दं, (आरु खम्हारु आदि)। मूलकमित्यनेन (मूर वा मूली) इति न बोध्यं तत् सामान्यभोजनेऽपि निषिद्धम्। द्रष्टव्यं विश्वकोषे—'पितृणां देवतानां च मूलकं नैवदापयेत्। ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणव्रतम्। वर्जनीयं प्रयत्नेन मूलकं मदिरोपमम्॥' कन्देषु 'आलू' भाषाभाषितम्, न हविष्यम् इदं पादोनशतद्वयवर्षादेव भारते अमेरिकादेशादागतं वस्तु। पुदीनासंज्ञकशाकमपि ईरानदेशादागतम्। सैन्धवं सामुद्रे लवणे हविष्ये। गव्ये गोसम्बन्धिनौ दधिसर्पिषी। दधि प्रसिद्धम्, सर्पिर्घृतम्। तेन माहिषे दधिघृते नहि हविष्ये। स्मृतौ गव्यघृताभावे तिलतैलेन दीपदानमुक्तं, न तु माहिषघृतेन। अनुद्धृ-तसारं पयः। गोदुग्धमपि तावदेव हविष्यं, यावत्तस्मान्नवनीतादिसारं न गृह्यते। पनसो मृदङ्गफलम् (कटहर)। आम्रः प्रसिद्धः। हरीतकी (हरीड)। पिप्पली (पीपरि)। जीरकम् (जीर)। चकाराद् (धनी) नागरं शुण्ठीति प्रसिद्धम्। कञ्चु (अणिकोंछ)। तिन्तिणी (तेतरि इमली) कदली रम्भा (केरा)। लवली (हरफा)। धात्री (अओरा) एतानि फलानि। अगुडं गुडभिन्नम्, ऐक्षवमिक्षुरस-जनितं वस्तु (मिसरी चीनी) हविष्यम्। गुडमामिषम्। अतैलपक्वं, तैलपक्वं हविष्यमप्यामिषम् अतैलपक्वं गव्यघृतदुग्धजलसिद्धं पायसभक्तादिकं हविष्यम्, चणकं (चना वा बूट) आढकी (राहड़ि)। माष (उड़ीद)। (बोड़ा, कुरथी, कोद्रव, मडुआ, आंसु धान) इति सर्वमामिषम्। गोधूमं न हविष्यं न चामिषम् उभय-त्रानुल्लेखात्। परन्तु यवाभावे गोधूमग्रहणमिति स्मृतिषु दर्शनात्, सत्यदेवकथायां 'गोधूमस्य च चूर्णकम्' इति च लेखप्रामाण्याद् दैवे कर्मणि बहुधा प्रयुज्यते। हवि-ष्यान्नेषु यवा एव मुख्याः। तदनु षष्टिकाधान्यं, ततो हैमन्तिकमेवं क्रमः। कार्त्तिके तु बहूनि हविष्याण्यप्यभक्ष्याणि उक्तानि। मरीचं न हविष्यम्। इति।

आमिषप्रतिपादकवचनाभिप्रायः (पृ० ३३ मूले)—

प्राण्यङ्गचूर्णं शुण्डा (सूंडा) दिकृमिजीवाण्ववमिश्रितं हविष्यमप्यामिषम्॥ अनेन शुक्तिशम्बूकास्थिसिद्धं चूर्णमप्यामिषं, यत्तमालपत्रे ताम्बूले च प्रायो बहुत्रोपयु-ज्यते चर्माम्बु चर्मनिर्मितपात्रगतजलं (मरुदेशे बहुधाऽस्य व्यवहारः) जम्बीरं जम्बीरजातिकं बीजपूरकं 'नेवो' इति प्रसिद्धम्। एतद्भिन्न बीजपूरकम्। (कमला, कागजी आदि) हविष्यमित्यर्थः। वा बीजपूरकं 'बेदाना' प्रसिद्धम् अयज्ञशिष्टं देवपितृ-यागशेषभिन्नं माषादि माषजातिकमामिषम्। अनेन यज्ञोर्वरितं तदपि हविष्यवदेवे-

त्यर्थः । यद्धविष्यमपि विष्णोरनिवेदितमसमर्पितं तदप्यामिषम् । यदामिषमपि विष्णवे समर्पितं तद्धविष्यमेवेति शेषः । दग्धं भर्जितं होरिकादिकं, धानादिकं वा हविष्यजातिकमप्यन्नमामिषम् । यथा कलायो हविष्यं तल्लताफलपत्रं शुष्कतृणमिश्रितं कृत्वा यदग्निज्वालया प्रज्वाल्यते, तत्र तच्छेषं दग्धप्रायमेवान्नं होरिका कथ्यते । एवं यवभर्जनेन धाना उत्पद्यन्ते । मसूरं स्वरूपेणैवामिषम् । इत्यष्टधाऽष्टप्रकारकमामिषम् । तथाऽग्रे वचनान्तरे पुनर्मसूरिकाया उक्तत्वात् । गोछागीमहिषीदुग्धादिति, गोच्छागी अप्रसूता गौः, महिषी गोमहिषी मृतवत्सा गौः, अनयोर्दुग्धादन्यदन्यतरं दुग्धं तु आमिषम् । महिष्या दुग्धमामिषम् । दुग्धमेव केवलं न हि तद्दधिघृतादिकमपि । सर्वमामिषमित्यर्थः । एवमजायाः मेध्याश्च दुग्धमामिषम् । एवं गोभिन्नसकलपशुदुग्धादिकमामिषम् । गोष्वपि या स्वस्तनपायिनी, अमेध्य ( विष्ठादि ) भोजिनी, अन्यवत्सपायिनी, स्तनरोगिणी, तासां दुग्धादिकं न भक्ष्यमिति । मानुष्या अपि दुग्धमभक्ष्यम् ।

( ८ अथ चन्द्रोदयसमयसाधनम् , ( पृ० ३६ मूले ) ।

तत्र 'दर्शः सूर्येन्दुसङ्गमः' इत्युक्तलक्षणेऽमान्ते रविचन्द्रयोर्योगाद् द्रव्यपेक्षया चन्द्रगतेरधिकत्वात्तदुत्तरक्षणे सूर्यात् पूर्वाभिमुखगत्यन्तरेण चन्द्रस्य पुरतो गतत्वात्सूर्योदयानन्तरं प्रवहवायुगत्याक्षिप्तस्य चन्द्रस्योदय एवं सूर्यास्तात्परस्ताच्चन्द्रस्यास्तोऽत एव सूर्यास्तात्पूर्वमेवोदयश्चन्द्रस्य शुक्लपक्षे भवति । एवं सूर्याद्गत्यन्तरकलाभिरन्तरितश्चन्द्रः पूर्णान्ते षड्भान्तरेऽतो यदा सूर्योऽस्तक्षितिजे, तदा चन्द्र उदयक्षितिजे भवति । एवं पूर्णिमाऽन्तोत्तरक्षणे सूर्यात्पृष्ठतः षड्भान्तरे चन्द्रस्य वर्तमानत्वाद्रवावस्तक्षितिजस्थे चन्द्रस्य क्षितिजाधोवर्तमानत्वात्कियद्भिः कालैस्तस्योदयो भविता इति जिज्ञासा ।

अर्थाच्छुक्लपक्षे सूर्यास्तात्परं चन्द्रास्तः । कृष्णपक्षे तु सूर्यास्तात् परं चन्द्रोदयो भवति । स च कियता कालेन तदर्थं प्राचीनवचनमिदम्—

तिथिगुणितं रजनीपरिमाणं यमरहितं, सहितं सितपक्षे ।
विषयशशाङ्कविभाजितलब्धं भवति विधूदयमस्तमयं च ॥

यथा कृष्णपञ्चम्यां तिथौ रात्रिमानम् = ३०।००, तिथिसंख्या ५ अनया गुणितम् = १५०।००, कृष्णपक्षत्वाद् द्वाभ्यां रहितम् = १४८।०० पञ्चदशभिर्भक्तम् =
$\frac{१४८।००}{१५} = ९ + \frac{१३}{१५}$ = ९।५२ लब्धं चन्द्रोदयमानम् ।

शुक्लपञ्चम्यां तु तदेव रात्रिमानं कल्पितम् ३०।०० इदं तिथि ५ गुणितम् = १५०।००, शुक्लपक्षत्वाद् द्वाभ्यां युक्तम् = १५२।०० पञ्चदशभिर्भक्तम् = $\frac{१५२।०}{१५\ \ ०}$ = १०।०८ = लब्धमिदं चन्द्रास्तमानम् । एवमेवान्यस्यामपि तिथौ चन्द्रोदयास्तसमयमानं साधनीयम् । यद्यपीदं महत्स्थूलं तथाऽपि सूक्ष्मरीत्या तदुदयास्तकालसाधनस्य प्रचुरप्रयाससाध्यत्वात् सकलसाधारणजनानामतीव दुर्घटत्वादयमेव स्थूलोऽङ्गीक्रियते ।

अथवा शुक्लपक्षे सूर्यास्तसमये वर्त्तमानतिथेर्गतघटिकाः षष्टिघ्नगततिथुषु युक्तास्ताश्च स्वषड्गामगुणितास्तदा तदानीं रविचन्द्रयोरन्तरकलाः सिद्धा अर्थाचाभिरस्तक्षितिजनिष्ठरवेः सकाशात्पूर्वस्याम् पुरतः क्षितिजोर्ध्वप्रदेशे चन्द्रोऽन्तरितो दृश्यते, स च तदन्तरकलोत्पन्नकालेनास्तं गमिष्यति। एवं कृष्णे साधिततदनन्तरकलोनखाष्टेन्दुकलाभिरस्तक्षितिजनिष्ठरवेः पृष्ठतः पश्चिमस्याम् क्षितिजाधःप्रदेशे चन्द्रोन्तरितो भवति। सूर्यास्तानन्तरं कियता कालेन चन्द्र उदयक्षितिजे यास्यतीति जिज्ञासायाम् सषड्भसूर्यस्य चन्द्रस्य चान्तरकलाः साध्याः। अर्थाद्यदा सूर्यस्यास्तस्तदैव सषड्भसूर्यस्योदयो भवति। तत्र सषड्भसूर्योदयात्कियता कालेन चन्द्रोदय इति साध्यमस्ति। अत्रोभयत्र स्थितौ कालज्ञानार्थमनुपातः--चन्द्रगतिकलोत्पन्नासुयुतषष्टिघटिकाभिः षष्टिघटिकास्तदा साधितान्तरकलाभिः का इत्यनुपातेन कालज्ञानं भवति। अत्र गतिकलोत्पन्नासु स्थाने सुखार्थं गतिकलातुल्यासव एव गृहीतास्तत्र यथा शुक्लपञ्चम्यन्तेऽन्तरकलाः

$= \text{५} \times \text{१२} \times \text{६०} = \text{३६००}$ आभ्यः कालः$= \dfrac{\text{६०} \times \text{३६००}}{\text{२१६०००} \times (\text{७९०।३५})} = \dfrac{\text{२१६०००}}{\text{२२३९०।३५}}$

$= \dfrac{\text{११६६४००००}}{\text{१३४३४३५}} = \text{८।४१}$ अत्रापि स्थूलता वर्त्तते एव यतश्चन्द्रस्यैकपरिवर्त्तनं स्वसावनदिने भवति गतिकलोत्पन्नासुयुतषष्टिघटिका तु रविसावनदिनेऽतस्त्रैराशिकविधानं न साधु तथाऽपि पूर्वप्रकारापेक्षया स्वल्पान्तरेति।

### (९) अथ नवान्नभोजननिर्णयः, (पृ० ४४ मूले)

अथ नवान्नभोजनमित्यनेन विहितसमये देवपितृसमर्पणपूर्वकं नूतनान्नस्य प्रथमभोजनम्।

तदुक्तं स्मृतिसारे--व्रीहिशालियवाम्बूनि देवेभ्यो नूतनानि च।
पितृभ्योऽप्यसमर्प्याथ न भुञ्जीत शुभेच्छुकः॥
तस्माच्छुभे दिने देवान् पितॄन् भक्त्या निवेद्य वै।
स्वयं च मुदितो भूत्वा भुञ्जीत स्वजनैः सह॥

तथा च शब्दकल्पद्रुमे--
अदत्वा यस्तु भुञ्जीत नवान्नानि कथंचन। न तस्य धर्मो विद्येत एवमेव न संशयः॥

तथा च शातातपः--
नवोदके नवान्ने च गृहप्रच्छादने तथा। पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च॥

तथाचोक्तं वायुपुराणे--
अकृताग्रयणं चैव धान्यजातं द्विजोत्तम!। राजमाषानणूंश्चैव मसूरांश्च विवर्जयेत्॥

येन नवजातान्नेन यावत्पार्वणं नाचरितं तत्तात्रदकृताग्रयणं हविष्यान्नमप्यामिषवद्व्यवहर्त्तव्यम्, तन्न पूर्वं स्वयं भक्षणीयमित्यर्थः। राजमाषा (बोड़ा) अणवः (अकटामिसिया), अनेन नितराम् तदावश्यकत्वं प्रतिपादितम्।

अथ ये पार्वणानधिकारिणो बालकाः स्त्रियश्च तेषाम् कृते अभिनववर्धमाननिबन्धधृतस्मृतिरेवम्--

"देवताभ्यो द्विजायाथ दत्त्वान्नं प्राशयेन्नवम् ।"

पार्वणासमर्थस्यायमेवान्नसंस्कारप्रकारः ।

अथ तन्नवान्नं त्रिविधं,--शरदि (कार्तिकस्याविहितत्वादाश्विनशुक्लपक्षे) व्रीहिधान्येन, हेमन्ते (पौषस्याविहितत्वान्मार्गशुक्लपक्षे) हैमन्तिकान्नेन, वसन्ते (चैत्रस्याविहितत्वाद्वैशाखशुक्लपक्षे) यवेन पार्वणं कर्त्तव्यम् ।

तत्र हैमन्तिकनवान्नविषये समयनियम उक्तो वराहपुराणे--

वृश्चिके पूर्वभागे तु नवान्नं शस्यते बुधैः । अपरे क्रियमाणे तु धनुष्येव कृतं भवेत् ॥

धनुषि यत् कृतं श्राद्धं मृगनेत्रासु रात्रिषु ।

पितरस्तन्न गृह्णन्ति नवान्नामृत (मिष) काङ्क्षिणः ॥

अत्र वृश्चिके पूर्वभागे त्रयोदशांशाभ्यन्तरे,--अयमेवार्थो बहुभिः स्मृतिनिबन्धबन्धकैः किल कृतो वचनान्तरप्रामाण्यात् ।

तथा चोक्तं ज्योतिःसारसमुच्चये--

त्रयोदशांशपर्यन्तं वृश्चिके च यदा रवौ । स्वच्छे पक्षे च चन्द्रे च वारे शगुरुसंज्ञके ॥

नवान्नं तत्र कुर्वीत शुभे चन्द्रे च ऋक्षके ॥

तथा च कविवरपण्डितविद्यापतिठक्कुरकृतज्योतिः सारसमुच्चये--

वृश्चिकस्थे रवौ त्यक्त्वा वासराणि त्रयोदश । नवान्नैर्विहितं श्राद्धं धनुष्येव कृतं भवेत् ॥

परन्तु राशेस्त्रिंशदंशात्मकत्वात्पूर्वभागे पञ्चदशांशाभ्यन्तरे इत्येवार्थस्तावत्साधारणोपस्थित्याऽऽयाति । कथं तर्हि त्रयोदशांशाभ्यन्तर इति पूर्वभागस्यार्थोऽनेकनिबन्धेषूपलभ्यते, तत्र हेतुस्तु म० म० पं० वाचस्पतिमिश्रमहोदयैः स्वकीयद्वैतनिर्णये व्यक्तीकृतः--'त्रयोदशांशानन्तरं धनुरतिदेशः'। सायनराश्यभिप्रायेणेति ।

अर्थात्सायननिरयणभेदाभ्यां द्विविधा गणना भवति । तत्र यद्यपि निरयणगणनाऽपेक्षया सायनगणनैव शीतोष्णदिनह्रासवृद्धिफलजलसस्योत्पत्तिपाकनिदानीभूतत्वेन प्रधाना, तथाऽप्येतद्देशे निरयणगणनानुरोधेनैव पञ्चाङ्गप्रचलनादुभयगणनाऽनुरोधेनात्र मार्गशीर्षमासो गृहीतः । यथाऽधुना धनायनांशावसरे धनुषो निरयणसंक्रमणात्पूर्वमेवायनांशसमसौरदिनैः सायनधनुः संक्रमणं भवति । तत्तु निरयणवृश्चिकसंक्रमणात्पश्चादयनांशोनत्रिंशदंशैर्भवति, इति प्रदर्शितयुक्त्या तदानीन्तनसप्तदशमितायनांशत्वेन सप्तदशोनत्रिंशदंशानाम् त्रयोदशसमत्वाद् वृश्चिके निरयणमानेन त्रयोदशांशान्ते सायनमतेन वर्ज्यपौषमासारम्भत्वात् सचार्थस्तत्समये एव युक्ताऽस्ति । अयनांशानाम् चलत्वात्सार्वत्रिकस्तादृशोऽर्थो न करणीयोऽर्थादधुना सावयवैकविंशतिमितायनांशे सावयवाष्टानामंशानामभ्यन्तरे एवोभयगणनाऽनुरोधेन मार्गस्य शुद्धविहितसमयलाभात्तदन्तरे एव नवान्नश्राद्धादि विहितं सिद्ध्यति न हि त्रयोदशांशाभ्यन्तरे । किञ्च पूर्वं चतुर्दशांशादौ सायनपौषमासपातेन यो दोषः स चाधुना सावयवाष्टांशोत्तरसमये एवापतति । एवमृणायनांशसमये सप्तदशेऽयनांशे निरयणवृश्चिकसंक्रमात्परमेव सायनवृश्चिकसंक्रान्तिसम्भवः । तत्रोभयगणनानुरोधेन सायनवृश्चिकसंक्रमणा-

त्परं निरयणधनुःसंक्रमणपर्यन्तं शुद्धमार्गमासः। अर्थान्निरयणवृश्चिकसंक्रान्तितः परमयनांशाभ्यन्तरे सायनगणनया कार्त्तिकत्वात् तस्य वर्ज्यत्वात्। अयनांशसंख्यकांशान्तरे मृगनेत्रारात्रीर्वर्जयित्वा कार्यम्। अत्र 'अपरे क्रियमाणे तु धनुष्येव कृतं भवेत्' इत्यपि सायनगणनाऽनुरोधं प्रकटयति पोषयति च। अथैवं सप्तविंशत्ययनांशे पूर्वभागस्य त्रिमितांशाभ्यन्तरे इत्यर्थः स्यात् परन्तु विंशतिकलाधिकत्रिमितांशान्तं यावद्विशाखास्थरवित्वेन वर्ज्यमतस्तस्मिन् समये मार्गेऽनवकाशाद् नवान्नभोजनादिकं न भविष्यति, तदानीं तु माघे कर्त्तव्यम्। वृश्चिके नवान्नभक्षणासंभवे माघादौ श्राद्धपूर्वकं नवान्नभक्षणं युज्यते एवेति श्राद्धविवेकः। अस्तु तावदियं नवीना प्रद्धतिः।

अथ 'मृगनेत्रासु रात्रिषु' इत्यत्र मृगनेत्राप्रमाणम्—

वृश्चिकस्थरवेः शेषदशसंख्यदिनेषु च। दिनानि दश माघस्य पौषस्य सकलं दिनम्॥
मृगनेत्रा समाख्याता नवान्नं तत्र वर्जयेत्।

अनेन वृश्चिकस्य विंशत्यंशपर्यन्तं नवान्नयोग्यसमयः। तथा चान्यमतेन मृगनेत्राप्रमाणम्—

वृश्चिके सप्त रात्राणि त्रिंशद्रात्राणि कार्मुके। मकरे सप्त रात्राणि मृगनेत्राः प्रकीर्त्तिताः।

अत्र वृश्चिकान्तिमसप्तरात्राणि। धनुषः सर्वाः। मकरे सप्त, एता मृगनेत्राः। अनेन तु वृश्चिकस्य त्रयोविंशत्यंशपर्यन्तसमयो नवान्ने विहित इत्यायाति।

तथा च गौडीयवर्षकृत्ये—

दिनत्रयाधिके विंशे दिने मार्गस्य वै गते। मृगनेत्रा स्मृता रात्रिर्नवान्नं तत्र वर्जयेत्।
तथा च कृष्णपक्षे भृगुदिने विशाखास्थे विवस्वति। एकविंशांशकादूर्ध्वं नवान्नं परिवर्जयेत्॥

इत्यस्यायमाशयः–आदितो दिनत्रयं विशाखास्थसूर्येण प्रतिषिद्धम्। अन्ते च सप्तदिनानि मृगनेत्रात्वेन वर्जितानि। मध्येऽवशिष्टा विंशतिवासरा एकविंशत्यासन्नाः।

तथा चोक्तं तिथितत्त्वे–

ज्येष्ठाशेषार्धगे सूर्ये मृगनेत्रानिशात्मके। नवान्नविहितं श्राद्धं जन्मचन्द्रतिथौ न च॥
आश्लेषा कृत्तिकाज्येष्ठामूलाजपदभेषु च। भृगुभौमदिने रिक्तातिथौ नाद्यान्नवौदनम्॥

अत्र ज्येष्ठाशेषार्धगे सूर्ये दोषदर्शनात्तत्पूर्वार्द्धे नवान्नस्य विहितत्वं सिद्ध्यति। तत्र ज्येष्ठाऽन्ते वृश्चिकान्तत्वात्प्रत्येकचरणप्रमितनवांशत्वाज्ज्येष्ठार्धं यावत्सप्तनवांशा विंशति कलाधिकत्रयोविंशत्यंशसमाः स्युः। तेन तस्याभ्यन्तरे विहितत्वं सिद्धम्। एवं केषांचिन्मतेन त्रयोदशांशाभ्यन्तरे केषांचिन्मतेन 'त्रयोविंशत्यंशाभ्यन्तरे कस्यचिन्मतेन पञ्चदशांशाभ्यन्तरे कस्यचिन्मतेन विंशत्यंशाभ्यन्तरे विहितसमयः सिद्ध्यति तत्र कस्य मतं ग्राह्यमित्यत्र विचारः—तत्र सायनगणनानुरोधेनाष्टांशाभ्यन्तरे। तदुपेक्षायां त्रयोदशांशाभ्यन्तरे वा पञ्चदशांशाभ्यन्तरे विहिततिथ्यादौ विधेयम्। तत्रापि दोषैरनवकाशे मृगनेत्रातः प्राक्कर्तव्यमिति द्वितीयः पक्षः। तत्र विद्वद्वरैरपूछशर्ममहोदयैर्निर्णयार्के त्वेवं विलिखितम्। 'तथा च पञ्चदशांऽशके मिथिलायाम् व्यवहारो वृत्तस्तथाहि, प्राचीनपद्यम्—

"शाक्रोदितो वृश्चिकपूर्वभागे विद्वन्मते पञ्चदशे तदंशे ।
श्री भैरवेन्द्रो नृपमौलिरत्नं व्यधाद्बुधख्यातयशा नवान्नम् ।'

इति श्राद्धदर्पणकृतोक्तम् । ननु वृश्चिके परभागे नवान्ननिषेधमुक्त्वा पुनर्मृग-नेत्रारात्रिनिषेधो व्यर्थ एव वृश्चिकान्ते मृगनेत्राणां परभागान्तर्भूतत्वादितिचेत् ? उच्यते तर्हि श्रृणूत्तरम्—यदि त्रयोदशांशाभ्यन्तरे शुक्लपक्षाद्यलाभस्तदा तदनन्तरमपि मृग नेत्रारात्रिप्रारम्भात् पूर्वं चतुर्दशांशादौ च वृश्चिके नवान्नं कार्यमित्यर्थंलाभायात्यन्त-निषेधपरत्वेन सार्थकत्वमिति वामदेवोपाध्यायादीनां सम्मतम् तत्रोक्तं ज्योतिषे—

सूर्ये चैव विशाखगे स्मरतिथौ तारे त्रिजन्मान्विते
नन्दामन्दमहीजकाव्यदिवसे पौषे मधौ कार्त्तिके ।
मेषग्राहिशिवेषु विष्णुशयने कृष्णे शशिन्यष्टमे
श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम् ॥

विशाखगे सूर्येऽर्थाद्वृश्चिकसंक्रमाद्विंशतिकलाधिकांशत्रये । विशाखान्तिमचर-णस्यैव वृश्चिकराश्यन्तर्गतत्वात् । तथा प्रतिपत्षष्ठ्येकादशत्रयोदशीतिथिषु प्रथमतृतीय पञ्चमसप्तमतारासु शनिमंगलशुक्रदिनेषु पौषचैत्रकार्त्तिकमासेषु पूर्वफल्गुनीपूर्वाषाढ़पूर्वं-भाद्रभरणीमघाऽश्लेषाऽऽर्द्रानक्षत्रेषु हरिशयने ( अत्र सौरमानेन मासग्रहणाद्यदा कार्त्तिकशुक्लप्रतिपद्द्वितीयादौ वृश्चिकसंक्रान्तिसम्भवेऽपि हरिशयनात्पूर्वसमयस्य विशेषनिषेधत्वेन कार्त्तिकस्य पूर्वोक्तत्वादपि शुक्लैकादश्यन्तसमये ) । व्रीहिपाक-निमित्तकस्य नवान्नस्याश्विनशुक्लपक्षे विधानाचास्य हरिशयनान्तर्गतत्वादपि न दोषः । दोषस्तु हैमन्तिकनवान्ननिमित्तक एव । कृष्णं कृष्णपक्षेऽष्टमचन्द्रे नवान्नकर्त्तुरिति शेषः । तस्यैव पुरतोऽनिष्टफलदर्शनात् । एषु कृतं नवान्नविहितं पार्वणश्राद्ध-नवान्नभोजनञ्च पुत्रधनक्षयकरम् । अत्रायनांशानां चलत्वात्सायनानुरोधेनांशसीमा न कृतेति मन्ये ।

अत्र शुक्रवारनिषेधस्तु नवान्ननिमित्तकश्राद्धकरणपक्षेऽस्ति । यतः—

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि । एषु श्राद्धं न कुर्वीत पुत्रदारधनक्ष-यात् ॥ इति रत्नावल्यादिलिखितत्वात् । तथा च नवान्नमधिकृत्य पक्षधरोयमु-बोधे—नन्दा त्रयोदशी रिक्तास्तिथयः श्राद्धकर्मणि । वर्जनीयास्तथा शुक्रः सर्वदा सूरिभिः पुनः ॥

इति वचनेन च नवान्ननिमित्तकश्राद्धे शुक्रस्याविहितत्वात्, तथा च 'वारे गुरु-भृगुशीतगुभास्कराणां नव्यान्नभोजनमभीष्टकरं नराणाम्' इति कृत्यचिन्तामणि-वचनाद्यस्य नवान्ननिमित्तकं पार्वणश्राद्धं न तेन, शुक्रवारे नवान्नभक्षणं कार्यमिति तत्त्वनिर्णयोक्तेश्च शुक्रवासरो नवान्नभक्षणे प्रशस्तस्तथापि 'सूर्ये चैव विशाखगे स्मर-तिथौ' इत्यादिसर्वदेशस्मृतिकाराहतवचनेन स च वारो वर्ज्य एव विज्ञेयः । तद्वच-नान्ते पुत्रार्थनाशप्रदमिति नवान्नभोजनविधानेऽपि दर्शनात् ।

अत्र कृष्णपक्षः सम्पूर्णो निषिद्ध इति रुद्रधरोपाध्यायवाचस्पतिमिश्रपक्ष-

धरमिश्रकेशवमिश्रा आहुः। वामदेवोपाध्यायैस्तु—कृष्णपक्षनिषेधः पञ्चम्यूर्ध्वमेव 'शुक्लपक्षे विशेषेण कृष्णेऽप्यापञ्चमन्दिनम्' इतिवचनाद् विहितः। तथा च व्यवहाररत्ने 'पञ्चम्यन्ते सितेतरे' इति। यदि हरिशयन-शुक्रकुजशनि-नन्दा-रिक्तात्रयोदशी-विशाखास्थसूर्यवर्ज्यनक्षत्रादिदोषैः कार्त्तिकशुक्लपक्षो वृश्चिकार्कयुक्तोऽपि सङ्कुलो भवेत्तदा मार्गकृष्णपक्षीयपञ्चम्यवधिकसमयेऽपि कर्त्तव्यमेव। यैस्तु सकलः कृष्णपक्षो निषिद्ध्यते तेषाम् मते शुक्लपक्षे शुद्धदिनलाभे सति तन्निषेधो बोध्यः। तथा भोजराजः—

चैत्रे पौषे कृष्णपक्षे नवान्नं नाचरेद्बुधः। भवेजन्मान्तरे रोगी पितॄणां नोपतिष्ठते॥

इति वचनस्य चैत्रे यवपाकनिमित्तकस्य, पौषे हैमन्तिकस्य, कृष्णपक्षे व्रीहिपाकनिमित्तकस्य क्रमेण निषेध उक्तोऽत एव कृष्णपक्षे हैमन्तिकनवान्नस्य विहितत्वमुक्तं द्वैतनिर्णये म. म. नरहरिमिश्रैस्तद्बहुसम्मतत्वाद्व्यवहारविरोधाच्चोपेक्षणीयमेव।

तथा चोक्तं रत्नाकरेण—

शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम्। सुतिथौ सुमुहूर्त्ते च नवान्नफलकाङ्क्षिणः॥

नवान्नश्राद्धं कुर्युरिति शेषः। तथैवोक्तं ज्यौतिषे—

नवान्नं नैव नन्दायां न प्रसुप्ते जनार्द्दने। न कृष्णपक्षे धनुषि तुलायां नैव कारयेत्॥

तथा च कामधेनुः—

कृष्णपक्षे नवान्नन्तु न कुर्यान्मानवो यतः। पितरस्तन्न गृह्णन्ति नवान्नामिषगर्द्धिनः॥

तथा च—

कृष्णपक्षे नवान्नं तु न कुर्यान्मानवो यतः। पितरस्तन्न गृह्णन्ति दाता तु नरकं व्रजेत्॥

एषु वचनेषु कृष्णपक्षस्य स्पष्टतया निषेधदर्शनाद्भोजराजवचनस्य क्रमगतार्थकल्पनं नरहरिमिश्राणां न सर्वसम्मतमिति। तथा च जन्मनक्षत्रमपि वर्ज्यमुक्तं भारते—

'जन्मनक्षत्रे न कुर्वीत नवान्नं कर्म कुत्रचित्।'

तथाच रत्नकलापे—

पूर्वेन्द्रपैत्राहिशतार्द्रयाम्यजन्मान्यऋक्षेषु कुजार्किभिन्नाः।
वाराः प्रशस्तास्तिथयो नवान्ने गोमीनकन्यामिथुनं च लग्नम्॥

तथा च—नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि।
नवान्नं नैव कर्त्तव्यं सर्वथा हानिमाप्नुयात्।

तथा च—

आश्लेषाकृत्तिकाज्येष्ठामूलाजपदभेषु च। भृगुभौमदिने रिक्तातिथौ नाद्यान्नवौदनम्॥

तथा चोक्तं भुजबलभीमेन—

नवान्नभोजनं नृणां मृदुक्षिप्रचरैः शुभम्। शुभेक्षितयुते लग्ने विषनाडीविवर्जिते॥
नवान्नं नैव नन्दायां मासे पौषे मघौ तथा।

एवं मुहूर्त्तचिन्तामणौ—

नवान्नं स्याच्चरक्षिप्रमृदुभे सत्क्षनौ शुभम्। विना नन्दाविषघटीमधुपौषार्किभूमिजान्॥

अत्र चरसंज्ञकाः स्वातीपुनर्वसू श्रवणधनिष्ठाशतभिषाः। क्षिप्रसंज्ञकाः हस्ताश्वि-

नीपुष्याभिजितः। मृदुसंज्ञकाः मृगशिरोरेवतीचित्राऽनुराधाः। एतेषु नक्षत्रेषु शुभलग्ने प्रतिपदेकादशीषष्ठीतिथिविषघटीचैत्रपौषशनिकुजान् विहाय नवान्नं सदित्यर्थः। अत्र रिक्तात्रयोदशीतिथयः। शुक्रवासरः। कृष्णपक्षश्च। कार्त्तिकोमासः। विष्णुशयनम्। विशाखास्थसूर्यश्चैतेऽन्यत्र वर्जिता अप्यस्मिन् वचने वर्ज्यत्वेन नोक्ताः तथा चाश्लेषाकृत्तिकेत्यादौ नन्दाग्रहणं न कृतम्। अतोऽत्र सकलवचनप्रतिपादितवर्ज्यतिथिनक्षत्रदिनपक्षमासानेकत्र सङ्कलय्य तेषु न कर्त्तव्यम्। न ह्येकदेशिवचनबलावलम्बेनान्यवचनविरोधेन च केनापि व्यवहर्त्तव्यम्। सकलवचनानां मान्यत्वात्। विषघटी तु तत्तन्नक्षत्रे भिन्नभिन्नदण्डमानात्परं चतस्रो घटिका भवन्ति। ता अन्ते प्रतिपादयिष्ये। अथ भोजराजः--

ब्रह्माविष्णुबृहस्पतीशशधरो मार्त्तण्डपौष्णादितौ
मैत्रे चित्रविशाखवायुधनभे मूलाश्विवह्नौ तथा।
शाक्रे वारुणऋक्षके शुभदिने श्राद्धं नवं शस्यते
नन्दा भार्गवभूमिजेषु न भवेच्छ्राद्धं नवान्नोद्भवम्॥

ब्रह्मा रोहिणी, विष्णुः श्रवणम्, बृहस्पतिः पुष्यम्। शशधरो मृगशिरः, मार्त्तण्डो हस्तः, पौष्णं रेवती। अदितिः पुनर्वसू, मैत्रमनुराधा, चित्रा, विशाखा, वायुः स्वाती, धनभं धनिष्ठा, मूलम्, अश्विनी वह्निः कृत्तिका, शक्रो ज्येष्ठा, वारुणं शतभिषा, एतेषु नक्षत्रेषु शुभदिने पूर्णबलचन्द्रबुधगुरूणाम् दिनेषु नवान्ननिमित्तकश्राद्धं शस्यते। शेषं स्पष्टम्। तथा च कृत्यचिन्तामणौ--

हरियुगलेऽदितियुगले पूषायुगले विराञ्चयुगले च।
करपञ्चकोत्तरेषु च नवान्नफलभक्षणं शस्तम्॥

हरियुगले श्रवणधनिष्ठे, अदितियुगले पुष्यपुनर्वसू, पूषायुगले रेवत्यश्विन्यौ, विरञ्चियुगले रोहिणीमृगशिरसी, करपञ्चकोत्तरेषु हस्तचित्रास्वातीविशाखाऽनुराधोत्तरफल्गुन्युत्तराषाढोत्तरभाद्रेषु। शेषं स्पष्टम्। तथा च रत्नकलापे--

पौष्णाश्वितिष्यपवनादितिमित्रचित्रामूलानलाश्रवणशीतगभस्तिशक्राः।
ताराऽनुकूलदिवसे शशिनि प्रशस्ते धन्या नृणामभिनवौदनभोजनेषु॥

अत्र मूलस्य विहितत्वमन्यत्राविहितत्वं चेत्यत्रायं भावः--श्राद्धशेषान्नभोजनं मूलनक्षत्रे नवान्ने कृतेऽप्रशस्तम्। अत्र सर्वसम्मतनक्षत्राणि—

अश्विनी, रोहिणी, मृगशिरा पुनर्वसू, पुष्यम्, हस्तः, चित्रा, स्वाती, विशाखा, अनुराधा, श्रवणा, धनिष्ठा, रेवती, एतान्युत्तमोत्तमानि। मतत्रयविहितानि—-

उत्तरफल्गुनी, ज्येष्ठा, उत्तराषाढा, शतभिषा, उत्तरभाद्रम्, एतानि उत्तमानि।

मतद्वयविहिते--कृत्तिकामूले साधारणे (मध्यमे) तत्र कृते नवान्नश्राद्धे शेषान्नं न भक्षणीयम। शेषाणि भानि वर्ज्याणीति।

तत्र वृश्चिकत्रयोदशांशाभ्यन्तरसमयः कृष्णपक्षहरिशयनरिक्तानन्दात्रयोदशी शुक्रशनिकुज-वासरवर्ज्यनक्षत्रविशाखास्थसूर्यादिदोषैः सङ्कुलो लभ्यते, तदा पञ्चद-

शांशान्तरे विंशत्यंशान्तरेऽपि कर्त्तव्यमेव; तथा प्रमाणदर्शनात् । यदि तत्राप्यनवकाशस्तदा माघे कार्यन्न तत्रांशसीमानियमः फाल्गुनस्य विहितत्वात् । केवलं पञ्चतिथिनक्षत्रदिनानामेव । तत्पार्वणन्तु

'पाकं विनैवामान्नेन कर्त्तव्यं द्विजैरपि ।'

तथा चाह हारीतः–श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम् ।

अमावास्यादिनियतं माससंवत्सरादृते ॥ इति ।

मासिकं सांवत्सरिकञ्च श्राद्धं वर्जयित्वा अमावास्याश्राद्धमादिशब्दान्नवान्नादि-नियतश्राद्धमामान्नेनैव द्विजैरपि विधेयमित्यपरार्कः । अत्र आमलक्षणं तु वशिष्ठेनोक्तम्

सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते । आमं वितुषमित्युक्तं सिद्धमन्नमुदाहृतम् ॥

अग्निजलसंपर्करहितमेव धान्यं तुषनिर्मुक्तं सदामान्नमुच्यते । तच्च पूर्वाह्णे एव विधेयम् । तथा चोक्तं शातातपेन--

आमश्राद्धन्तु पूर्वाह्णे एकोद्दिष्टन्तु मध्यतः । पार्वणञ्चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥

अत एवास्माकं देशे पूर्वाह्णसमय एव नवान्नश्राद्धमाचरन्ति जनाः ।

अथ विषघटिकाः कश्यपोक्ताः--

विपद्बाणा ५० वेददस्राः २४ खरामा ३० व्योमसागराः ४० ।
वेदचन्द्राः १४ चन्द्रदस्राः २१ खरामाः ३० व्योमबाहवः २० ॥
नेत्राग्नयो ३२ व्योमगुणाः ३० शून्यदस्राः २० गजेन्दवः १८ ।
क्ष्माबाहवो २१ वियद्दस्राः २० शक्राः १४ चन्द्राः १ खभूमयः १ ॥
वेदचन्द्रा–१४ स्तर्कबाणाः ५६ वेददस्राः २४ खबाहवः २० ॥
व्योमेन्दवो १० व्योमचन्द्राः १० धृतय—१८ स्तर्कभूमयः ।
वेदाश्विनः २४ खरामाः ३० स्युर्दास्राद् घटिकाः क्रमात् ॥
आभ्यः पुरस्तात् क्रमशश्चतस्रो विषनाडिकाः ।
ऋक्षाद्यन्तघटीनिघ्नाः षष्टिभक्ताः स्फुटाः स्मृताः ॥
विषनाडीदोषदुष्टं लग्नं सर्वगुणान्वितम् ।
शुभैः सर्वैश्च संयुक्तमपि पञ्चेष्टकं त्यजेत् ॥

इति नवान्नभोजननिर्णयः समाप्तः ।

---

## अथ संक्रान्तिनिर्णयः ।

तत्र पूर्वराशितोऽपरराशौ रविबिम्बकेन्द्रस्य यत् क्रमणमाक्रमणं तदेव संक्रमणं संक्रान्तिर्वेत्युच्यते । परन्तु पूर्वापरराशिसन्धिबिन्दुगतसूर्यबिम्बकेन्द्रकालस्यातिसूक्ष्मत्वात् तदानीं स्नानदानादिविधानानर्हत्वात्तद्बिम्बपूर्वप्रान्तस्पृष्टराशिसन्धिसमयात्तदपरप्रान्तस्पृष्टराशिसन्धिसमयावधिकः कर्मयोग्यः कालः पुण्यजनकत्वेनोक्तः । तथोक्तं देवलेन—

संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः ।
मुख्यालाभे तु गौणेऽपि कार्या दानादिका क्रिया ॥

अत एव तत्र सूक्ष्मसंक्रान्तिकालादुभयतः षोडश षोडश घटिकाः साधारण्येन पुण्यकालस्तथाऽऽह वशिष्ठः—

दिनपतिसंक्रमणात् प्राक् षोडश नाड्यश्च पुण्यकालः स्यात् ।
परतः षोडशः नाड्यः सर्वत्र स्नानहोमदानेषु ॥

तथोक्तं ज्यौतिषे—'पूर्वतोऽपि परतोऽपि संक्रमात्पुण्यकालघटिकास्तु षोडश ।'

एवमेव रामाचार्य आह—

"संक्रान्तिकालादुभयत्र नाडिकाः पुण्या मताः षोडश षोडशोष्णगोः" ॥

अथ राशिभेदेन संक्रमणात् पूर्वापरसमययोर्विशेषपुण्यकाल उक्तो यथा—याम्यायने विष्णुपदे चाद्या मध्यास्तुलाजयोः ।
षडशीत्यानने सौम्ये परा नाड्योऽतिपुण्यदाः ॥

याम्यायने कर्कसंक्रान्तौ, विष्णुपदे, सिंहवृश्चिकवृषकुम्भराशिसंक्रमे च आद्याः सूक्ष्मसंक्रान्तिकालात् पूर्वगताः यथा पुण्यास्तथा परगता न । तुलाजयोस्तुलामेषयोर्मध्याः उभयतः षोडश घटिकाः, अथवाऽष्टौ पूर्वगता अष्टौ परगता घटिकाः । क्वचिदेतद्भिन्ना दृश्यन्ते । यथाऽऽह गार्ग्यः—

"कर्कटे विंशतिः पूर्वा मकरे विंशतिः पराः ॥
वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश" ॥ इति ।

षडशीत्यानने = मिथुनकन्याधनुर्मीनसंक्रान्तिषु, सौम्यायने मकरसंक्रान्तौ च पराः सूक्ष्मसंक्रान्तिकालादुत्तराः षोडशघटिकाः अतिपुण्यदाः । अर्थात्पूर्वगतकालापेक्षया पराः विशेषपुण्या इत्यर्थः । अयनसंक्रान्तौ विशेषमाह वृद्धवशिष्ठः ।

हेमाद्रिमते तु—मकरसंक्रमे 'परतश्चत्वारिंशद्घटिकाः' तदुक्तं यथा—

"त्रिंशत्कर्कटके नाड्यो मकरे तु दशाधिकाः ॥"

दशाधिकात्रिंशदर्थाच्चत्वारिंशद्घटिकाः पराः पुण्या इत्यर्थः ।

अतोऽत्रायं निर्गलितार्थः—

मेषसंक्रमणे प्रागपराः दश दश घटिकाः पुण्याः ।
वृषसंक्रमणे पूर्वाः षोडश घटिकाः पुण्याः ॥

मिथुनसंक्रमणे पराः षोडश घटिकाः । कर्कसंक्रमणे पूर्वात्रिंशद्घटिकाः । सिंहसंक्रमणे पूर्वाः षोडश घटिकाः । कन्यासंक्रमणे पराः षोडश घटिकाः । तुलासंक्रमणे प्रागपराः दश दश घटिकाः । वृश्चिकसंक्रमणे पूर्वाः षोडश घटिकाः । धनुःसंक्रमणे पराः षोडश घटिकाः । मकरसंक्रमणे पराश्चत्वारिंश घटिकाः । कुम्भसंक्रमणे पूर्वाः षोडश घटिकाः । मीनसंक्रमणे पराः षोडश घटिकाः पुण्याः ।

इति सर्वं दिवा संक्रमणविषयकम् ।

रात्रिसंक्रमणे पूर्वमध्यपरभागवशेन पुण्यकालव्यवस्था त्रिविधा, यद्यर्धरात्रात् पूर्वं संक्रान्तिस्तदा तद्दिनार्धोत्तरकालः पुण्यकालः । यद्यर्धरात्रात् परं संक्रान्तिस्तदाऽग्रिमदिनपूर्वार्धमेव पुण्यम् । यद्यर्धरात्रे एवं संक्रान्तिस्तदा पूर्वदिनोत्तरार्धे परदिनपूर्वार्धं चेत्युभयदिनगतः पुण्यकालः । इति सामान्यत उक्तं ब्रह्मसिद्धान्ते—

भवनान्तं बिम्बमध्यं रात्र्यर्धात् प्रागुदेति चेत्।
स्नानदानादि मध्याह्नादूर्ध्वं कुर्याद्व्रत दिने॥
रात्र्यर्धादुपरि चैत्रं याति चेदन्यथाऽर्यमा।
अन्यगामिनि मध्याह्नात्पूर्वं स्नानादि पुण्यदम्॥

भवनान्तं राश्यन्तम्। वा राश्यादि, य एव पूर्वराश्यन्तः स एव परराशेरादिः। बिम्बमध्यं रविबिम्बकेन्द्रम्। चैत्रं राश्यादि। अर्यमा सूर्यः। एवमेवोक्तं वृद्धवशिष्ठेन—

अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम्। रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः॥
अर्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया। ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम्॥

मध्याह्नस्य पूर्वदिनार्धस्य। उदयादूर्ध्वमग्रिमोदयादूर्ध्वमर्थात्परदिनपूर्वार्धमिति भावः।

तथा चोक्तं तेनैव—

पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः। प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ॥

तथा चोक्तं तेनैव—

यद्यर्धरात्र एव स्यात्सम्पूर्णे संक्रमो रवेः। तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु॥

एवमेव रामाचार्याः—निशीथतोऽर्वागपरत्र संक्रमे पूर्वापराह्णान्तिमपूर्वभागयोः।

निशीथतो मध्यरात्रात्। अर्वाक् पूर्वं संक्रमणे सति पूर्वदिनान्तिमभागः। परत्र = पश्चात् संक्रमणे परदिनपूर्वभागश्च पुण्यः इति क्रमेण योज्यम्। तथा च 'पूर्णे निशीथे यदि संक्रमः स्याद्दिनद्वयं पुण्यमिति'। एवमेव देवीपुराणेऽपि—

मीनार्धं भास्करे पुण्यमपूर्णे शर्वरीदले। सम्पूर्णे तूभयोर्देयमतिरेके परेऽहनि॥

परन्तु मकरकर्कटसंक्रान्त्योर्नेदृशी नियता संस्था, तत्र तु 'मुक्त्वा मकरकर्कटौ' इत्यनेन भिन्नो नियमः सूचितः। तथाऽऽह वृद्धगार्ग्यः—

यदाऽऽस्तमनवेलायां मकरं याति भास्करः। प्रदोषे चार्धरात्रे वा स्नानं दानं परेऽहनि॥
अर्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने। पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः॥

अर्थात्कर्कसंक्रान्ती रात्रेः कस्मिन्नप्यंशे भवति तदा तत्पुण्यकालः पूर्वदिने एव मध्याह्नोत्तरकालः। रात्रेः कस्मिन्नंशेऽपि मकरसंक्रमे परदिने एव पुण्यकालः। एवमेव भविष्येऽपि—

'यद्यस्तमनवेलायां मकरं याति भास्करः। प्रदोषे चार्धरात्रे वा स्नानं दानं परेऽहनि॥

परमयं सम्प्रदायो द्राविडदेशीयैर्विशेषतयाऽऽद्रियते। तीरभुक्त्यादिदेशे तु—

म. म. महेशठक्कुरैः, म. म. वामदेवोपाध्यायैश्चैवं व्यवस्थोक्ता—

धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा। पूर्वापरविभागेन रात्रौ संक्रमणं यदा॥
दिनान्ते पञ्चनाड्यस्तु तदा पुण्यतमाः स्मृताः। उदयेऽपि तथा पञ्च दैवे पित्र्ये च कर्मणि

इति तु मकरकर्कटाभिन्नेऽपि—पुण्यकालव्यवस्था पूर्वोक्तवचनस्वरसात्। 'षडशीतिमुखेऽतीते व्यतीते चोत्तरायणे' इत्यादिविरोधात्पूर्वैकवाक्यतयाऽयमर्थः—

रात्रौ पूर्वभागे मकरसंक्रमे परेऽहनि उदये पञ्चनाड्यः पुण्याः रात्रेः परभागेऽपि कर्कसंक्रमणे पूर्वदिनान्ते पञ्च नाड्यः पुण्याः।

तथा च तिथिवशेनाऽपि मकरसंक्रमे भिन्ना पुण्यकालव्यवस्था दृश्यते देवीपुराणे—

आदौ पुण्यं विजानीयात् यद्यभिन्ना तिथिर्भवेत्।
अर्धरात्रे व्यतीते तु विज्ञेयमपरेऽहनि॥

अर्थाद्रात्रौ निशीथात्पूर्वसमये वा निशीथेऽपि मकरसंक्रमणे तत्काले या तिथिः सा यदि पूर्वदिने एव, न हि परदिने, तदा तत्तिथ्यनुरोधेन पूर्वदिनस्य मध्याह्नोत्तरकालः पुण्यकालः। यदि संक्रान्तिकालिकतिथिः पूर्वदिने सूर्यास्तात्पूर्वं न, किन्तु परदिने भवेत्तदा परदिने एव पुण्यकालः। अथ निशीथात् परस्मिन् समये मकरसंक्रमे संक्रमणकालिकतिथिर्यदि परदिनेनापि भवेत्तथाऽपि परदिने एव पुण्यकालः तत्र सामान्यवचनेनैव निर्णयः।

वस्तुतस्तूपपत्तिदृष्ट्या मकरसंक्रमणात्परं सौम्यायनप्रवृत्तेर्याम्यायनापेक्षया सौम्यायनस्य पुण्यसमयस्पष्टतया सर्वास्ववस्थासु मकरसंक्रमे परा एव घटिकाः पुण्याः। कर्कसंक्रान्तौ तु पूर्वा एवेति युक्तियुक्तम्। एतावद्भिः पुण्यकालनिर्णायकविषयैः सद्भिरपि बहुत्र सामान्यसंक्रान्तिपुण्यकालव्यवस्थावदेव मकरसंक्रमे पुण्यकालव्यवस्था क्रियते साऽपि युक्तैव—

'देशाचारस्तावदादौ विचिन्त्यो देशे देशे या स्थितिः सैव कार्या॥'

तथा चोक्तम्–निशाऽर्कचारान्निकटं दिनार्धं दिवाऽर्कचारान्निकटाष्टयस्यः।
ताः कर्कटे प्राक्कथितेतरेऽर्वाक्, पुण्याश्च विष्वग् घटगोऽलिसिंहे॥

इति कृत्यशिरोमणिधृतराजमार्त्तण्डे। एतावताऽपि मकरसंक्रमे परघटिकाः पुण्याः

अथ संक्रान्तौ स्नानदानावश्यकतोक्ता पीयूषधारायाम्—

विषुवत्त्ययने ग्रहणे संक्रान्तौ पुण्यदिवसेऽपि।
पितृतृप्तिं न करोति हि दत्त्वा शापं व्रजति तस्य पिता॥
आगतगतसमयेऽपि च करोति यद्दानजपहोमाद्यम्।
ऊषरवापितबीजं यद्वत्तद्वच्च निष्फलं भवति॥

तथा च— षडशीत्यां तु यद्दानं विषुवद्द्वितये तथा।
दृश्यते सागरस्यान्तस्तस्यान्तो नैव दृश्यते॥

अथ दिनवशेन संक्रान्तिफलम्—

रवि-रविज-भौमवारे संक्रान्तौ दिनकरस्य तन्मासे।
पित्तकफानिलजामयनरपतिकलहं त्ववृष्टिश्च॥
बुधगुरुसितचन्द्राह्ने सति संक्रान्तावनामयं नृणाम्।
क्षितिपतिनिकरक्षेमं शस्यवृद्धिर्विधर्मिणां पीडा॥

यस्य जन्मर्क्षादौ संक्रमणं तस्यानिष्टफलमुक्तं तत्रैव—

यस्य जन्मर्क्षमासाद्य रविसंक्रमणं भवेत्। तन्मासाभ्यन्तरे तस्य रोगः क्लेशो धनक्षयः॥

अत्र मेषसंक्रमणे नक्षत्रवशेन विशेषफलम्—

यदा मेषगतः सूर्यो भरण्यादिचतुष्टये । सस्यवृद्धिर्भवेत्तस्य वृद्धिरार्द्राचतुष्टये ॥
मघादिदशके हानिः क्षेमं चानुक्तभेषु च ॥

अथ संक्रान्तौ राशिवशेन फलविशेषमुक्तं वशिष्ठेन—

अजकन्याभृत्कर्किणि संक्रान्तौ यदि भवेद्वृष्टिः । अतुलं क्षेमसुभिक्षं नृपसज्जनगोकुलक्षेमम् ।
आमयडामरभूभृद्युद्धमनर्थं त्ववृष्टिश्च । वृषवृश्चिकतुलामकरे वृष्टिः स्यात् संक्रमे समये ॥
विस्फोटामयतस्करपीडाऽवृष्टिः कृशानुभयम् ॥

अथ संक्रान्तितः स्वनक्षत्रसंख्याभेदेन प्रतिमासं फलविशेष उक्तो रामाचार्येण—

संक्रान्तिधिष्ण्यावरधिष्ण्यतस्त्रिभे-स्वभे निरुक्तं गमनं ततोऽङ्गभे ।
सुखं, त्रिभे पीडनमङ्गभेंऽशुकं त्रिभेऽर्थहानी रसभे धनागमः ॥

यस्मिन्मासे विचारः क्रियते तत्र संक्रान्तिर्यस्मिन् नक्षत्रे तं त्यक्त्वा तदग्रिमनक्षत्रात्फलं चिन्त्यम् ।

३ न=यात्रा । ४ न-९ =सुखम्
१० न—१२ न =पीड़ा । १३ न=१८ वस्त्रलाभः ।
१९—२१ न=धनहानिः । २२ न—२७ न=धनागमः ।

इति संक्रान्तिनिर्णयः ।

## अथ शिवपूजनादिप्रकरणम् ।

अथ पार्थिवशिवपूजाफलमुक्तं नन्दीपुराणे—

आयुष्मान् बलवान् श्रीमान् पुत्रवान् धनवान् सुखी ।
वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समर्चयेत् ॥
तस्मात्तु पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधकम् ।

तत्र ओं हराय नमः इति मृदाहरणम् । ओं महेश्वराय नमः इति संघट्टनम् । ओं शूलपाणये नमः इति प्रतिष्ठा । ओं पिनाकधृजे नमः इति समाहानम् । ओं शिवाय नमः इति स्नपनम् । ओं पशुपतये नमः इति पूजनम् ओं महादेवाय नमः इति विसर्जनम् । तत्राष्टमूर्तिनामभिः साक्षतचन्दनपुष्पजलादियुक्तैः (क) पूजनम् । तथोक्तम्-पूर्वैशान्योत्तरवायव्यपश्चिमनैरृत्यदक्षिणाग्नेयेषु क्रमेण—

ओं शर्वाय क्षितिमूर्त्तये नमः । ( पू० ) ओं भवाय जलमूर्त्तये नमः । ( ऐ० ) । ओं रुद्रायाग्निमूर्त्तये नमः ( उ० ) । ओं उग्राय वायुमूर्त्तये नमः ( वा० ) । ओं भीमायाकाशमूर्त्तये नमः ( प० ) । ओं पशुपतये यजमानमूर्त्तये नमः ( नै० ) । ओं महादेवाय सोममूर्त्तये नमः ( दक्षिणे ) । ओं ईशानाय सूर्यमूर्त्तये नमः ( आ० ) । ओं महादेवाय नमः । ओं महादेव पूजितोऽसि प्रसीद क्षमस्व स्वस्थानं गच्छ । अन्ते ओं चण्डेश्वराय नमः ।

---

विश्वनाथपदाम्भोजे नत्वा श्रीकृष्णमोहनः । विधत्ते टीप्पणीमत्र यथाशास्त्रं यथास्थलम् ॥

(क) शिवलिङ्गपूजातः प्राक् कीर्त्तिमुखपूजा कर्त्तव्या । तथाऽऽह पद्मपुराणे—
"त्वं कीर्त्तिमुखसंज्ञो हि भव मद्द्वारगः सदा । त्वदर्चां ये न कुर्वन्ति नैव ते मत्प्रियङ्कराः॥"इति ।

तत्र पूजनसमये (क) भस्मरुद्राक्षधारणावश्यकत्वमुक्तं लिङ्गपुराणे—

विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः॥

तत्र रुद्राक्षधारणेऽङ्गभेदेन संख्याभेद उक्तो देवीभागवते—

रुद्राक्षान् कण्ठदेशे दशनपरिमितान्मस्तके विंशती द्वे,
षट् षट् कर्णप्रदेशे करयुगलकृते द्वादश द्वादशैव।
बाहोरिन्दोः कलाभिर्नयनयुगकृते, एकमेकं शिखायां
वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः॥

अथ रुद्राक्षप्रमाणमुक्तं तत्रैव—

धात्रीफलप्रमाणन्तु श्रेष्ठमेतदुदाहृतम्। बदरीफलप्रमाणन्तु मध्यमं प्रोच्यते बुधैः॥
अधमं चणमात्रं तु प्रतिज्ञैषा प्रकीर्त्तिता॥

तत्र कामनाभेदेन तत्संख्यामाह प्रजापतिः—

मोक्षार्थी पञ्चविंशत्या धनार्थी त्रिंशता जपेत्। पुत्रार्थी पञ्चविंशत्या पञ्चदश्याऽभिचारके।

तत्र तावन्मालास्वरूपमुक्तं ब्रह्मपुराणे—

अक्षुण्णा समरन्ध्रा च परिपूर्णा दृढा नवा। निखिला ग्रथिताऽव्यङ्गा अन्योन्यं घृष्टिवर्जिता॥
सशब्दा चञ्चला या तु त्रुटिताऽग्रथिता तु या। भिन्नसूत्रेण ग्रथिता पाषण्डस्य पुरातनी॥
माला दुःखप्रदायिन्यो ग्रथिता निन्द्यतन्तुभिः। अष्टोत्तरशती कार्या चतुःपञ्चाशिकाऽथवा॥
सप्तविंशतिका कार्या ततो नैवाधमा हिता॥

अन्यद्गोपुच्छाकारकत्वं जपप्रकरणे द्रष्टव्यम्।

सप्तविंशति रुद्राक्षमालया देहसंस्थया। यत्करोति नरः पुण्यं सर्वं कोटिगुणं भवेत्। इति॥

शिवस्य पूजायां बिल्वपत्रसमर्पणमत्यावश्यकम्। यदि दैवात्पथि परदेशे आर्द्रं बिल्वदलं न लभेत्तदा पूर्वरक्षितस्वसञ्चर्चितशुष्कपत्रेणापि पूजनं कर्त्तव्यम्। तथोक्तं स्कान्दे—शुष्काण्यपि च पत्राणि श्रीवृक्षस्य निवेदयेत्। श्रीवृक्षस्य बिल्वस्य। लिङ्गार्चनचन्द्रिकायान्त्वेवमुक्तम्—

अर्पितान्यपि बिल्वानि प्रक्षाल्य च पुनः पुनः। शङ्करायार्पणीयानि नवानि यदि नो लभेत्॥

तथा धत्तूरपुष्पेण पूजने महत्फलं श्रूयते भविष्ये—

धत्तूरकैश्च यो लिङ्गं सकृत्पूजयते नरः। स गोलक्षफलं प्राप्य शिवलोके महीयते॥

---

(क) भस्मधारणप्रदेशः, स्मृतिरत्नावल्याम्—"ललाटे हृदये नाभौ गलांशे बाहुसन्धिषु। पृष्ठदेशे शिरस्येवं स्थानेष्वेतेषु धारयेत्॥" इति। धारणप्रकारमाह पुलस्त्यः—'अग्निरित्यादिभिर्मन्त्रैः शुद्धं भस्माभिमन्त्रितम्। शिवमन्त्रेण तद्धार्यं मन्त्रेणाष्टाक्षरेण वा॥ गायत्र्या वा च देवर्षे! मन्त्रेण प्रणवेन वा॥ करोति शिवमन्त्रेण यस्त्रिपुण्ड्रं द्विजोत्तमः। स्थूलः शूलधरः सौम्यः शिव लोकेमहीयते॥ अष्टाक्षरेण मन्त्रेण यः करोति त्रिपुण्ड्रकम्। विष्णोः पदमवाप्नोति नान्यथा श्रुतिभाषितम्। सौरम्पदमवाप्नोति गायत्र्या मुनिसत्तम!। प्राप्नोति ब्रह्मणो रूपं प्रणवेन न संशयः॥" इति।

शिवमन्दिरे झल्लकवादननिषेधो योगिनीतन्त्रे--

शिवागारे झल्लकं च सूर्यागारे च शङ्खकम् । दुर्गागारे वंशवाद्यं मधुरीं न च वादयेत् ॥

(क)शिवप्रदक्षिणाविधिरपि लिङ्गार्चनचन्द्रिकायामुक्तः--

आसन्नप्रसवा नारी जलपूर्णघटं यथा । उद्वहन्ती शनैर्याति तथा कुर्यात् प्रदक्षिणाम् ॥

तत्र शिवस्यार्धप्रदक्षिणमित्यनेनोत्तरं विहाय पूर्वतः पश्चिम--पर्यन्तं प्रदक्षिक्रमेण, 'निर्माल्यजलस्योत्तरदिशातो निःसरणात्तल्लङ्घने दोषाधिक्यश्रवणात् ।

शूद्रस्थापितलिङ्गस्य प्रणामादिकरणे दोषो बृहन्नारदीये--

यः शूद्रसंस्कृतं लिङ्गं विष्णुं वाऽपि नमेद्द्विजः।इहैवात्यन्तदुःखानि पश्यत्यामुष्मिके किमु॥

शूद्रो वाऽनुपनीतो वा स्त्रियो वा पतितोऽपि वा ।
केशवं वा शिवं वाऽपि स्पृष्ट्वा नरकमश्नुते ॥

विष्णुशिवयोर्मूर्त्तिसंख्यायां विशेषः पूजापङ्कजभास्करे—

गृहे लिङ्गद्वयं नार्च्यं शालग्रामद्वयन्तथा । द्वे चक्रे द्वारकायास्तु नार्च्ये सूर्यद्वयं तथा ।
शक्तित्रयं तथा नार्च्यं गणेशत्रयमेव च । द्वौ शङ्खौ नार्चयेच्चैव भग्नाश्च प्रतिमान्तथा ॥

(ख)वाणलिङ्गनैवेद्यभक्षणे न दोषः(ग)—

बाणलिङ्गे स्वयम्भूते चन्द्रकान्ते हृदि स्थिते । चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणम् ॥

न शिवं शङ्खवारिणेत्यनेन शङ्खजलेन शिवपूजा न कार्या ।

'सर्वत्रैव प्रशस्तोऽब्जः शिवसूर्यार्चनं विना ।' इति तन्त्रसारः ।

अब्जः शङ्खः ।

विष्णोर्दक्षिणावर्त्तशङ्खस्थजलेन पूजने महत्फलम्--

दक्षिणावर्त्तशङ्खस्थतोयेन योऽर्चयेद्धरिम् । सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥

इति पूजापङ्कजभास्करे ।

---

(क) प्रदक्षिणाक्रममाह, आह्निकसूत्रावल्याम्—"एका चण्ड्या रवेः सप्त तिस्रः कार्या विनायके । हरेश्चतस्रः कर्त्तव्या शिवस्यार्धप्रदक्षिणा ॥" इति ।

(ख) बाणलिङ्गलक्षणं कालोत्तरे—

बाणलिङ्गं तथा ज्ञेयं भुक्तिमुक्तिप्रदायकम् । उत्पत्ति बाणलिङ्गानां लक्षणं लेशतः शृणु ॥ नर्म्मदादेविकयोश्च गङ्गायमुनयोस्तथा । सन्ति पुण्यनदीनां च बाणलिङ्गानि षण्मुख ॥ इन्द्रादिपूजितान्यत्र तच्चिह्नैश्चिह्नितानि च । आपीतानि षडस्राणि चक्राङ्कानि विशेषतः ॥ इन्द्रलिङ्गानि तान्याहुः साम्राज्यार्थप्रदानि तु । अरुणं हि सकीलालमुष्णस्पर्शकरोज्ज्वलम् ॥ आग्नेयं वज्रशक्तिनिभमथवा शक्तिलाञ्छितम् । इदं लिङ्गवरं स्थाप्य तेजसोऽधिपतिर्भवेत् ॥ दण्डाकारं भवेद्याम्यमथवा रसनाकृति । यदभ्यक्तं मुहूर्त्तेन निर्णिक्त जायते तदा ॥

(ग) ज्योतिर्लिङ्गनैवेद्यादिभक्षणेऽपि न दोषः, तथाहि भविष्यपुराणे—ज्योतिर्लिङ्गं विना लिङ्गं यः पूजयति सत्तमः । तस्य नैवेद्यनिर्माल्यभक्षणात्तप्तकृच्छ्रकम् ।

**ज्योतिर्लिङ्गानि शिवपुराणे**=सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्ज्जुनम् । उज्जयिन्यां महाकालमोङ्कारं परमेश्वरम् । केदारं हिमवत्पृष्ठे डाकिन्यां भीमशङ्करम् । वाराणस्यां च विश्वेशं त्र्यम्बकं गौतमीतटे ॥ वैद्यनाथं चिताभूमौ नागेशं दारुकावने । सेतुबन्धे च रामेशं घुश्मेशं च शिवालये ॥ इति ।

गरुडमूर्त्तिचिह्नितघण्टावादने विशेषफलम्—
यस्तु वादयते घण्टां वैनतेयेन संयुताम् । धूपे नीराजने स्नाने पूजने च विलेपने ॥
ममाग्रे लभते पुण्यं चान्द्रायणशतोद्भवम् । वैनतेयाङ्कितां घण्टां सुदर्शनसमन्विताम् ॥
ममाग्रे स्थापयेद्यस्तु तस्य देहे वसाम्यहम् ॥

शिवपूजायां दिग्विचारः रुद्रयामले—
न प्राचीमग्रतः शम्भोर्नोदीचीं शक्तिसंस्थिताम् ।
न प्रतीचीमतः पृष्ठमतो दक्षं समाश्रयेत् ॥

अत्र पूर्वमुखस्थस्य दक्षभागतः पूजाऽर्थादुत्तरमुखो भूत्वा पूर्वमुखं शिवं भावयित्वा पूजयेत् ।

शिवपूजने मुखवाद्यमतिप्रशस्तम् शिवपुराणे—
गन्धपुष्पनमस्कारैर्मुखवाद्यैश्च सर्वतः । यो मामर्चयते तत्र तस्य तुष्याम्यहं सदा ॥

शिवपूजा सदैवोत्तरमुखेन, रात्रौ तु सर्वदैव पूजोत्तरमुखेन कार्येति । विशेषपूजाप्रकरणविधिः पूजापङ्कजभास्करे द्रष्टव्यः ॥

अथ विशेषशिवपूजायां शिववासविचारः—
तिथिं च द्विगुणीकृत्य पञ्चभिश्च समन्वितम् । सप्तभिश्च हरेद्भागं शिववासमुदीरयेत् ॥
एकेन वासः कैलासे द्वितीये गौरिसन्निधौ । तृतीये वृषभारूढः सभायाञ्च चतुर्थके ॥
पञ्चमे भोजने चैव क्रीडायां च रसात्मके । श्मशाने सप्तमे चैव शिववास इतीरितः ॥

अत्र तिथिः शुक्लपक्षादितो गण्येति शिष्टाचारः

अथैतत्फलम् ।
कैलासे लभते सौख्यं गौर्यान्तु सुखसम्पदः ।
वृषभेऽभीष्टसिद्धिः स्यात् सभा सन्तापकारिणी ॥
भोजने च भवेत्पीडा क्रीडायां कष्टमेव च । श्मशाने मरणं ज्ञेयं फलमेवं विचारयेत् ॥
शिववासमविज्ञाय प्रवृत्तः शिवकर्मसु । नतत्फलमवाप्नोति ह्यनुष्ठानशतैरपि ॥

अर्थादेकद्वित्रिशेषे शुभम् । तदधिकेऽशुभमिति ।

अथ बिल्वपत्रमाहात्म्यमुक्तं मातृकातन्त्रे ५५ पटले—
शिव उवाच—
शृणु देवि ! प्रवक्ष्यामि रहस्यं त्रिजटात्मकम् । पत्रं ब्रह्ममयं देवि ! अद्भुतं वरवर्णिनि ! ॥
श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः । विष्णुप्रीतिकरश्चैव मम प्रीतिकरः सदा ॥
ब्रह्मविष्णुशिवाः पत्रे वृन्तञ्च शक्तिरूपकम् । वृन्तमूले तु वज्रं स्यात् पत्रे ब्रह्मपदं प्रिये ! ॥
त्रिजटापत्रकैकेन हरं वा हरिमर्चयेत् । कैवल्यं तस्य तेनैव शक्तिपूजाविशेषतः ॥
पत्रं पुष्पं फलं तोयं नैवेद्यं धूपदीपकम् । दत्वा यद्यत् फलं प्राप्तं तस्मात् कोटिगुणं भवेत् ॥
सर्वैरर्चनतो देवि ! त्रिजटात्मसमर्पणम् । कैवल्यदो हरिश्चैव दास्येऽहं स्वत्सरूपताम् ॥
त्वयि कैवल्यदं ज्ञानं धर्मकामार्थदं प्रिये ! । वज्रहीनमिदं देवि ! प्राप्नुयाद्वाञ्छितं फलम् ।
सवज्रे म्रियते नूनं वज्राघातेन पार्वति ! । तस्माच्च साधकेन्द्रेण वज्रहीनं प्रदीयते ॥

अयं नियमः सकलदेशेषु साधारण उपलभ्यते देशभेदेन विशेषनियम उक्तः शक्तिसङ्गमतन्त्रे—

विन्ध्यपर्वतमारभ्य यावच्चट्टलदेशतः। विष्णुक्रान्तेति विख्याता मुनिभिस्तत्त्वदर्शिभिः॥
विन्ध्यपर्वतमारभ्य महाचीनावधिप्रिये! रथक्रान्तेति विख्याता मुनिभिस्तत्त्वदर्शिभिः॥
विन्ध्यपर्वतमारभ्य यावदेव महोदधिः। अश्वक्रान्तेति विख्याता मुनिभिस्तत्त्वदर्शिभिः॥

विन्ध्यक्षेत्रात् पश्चिमदिगभिमुखी अग्निकोणाभिमुखी ऐशान्यकोणाभिमुखीति तिस्रो रेखाः कार्यास्ताभ्यो भुवनत्रयो विभागा दक्षिणपूर्वोत्तररूपा जाता येषु पूर्वभागस्य विष्णुक्रान्ता, उत्तरभागस्य रथक्रान्ता, दक्षिणभागस्याश्वक्रान्तेति संज्ञा तेषु केवलं विष्णुक्रान्ताऽऽख्ये प्रदेशे विशेष उक्तस्तत्रैव—

बिल्वपत्रं महायन्त्रं त्रिपत्रं परमेश्वरि! अत एव महेशानि वज्रहीनं न दापयेत्॥
वज्रहीने प्रदातव्ये शिवहत्या प्रजायते। येन केन प्रकारेण सवज्रञ्च प्रदापयेत्॥

तथा च तन्त्रान्तरे—'विष्णुक्रान्तासु देवेशि! वज्रमोक्षं न कारयेत्॥'

विष्णुक्रान्ताभिन्नप्रदेशे तु लिङ्गार्चनतन्त्रे—

इन्द्रस्यास्त्रमिदं वज्रं वृन्तमूले च पार्वति!। प्राणान्तेऽपि न दातव्यं सवज्रं मच्छिरोपरि॥

अफलितबिल्ववृक्षस्य पत्रं पूजाऽनर्हमुक्तं वरदातन्त्रे—

'फलशून्यवृक्षजातौ बिल्वपत्रैर्न चार्च्चयेत्।'

तथा बिल्वपत्रं प्रक्षालयेद्यथा तद्वृन्तं न प्रक्षालितं स्यात्, तदुक्तं भविष्ये—

बिल्वपत्रस्य प्लवनं वृन्तं हित्वा तु प्लावयेत्। वृन्तसंप्लवनादेव फलं हरति राक्षसः॥

नूतनपत्रालाभे तच्चूर्णेनापि षण्मासावधि पूजने न दोष इत्याह—

खण्डितैश्च शिवः पूज्यः पत्रैरन्यैरखण्डितैः। षण्मासानन्तरं बिल्वपत्रं पर्युषितं भवेत्॥

शिवार्चनतन्त्रे बाणेश्वरप्रकरणे तु—

मदासनं बिल्वपत्रं न कुर्वीत कदाचन। यदि मोहात् प्रकुर्वीत शिवहाव्रतमाचरेत्॥

पार्थिवशिवलिङ्गं बिल्वपत्रोपरि संस्थाप्य पूजनीयमित्युक्तं रुद्रयामले—

केशकङ्करकीटादिस्थिते दुःखं यतो भवेत्। तद्दोषस्योपशान्त्यर्थं मालूरे स्थापयेच्छिवम्॥

अथ बिल्वपत्रत्रोटनमन्त्रः—

अमृतोद्भव! श्रीवृक्ष! शङ्करस्य सदा प्रिये! क्षमस्व शिवपूजार्थे तव पत्रं चिनोम्यहम्॥

अथवा मन्त्रान्तरम्—

पुण्यवृक्ष! महाभाग! मालूर! श्रीफल! प्रभो!
महेशपूजानार्थाय त्वत्पत्राणि चिनोम्यहम्॥

बिल्वपत्रत्रोटने निषिद्धदिनतिथीनाह—लिङ्गार्चनचन्द्रिकायाम्—

अमारिक्तासु संक्रान्तावष्टम्यामिन्दुवासरे।
बिल्वपत्रं न च च्छिन्द्याच्छिन्द्याच्चेन्नरकं व्रजेत्॥

इति शिवपूजनादिविधानम्।

---

## अथ (क) भोजनप्रकरणम्।

अथ नैवेद्योत्सर्गविधिः। गायत्र्या भोजनस्थाने मण्डलं कृत्वा तदुपरि भोजनपात्रं निधाय 'ओं तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि' अनेनान्नं सिञ्चेत्। तत ओं विष्णवे नमः १, ओं रुद्राय नमः २, ओं अर्काय नमः ३, ओं चन्द्राय नमः ४, ओं गणपतये नमः ५, ओं दुर्गादेव्यै नमः ६, ओं अग्नये नमः ७, ओं पशुपतये नमः ८, ओं वसुभ्यो नमः ९, एभिर्मन्त्रैर्नैवेद्योत्सर्गः।

ओं ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना॥

अनेन पात्रस्थमन्नमुत्सृजेत्। तत ओं अमृतोपस्तरणमसि स्वाहा अनेनाचम्य तत ओं प्राणाय स्वाहा १, ओं अपानाय स्वाहा २, ओं उदानाय स्वाहा ३, ओं समानाय स्वाहा ४ ओं व्यानायस्वाहा ५ एभिः पञ्चभिर्मन्त्रैः पञ्च ग्रासान् भुक्त्वा ततो बुभुक्षाशान्तिं विधायान्ते ओं अमृतापिधानमसि स्वाहा अनेन गण्डूषं गृह्णीयात्। ततो न किञ्चिद्भुञ्जीत।

श्वानौ द्वौ श्यावशवलौ वैवस्वतकुलोद्भवौ।
ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ।

अनेन भूमौ, बलिद्वयं दद्यात्। यमः—

मक्षिका केशमन्ने तु पतितं यदि दृश्यते।
मूषिकस्य पुरीषं वा क्षुतं यच्चावधूनितम्॥
भस्मना स्पृष्टमश्नीयादभ्युक्ष्य सलिलेन वा।

अपरार्के—'चण्डालपतितच्छाया स्पर्शे दुष्टा तु नो भवेत्।'

यमः—आसनं शयनं यानं स्त्रीमुखं कुतपं क्षुरम्।
न दूषयन्ति विद्वांसो यज्ञेषु चमसं तथा॥

अग्निग्रहणेऽपरार्के—

वृषलाग्नेरमेध्याग्नेः सूतकाग्नेश्च कर्हिचित्। पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम्॥

---

(क) भोजनकाल आह देवलः—स्नात्वा प्रक्षाल्य पादौ च स्रग्दाम्नालङ्कृतः शुचिः। पञ्चयज्ञाऽवशिष्टं च यो भुंक्ते सोऽमृताशनः॥ मनुः—सायं प्रातर्मनुष्याणामशनं श्रुतिनोदितम्। नान्तराभोजनं कुर्यादग्निहोत्रसमो विधिः। भोजने वर्ज्यासनान्याह, प्रचेता—गोशकृन्मृण्मयं भिन्नं तथा पालाशपिप्पलम्। लोहबद्धं तथैवार्कं वर्जयेदासनं बुधः॥ 'भोजने वर्ज्यपात्राणि' व्यासः—मृण्मये पत्रपृष्ठे वा आयसे ताम्रभाजने। नाश्नीयादपि चेद्भुंक्ते नरकं प्रतिपद्यते॥ पैठीनसिः—वटार्काश्वत्थपत्रेषु कुम्भीतिन्दुकजेषु च। श्रीकामो न तु भुञ्जीत कोविदारकरञ्जयोः॥ प्रचेताः-ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनम्। यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्।

भोजने विशेषनियमा आह्निककारिकासु—वामहस्ते जलं धृत्वा मणिबन्धे निधाय च। भुज्यमानः पिबन् वारि नोच्छिष्टं मनुरब्रवीत्॥ यः पुनर्भोजनं कुर्वन्नश्नन्तं संस्पृशेद्द्विजः। ततस्तेन न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्। वैश्यस्य चान्नमेवान्नं शूद्राणामधमं स्मृतम्॥

भूमिशुद्धिर्ब्रह्माण्डपुराणे—

ग्रामाद्दण्डशतं त्यक्त्वा नगराच्च चतुर्गुणम्।
भूमिः सर्वत्र शुद्धाऽन्यथा यत्र लेपो न दृश्यते॥

अत्र दण्डश्चतुर्हस्तपरिमितः। याज्ञवल्क्यः—

मुखजा विप्रुषो मेध्यास्तथाऽऽचमनबिन्दवः।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः॥ अ० १।१९५।

आपस्तम्बोऽपि—

'न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिर्यावन्न हस्तेनोपस्पृशति'।

तथाऽपरार्के—दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत्।
आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः॥

देवलः—भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत्।
दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत्।
न तत्र बहुशः कुर्याद्यत्नमुद्धरणे पुनः। भवेदशौचमत्यर्थं तृणवेधाद्व्रणे कृते॥

अपरार्के—विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कथञ्चन।
आचम्यैव तु शुद्धः स्यादापस्तम्बोऽब्रवीन्मुनिः॥

पराशरः—क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते।
पतितानां च सम्भाषे दक्षिणं श्रवणं स्पृशेत्॥

चतुर्विंशतिमते—इक्षूनपम्बु फलं मूलं ताम्बूलं पय औषधम्।
भक्षयित्वापि कर्त्तव्याः स्नानदानोदकक्रियाः॥

स्मृत्यन्तरम्—द्राक्षादीनि फलानीक्षून्पयो मूलं घृतं दधि।
ताम्बूलमौषधं पत्रं हविर्मुक्त्वाऽपि नाचमेत्॥

प्रायश्चित्तमयूखेऽङ्गिराः—

कृते मूत्रपुरीषे वै यदा नैवोदकं भवेत्।
स्नात्वा लब्ध्वोदकं पश्चात् सचैलस्तु विशुद्ध्यति॥

तत्रैव—अटव्यामटमानस्य ब्राह्मणस्य विशेषतः।
प्रणष्टसलिले देशे कथं शुद्धिर्विधीयते॥
अपां दृष्ट्वैव विप्रस्तु कुर्याच्चैव सचैलकम्। गायत्र्यष्टशतं जप्यं स्नानमेतत्समाचरेत्॥

अतिभोजने दोषमाह मनुः—

अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम्।
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत्॥ अ० २।५७।

इति रोगिवृद्धपरम्

ब्रह्मपुराणे—कुर्यात् क्षीरान्तमाहारं न तु पश्चात् पिबेद्दधि।

भोजनान्ते तु हस्तमुखक्षालनानन्तरं कर्त्तव्यमुक्तम्। यथा—

भुक्त्वाऽङ्गुलितलं घृष्ट्वा नेत्रयोर्यत्प्रदीयते।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति॥

सक्तुभोजनक्रम आयुर्वेदे—

नोदकान्तरिता न द्विर्न निशायां न केवलान् ।
न भुक्त्वा न रदैश्छित्त्वा सक्तूनद्यान्न वा बहून् ॥

(क) दिवा भोजनोत्तरं शयननिषेधः—

दिवास्वापं न कुर्वीत यतोऽसौ स्यात्कफावहः ।
ग्रीष्मवर्ज्येषु कालेषु दिवास्वापो निषिद्ध्यते ॥
भोजनात्प्राग्दिवा स्वापः पाषाणमपि जीर्यति ।
भोजनान्ते दिवास्वापाद्वातपित्तकफोद्भवः ॥

शयनं पित्तनाशाय वातनाशाय मर्दनम् । वमनं कफनाशाय ज्वरनाशाय लङ्घनम् ॥

तथा च वामनपुराणे—

न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं जयेत् ।
न चेन्धनैर्जयेद्वह्निं न मद्येन तृषां जयेत् ॥

एवं च—व्यायामं च व्यवायञ्च धावनं पानमेव च ।
युद्धं गीतञ्च पाठञ्च मुहूर्तं भुक्तवांस्त्यजेत् ॥

अथातः परं सायङ्कालिककर्म, सन्ध्यादेवपूजनादि ततो रात्रिभोजनम्। तत्र वर्ज्यवस्तु यथोक्तं वैद्यके—

न रात्रौ दधि भुञ्जीत न च निर्लवणं तथा ।
नामुद्गसूपं नाक्षौद्रं न चाप्यघृतशर्करम् ॥

वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च । शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ॥

## अथ शयनविधिः ।

तत्र सति सूर्ये शय्या न पातनीया । सूर्योदयात्प्रागेव उत्थापनीयेत्युक्तं यथा—

भास्करादृष्टशय्यानि नित्याग्निसलिलानि च ।
सूर्यावलोकिदीपानि लक्ष्म्या वेश्मानि भाजनम् ।
आसनं वसनं शय्या जायाऽपत्यं कमण्डलुः ।
आत्मनः शुचिरेतानि न परेषां कदाचन ॥

विष्णुपुराणे—कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही ।
गच्छेच्छय्यामस्फुटितामेकदारुमयीं नृप ! ॥
नाविशालां न वा भग्नां नासमां मलिनां न च ।
न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम् ॥

एकदारुमयीमित्यनेनानेकदारुमयी शय्या न कार्या । द्रष्टव्यमस्य विषमस्य विस्तारो वाराहीसंहितायाम् ॥ गर्गः—

---

(क) 'भोजनानन्तरं स्मरणी योग्याः' नारदः—अगस्त्यं कुम्भकर्णं च शनिं च वडवानलम् । आहारपचनार्थाय स्मरेद्भीमञ्च पञ्चमम् ॥ आतापी भक्षितो येन वातापी च महाबलः । समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु ॥ इत्युक्त्वा तु स्वहस्तेन परिमार्ज्य निजोदरम् । अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥

स्वगृहे प्राक्शिराः शेते आयुष्यं दक्षिणाशिराः ।
प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः ॥

मार्कण्डेयः—प्राक्शिराः शयने विद्याद्धनमायुश्च दक्षिणे ।
पश्चिमे प्रबलां चिन्तां हानिं मृत्युं तथोत्तरे ॥

एवञ्च—'पश्चिमोत्तरशायी च हन्ति पुण्यं पुराकृतम् ॥'

अलङ्घ्यवस्तून्युक्तानि चिदम्बरहस्ये—

युगं मुशलमश्मानं दाम चुल्हीमुलूखलम् । शूर्पं संमार्जनीं दण्डं ध्वजं वैदूर्यमायुधम् ॥
कलशं चामरं छत्रं वर्मगं भूषणं तथा । भोगयोग्यानि याऽन्यानि महायागद्रव्याणि च ॥
महास्थानेषु वस्तूनि यानि वा देवतालये । दिव्यमुक्तानि वस्तूनि भूताविष्टानि यानि च ॥
लङ्घयेज्जातु नैतानि नैतानि तु पदा स्पृशेत् ।

तत्र गत्वा ओं नमो नन्दीश्वरायेति त्रिः सप्तवारं वा जप्त्वा—

अगस्तिर्माधवश्चैव मुचुकुन्दो महामुनिः । कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥

तथा च—असितं चार्त्तिमन्नं च सुनीथं चापि यः स्मरेत् ।
दिवा वा यदि वा रात्रौ नास्य सर्पभयं भवेत् ।
यो जरत्कारुणा जातो जरत्कारो महायशाः ॥
आस्तीकः सर्पसत्रेभ्यः पन्नगान् यो ह्यरक्षयत् ॥
तं स्मरन्तं महाभागा न मां हिंसितुमर्हथ ।

सर्पापसर्प भद्रं ते दूरं गच्छ महाविष ! । जन्मेजयस्य यज्ञान्ते आस्तीकवचनं स्मर ।
आस्तीकस्य वचः श्रुत्वा यः सर्पो न निवर्त्तते ।
शतधा भिद्यते मूर्द्धा शिंशवृक्षफलं यथा ॥

इत्यादि पठित्वा सुखं सुप्यात् । यदि च स्त्री रजोवती तदा चतुर्थरात्रौ वा षष्ठाष्टमदशमद्वादशचतुर्दशषोडशान्यतमरात्रौ स्वयं वीर्यवर्धकभोज्यं घृतमधुयुक्तं दुग्धं पीत्वा, स्त्रियं तु लघ्वाहारादिना स्वापेक्षयाऽल्पबलां विधाय ताम्बूलरागरञ्जितमुखो मनोहारिसुगन्धलेपचन्दनादिचर्चितः सुरम्ये वाससी परिधाय चारुचटुलकथया तां वशीकृत्य पूर्वशिरस्कां सौम्यावनतां खट्वादिकां शय्यां तया सहासीत । तत्र दक्षिणभागे स्त्री, उत्तरभागे स्वामी स्वपेद्येन पुरुषस्य वामभागे स्त्री भवेत् ।

तथा च याज्ञवल्क्ये—
षोडशर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ।
ब्रह्मचार्यैव पर्वण्याद्याश्चतस्रस्तु वर्जयेत् ॥ अ० १।७९ ।

स्त्रीणां षोडशनिशा ऋतुप्रवृत्तिसमयाद्गर्भधारणयोग्याः । तावत्कालपर्यन्तमेव गर्भाशयद्वारं विवृतं तिष्ठतीति भावः । परन्तु तास्वपि समा रात्र्य एव पुत्रजनयित्र्यः । विषमाः कन्योत्पादिका अतः पुत्रसन्तानार्थी युग्मासु स्त्रियं सेवेत । अत एवाह मनुः—
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु । अ० ३.४८ ।

अर्थात् चतुःषष्ठाष्टमदशमद्वादशचतुर्दशषोडशान्यतमरात्रौ यदि गर्भः स्यात्त

पुत्रो भवति । यदि च पञ्चमसप्तमनवमैकादशत्रयोदशपञ्चदशान्यतमरात्रौ गर्भस्तदा कन्यका जायते इति । परन्तु पुत्रकन्योत्पत्तौ कारणान्तरमाह मनुः -

पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।
समेऽपुमान्पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ॥

बृहस्पतिः--स्त्रियाः शुक्रेऽधिके स्त्री स्यात्पुमान् पुंसोऽधिके भवेत् ।
तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च भक्षयेत् ॥
लघ्वाहारां स्त्रियं कुर्यादेवं तं जनयेत् सुतम् ।

वृद्धशातातपः-द्वावेतावशुची स्यातां दम्पती शयने गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥

अनेन वीर्याधिक्ये पुत्रः । रजोऽधिक्ये कन्या भवेदिति सिद्धम् । अत्र समयनियमो नोक्तः । अतः पूर्वापरवचनार्थयोरैकमत्यमेव । समायां रात्रौ चेत्पुरुषस्य वीर्याधिक्यं तदा पुंलक्षणयुक्तः पुत्रः । विषमायां चेत्स्त्रियो रजोऽधिकत्वं तदा कन्या स्त्रीलक्षणयुक्ता वाच्या । यदि विषमायां रात्रौ पुरुषस्य वीर्याधिक्यं तदा स्त्र्याकृतिकः पुरुषः । यदा समायां स्त्रियो रजोऽधिकत्वं तदा पुरुषाकृतिः कन्या स्तनकेशहीना जायते ।

अथ स्त्रिया गर्भाशये वामभागपतितं वीर्यं कन्यां जनयति, दक्षिणभागपतितं सत्पुत्रमित्यपि युक्तियुक्तः प्रकारो बहूनामनुभवसिद्धोऽस्त्यत एव पूर्वपश्चिमायतां शय्यां सौम्यावनतां दक्षिणोत्तरां तु पूर्वावनतां यत्नेन कारयेत् । तत्र संभोगे वीर्यच्युतिसमये स्त्रिया मनसि यस्य स्मृतिर्वा ध्यानं जायते 'तत्सदृशमेवापत्यमुत्पद्यते' तथोक्तं बृहत्संहितायाम्—

जातय मनोभवसुखं सुभगस्य सर्वमाभासमात्रमितरस्य मनो वियोगात् ।
चित्तेन भावयति दूरगताऽपि यं स्त्री गर्भे बिभर्ति सदृशं पुरुषस्य तस्य ॥

अत एव गोपाला अपि गोमैथुनसमये तस्याः पुरतः रक्तं पाटल-कृष्णप्रभृतिवर्णवद्गोजातिः संदृश्यते येन सुन्दराकृतिर्वत्स उत्पद्यते इति चिरकालगतो व्यवहारोऽस्त्यस्मिन् देशे । अतएव पाश्चात्त्यदेशे तु विहारभवने आदर्शचरितानां पुंसां चित्राणि संरक्ष्यन्ते । येनाधानावसरे स्त्रिया ध्यानं चित्रगतमहाजनविषये पतेदिति ।

ऋतौ स्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां पितृभिः सह मज्जति (क) ॥

इति रात्रिकृत्यम् ।

———

(क) अथ प्रजोत्पादने स्त्रीपुरुषयोग्यविचारः सुश्रुते भगवान् धन्वन्तरिः--अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षं पत्नीमावहेत् । पित्र्यधर्मार्थकामप्रजाः प्राप्स्यतीति ॥ किं च तद्वर्षाद्दादशात्काले वर्त्तमानमसृक् पुनः । जरापक्वशरीराणां याति पञ्चाशता क्षयम् ॥ ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् । यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥ जातो वा न चिरं जीवेत् जीवेद्वा दुर्बलेन्द्रियः । तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥ अतिवृद्धायां दीर्घरोगिण्यामन्येन वा विकारेणोपसृष्टायां गर्भाधानं नैव कुर्वीत । पुरुषस्याप्येवं विधस्य त एव दोषाः सम्भवन्ति ॥

## ( १३ ) अथ श्राद्धप्रकरणम्।

तत्रादौ श्राद्धशब्दार्थ उक्तः श्राद्धमञ्जर्याम्—

प्रेतं पितॄँश्च निर्दिश्य भोज्यं यत् प्रियमात्मनः। श्रद्धया दीयते यत्र तच्छ्राद्धं परिकीर्त्तितम्

श्राद्धकरणावश्यकत्वमुक्तं सुमन्तुना—श्राद्धात्परतरं नान्यच्छ्रेयस्करमुदाहृतम्।

आदित्यपुराणेऽपि—

न सन्ति पितरश्चेति कृत्वा मनसि यो नरः। श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते॥

श्राद्धकरणफलमाह याज्ञवल्क्योऽपि

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च॥
प्रयच्छन्ति तथा राज्यं नृणां प्रीताः पितामहाः॥

मत्स्यपुराणे—पितॄन् प्रीणाति यो भक्त्या ते पुनः प्रीणयन्ति तम्।
यच्छन्ति पितरः पुष्टिं स्वर्गारोग्यं प्रजाफलम्॥
देवकार्यादपि पुनः पितृकार्यं विशिष्यते॥

व्यासः—रतिशक्तिर्वरा कान्ता भोज्यं भोजनशक्तिता।
दानशक्तिः सविभवाऽरिपुमारोग्यमेव च॥
श्राद्धपुष्पमिदं प्रोक्तं फलं ब्रह्मसमागमः।

हारीतः—

न तत्र वीरा जायन्तेऽनारोगेण शतायुषः। न च श्रेयोऽधिगच्छन्ति यत्र श्राद्धविवर्जितम्।

तत्र तद्भेदा आद्यश्राद्ध पार्वणैकोद्दिष्ट–वृद्धि–नित्य–गयाकृत्यादयः।

तस्योचितप्रदेशानाह, मनुः—

शुचिदेशं विविक्तं तु गोमयेनोपलेपयेत्। दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत्॥

तथा च भारते—

तस्य देशाः कुरुक्षेत्रं गया गङ्गा सरस्वती। प्रभासं पुष्करं चेति तेषु श्राद्धं महाफलम्॥

तथा च निषिद्धप्रदेशा उक्तास्तत्रैव—

रूक्षं कृमिहतं क्लिन्नं संकीर्णानिष्टगन्धिकम्। देशं त्वनिष्टशब्दाढ्यं वर्जयेच्छ्राद्धकर्मणि

तथा ब्रह्मपुराणे–'नेष्टकारचिते पितॄन् सन्तर्पयेत्'।

तथा चोक्तं दिवोदासीये—

म्लेच्छदेशे तथा रात्रौ सन्ध्यायां विप्रवर्जिते। न श्राद्धमाचरेद्विद्वान् न चाकाशे कथंचन।

स्मृतिसारेऽपि—

नैकवासा न च द्वीपे नान्तरिक्षे कदाचन। श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित्।

परितो जलावृतं स्थलं द्वीपः। ऊर्ध्वावरणहीनं स्थलं त्वन्तरिक्षम्।

तत्र वालुकापिण्डिकानिर्माणप्रमाणमाह मनुः—

उपलिप्ते शुचौ देशे स्थानं कुर्वीत सैकतम्। मण्डलं चतुरस्रं वा दक्षिणावनतं महत्॥

---

अथ च वर्ज्यस्त्री स एवाह—स्तोकां तु न स्त्रियं गच्छेन्नातुरां न रजस्वलाम्। नातिबालां न कुपितामप्रशस्तां च गर्भिणीम्॥ शिवसंहितायाम्—मासे षष्ठे सप्तमे वाऽष्टमे वा प्राप्ते पत्न्या नैव कुर्यात्कदाचित्। होमं स्नानं देवयात्रा तथैव तस्या हस्तेनाशनं विप्रपुण्यम्॥

सैकतं बालुकारचितम्। दक्षिणावनतं पतितजलस्य याम्यदिगभिमुखगत्यनुरोधे-नेत्यर्थः।

आसनादरत्नित्रयान्तरे भोजनपात्रं पितृणां देयमित्याह, हारीतः--

पितृणामासनस्थानादग्रतस्त्रिष्वरत्निषु। उच्छिष्टसंनिधानं तन्नोच्छिष्टासनसन्निधौ॥

यद्यपि श्राद्धं नित्यं तथापि विशेषावसरमाह वृद्धपराशरः पृथ्वीचन्द्रोदये--

श्राद्धं वृद्धावचन्द्रेभच्छायाग्रहणसंक्रमे। नवोदके नवान्ने च नवच्छन्ने गृहे तथा॥

नवैद्यवेषु चेहन्ते पितरो हि मघास्वपि। पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च॥

वृद्धौ अभ्युदये पुत्रजननव्रतबन्धनादौ, अचन्द्रेऽमायां, इभच्छायायां गजच्छायायाम्। ग्रहणे रविचन्द्रग्रहणे। संक्रमे संक्रान्तौ, नवोदके सूर्यसञ्चरेणार्द्रानक्षत्रे, नवान्ने शरदि व्रीह्या, हैमन्ते धान्येन, वसन्ते यवेनेत्यर्थः। नवच्छन्ने गृहस्य नवतृणाच्छादनसमये। तथा चाह याज्ञवल्क्यः--

अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्। द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसंक्रमः॥

व्यतीपातो गजच्छाया ग्रहणं सूर्यचन्द्रयोः। श्राद्धं प्रतिरुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः॥

तत्रापि श्राद्धवेलोक्ता गौतमेन—

आरभ्य कुतुपे श्राद्धं कुर्यादारौहिणं बुधः। विधिज्ञो विधिमास्थाय रौहिणं न तु लङ्घयेत्॥

तथा च शातातपः—रात्रौ श्राद्धं न कुर्वीत राहोरन्यत्र दर्शनात्।

तथा च विष्णुः--

सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणः।
तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम्॥

तथा चोक्तं कृत्यसारसमुच्चये--

पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम्।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥

मातृकमन्वष्टकाकृत्यम्। पैतृकं पार्वणम्। एकोद्दिष्टं वार्षिकम्। वृद्धिनिमित्तकमाभ्युदयिकश्राद्धम्।

अथ श्राद्धपूर्वदिने क्षौरकरणावश्यकत्वमुक्तं ब्रह्मवैवर्त्ते--

व्रतानामुपवासानां श्राद्धादीनां च संयमे। न करोति च यः क्षौरं सोऽशुचिः सर्वकर्मसु॥

स च तिष्ठति कुण्डे च नखादीनां च सुन्दरि!। संयमे व्रतपूर्वदिने इत्यर्थः॥

ब्राह्मणनिमन्त्रणं तु संयमदिने एवोचितम्। तदाह, मनुः—

सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः।
भवितव्यं भवद्भिर्नः श्वोभूते श्राद्धकर्मणि॥

तैजसपात्राभावे मृद्भाण्डेऽपि पाकप्रकार उक्तो निर्णयसिन्धूद्धृतवायुपुराणे--

तैजसानामभावे तु पिठरे मृण्मयेऽपि च। नवे शुचौ प्रकुर्वीत पाकं पित्रर्थमादरात्॥

तैजसपात्रेष्वपि ताम्रपात्रं विशेषफलमुक्तं तत्रैव--

पच्यमानस्तु भाण्डेषु भक्त्या ताम्रमयेषु च। समुद्धरति वै घोरात् पितॄन् दुःखमहार्णवात्॥

तत्र लोहपात्रेण पाकपरिवेषणे दोष उक्तः शातातपेन—

आयसेन तु पात्रेण यदन्नमुपनीयते। भोक्ता विष्ठासमं भुङ्क्ते दाता तु नरकं व्रजेत्॥

तथा च—नापवित्रेण हस्तेन नैकेन न विना कुशम् ।
नायसे नायसेनैव श्राद्धे तु परिवेषयेत् ॥
धर्मः—परिवेषणमिष्टं स्याद्भार्यया पितृतृप्तये ।
फलेस्यानन्तता प्रोक्ता स्वयं च परिवेषणे ॥
धूपदाने शङ्खः—धूपार्थे गुग्गुलुं दद्याद् घृतयुक्तं मधूत्कटम् ।
शातातपः—हस्तवाताहृतं धूपं ये पिबन्ति द्विजोत्तमाः ।
वृथा भवति तच्छ्राद्धं तस्मात्तत्परिवर्जयेत् ॥
दीपदाने मरीचिः—घृताद्वा तिलतैलाद्वा नान्यद्दद्यात्तु दीपकम् ।
घृतमत्र गव्यम् । गव्यघृताभावे तिलतैलमेव । नहि माहिषं घृतम् ।
तथा पुष्पविषये मार्कण्डेय आह—
जात्याश्च सर्वा दातव्या मल्लिकाः श्वेतयूथिकाः ।
ब्रह्माण्डे—शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च ।
गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः ॥
शङ्खः—पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ।
जलोद्भवानि देयानि रक्तान्यपि विशेषतः ॥
श्राद्धसमये शालग्रामशिलाबाणलिङ्गयोः समीपन्यासे विशेषफलमाह—
पद्मोत्तरखण्डे—सकृदभ्यर्चितं लिङ्गं शालग्रामशिलां च यः ।
पीठे संस्थापयित्वा तु श्राद्धं च कुरुते नरः ॥
पितरस्तस्य तिष्ठन्ति कल्पकोटिशतं दिवि ।
तिललक्षणम्-आपस्तम्ब आह—
अटव्यां ये समुत्पन्ना अकृष्टाः फलितास्तथा ।
ते वै श्राद्धे पवित्रास्तु तिलास्ते न तिलास्तिलाः ॥
तथा प्रशस्ताप्रशस्तान्युक्तानि मत्स्यपुराणे—अ० १५ श्लो० २५
यवनीवारमुद्गेक्षुशुक्लपुष्पघृतानि च । प्रशस्तानि ॥
मसूरशणनिष्पावराजमाषकुसुम्भिकाः । पद्मबिल्वार्कधत्तूरपारिभद्राश्च रूषकाः ॥
न देयाः पितृकार्येषु पयश्चाजाविकं तथा । कोद्रवोदारचणकाः कपित्थं मधुकातसी ॥
आमश्राद्धावसरमाहोशनाः—
आत्मनो देशकालाभ्यां विप्लवे समुपस्थिते । आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि ।
सरोजसुन्दरे—अपत्नीकः पराचारी यस्य भार्या रजस्वला ।
आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात्सदैव हि ॥
प्रयोगपारिजाते गोभिलः—
दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् । अन्नेनासम्भवे हेम्ना कुर्यादामेन वा पुनः ॥
आमान्नेन क्रियमाणं श्राद्धं पूर्वाह्णेऽपि कार्यम् ।
शातातपः—आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यतः ।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥

एकस्मिन् दिने पार्वणैकोद्दिष्टयोः पाते प्रथममेकोद्दिष्टम् , ततः पार्वणं कर्त्तव्यम्, एकोद्दिष्टविहितसमयात् पार्वणविहितसमयस्य पश्चात्पतितत्वात् ।

तथा चोक्तं--एकोद्दिष्टं पार्वणञ्च यद्येकस्मिन् दिने भवेत् ।
एकोद्दिष्टं तदा पूर्वं कुर्यात्पश्चाच्च पार्वणम् ॥

भूमिस्वामिपितृभ्योऽग्रभाग एव देय इत्याह व्यासः—

परकीयगृहे यस्तु स्वान् पितॄन् तर्पयेज्जडः । तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् ॥
अग्रभागं ततस्तेभ्यो दद्यान्मूल्यं च जीवताम् ॥

अथार्घपुटकोत्थाने विशेषमाह यमः—

पैतृकं प्रथमं पात्रं तस्मिन् पैतामहं न्यसेत् । प्रपितामहं ततोऽन्यस्य नोद्धरेन्न च चालयेत् ॥
स्पृष्टमुद्धृतमन्यत्र नीतमुद्घाटितं तथा । पाकं दृष्ट्वा व्रजन्त्याशु पितरः प्रशपन्ति च ॥

अत एव पद्धतौ 'दक्षिणादानपर्यन्तं न चालयेत्' ॥ इति लिखितं वृद्धैः ।

अथ श्राद्धभेदेन पिण्डप्रमाणभेदमाहाङ्गिराः--

आर्द्रामलकमात्रांस्तु पिण्डान् कुर्वीत पार्वणे । एकोद्दिष्टे बिल्वमात्रं पिण्डमेकं तु निर्वपेत्
नवश्राद्धे स्थूलतरं तस्मादपि तु दापयेत् । तस्मादपि स्थूलतरमशौचे प्रतिवासरम् ॥

अशौचे वर्णभेदेन दशद्वादशाहाद्यभ्यन्तरे प्रेतशरीरपूरकार्थं दीयमानं पिण्डं सर्व-कर्माधिकं कुर्यात् ।

अथ कर्मान्ते पिण्डत्यागप्रकार उक्तो मत्स्यपुराणे—

पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा । विप्राग्रतो वा विकिरेद्वयोभिरभिवाशयेत् ।
पत्नी तु मध्यमं पिण्डं प्राशयेद्विनयान्विता । आधत्त पितरो गर्भमत्र सन्तानवर्द्धनम् ॥

पिण्डसमीपे विकीर्यमाणं पिण्डशेषान्नं भृत्यपितॄणां भागस्तथोक्तं मार्कण्डेयपुराणे--

'अन्नं तु विकिरेद्भक्त्या भृत्यभागस्तु स स्मृतः ।'

अथ कुशस्वरूपमाह शालङ्कायनः—

सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया । सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद् भवेत् ॥

ऋजुदर्भैः = सरलकुशत्रयरूपैः । द्विगुणैर्मोटकैः ।

पवित्रयोग्यकुशमाह शङ्खः—

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्र चित् ॥

अथ त्याज्यकुशानाह गृह्यपरिशिष्टे—

ये च पिण्डाश्रिता दर्भा यैः कृतं पितृतर्पणम् ।
अमेध्याशुचिलिप्ता ये तेषां त्यागो विधीयते ॥

तथा च लघुहारीतः--

पथि दर्भाश्रितादर्भा ये दर्भा यज्ञभूमिषु । स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ॥
ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे । हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥

श्राद्धदिने रुधिरस्रावे सति दोषः पुराणसमुच्चये—

कृत्वा तु रुधिरस्रावं न विद्वान् श्राद्धमाचरेत् ।

एकं द्वौ त्रीणि वा विद्वान् दिनानि परिवर्जयेत् ॥
तत्रापि विशेषः—'जानूर्ध्वे क्षतजे जाते नित्यकर्मादि नाचरेत् ।' इति।

अथ श्राद्धे प्रशस्तद्रव्याण्याहाश्वलायनः—
कदल्यादिफलैः शस्तैर्मूलैरार्द्रादिकैरपि । गोरसैर्मधुना दध्ना श्राद्धे सन्तर्पयेत्पितॄन् ॥
तथा च मत्स्यपुराणे-उच्छिष्टं शिवनिर्माल्यं वान्तं च मृतकर्पटम् ।
श्राद्धे सप्त पवित्राणि दौहित्रः कुतपस्तिलाः ॥

उच्छिष्टं वत्समुखोच्छिष्टमपि पयः, पयोजनितदधि च, शिवनिर्माल्यम्=गङ्गाजलम्, वान्तम्=मधु, मृतकर्पटम्=पट्टवस्त्रम्, दौहित्रः=कन्यापुत्रो वा खड्गपात्रम् । कुतपः=पञ्चदशधाविभक्तदिनमानस्याष्टमो भागः, वा नेपालकम्बलः ।
श्राद्धे निषिद्धद्रव्याण्याह—कूष्माण्डं महिषीक्षीरं बिल्वपत्रमगद्विजाः ।
श्राद्धकाले समुत्पन्ने पितरो यान्ति निराश्रयाः ॥

श्राद्धकाले स्त्रिया अकर्त्तव्यतोक्ता निर्णयसिन्धौ—
मुक्तकच्छा तु या नारी मुक्तकेशी तथैव च । हसते वदते चैव निराशाः पितरो गताः ॥

श्राद्धे यज्ञोपवीतदानफलं वायुपुराणे—
यज्ञोपवीतं यो दद्याच्छ्राद्धकाले तु धर्मवित् । पावनं सर्वविप्राणां ब्रह्मदानस्य तत्फलम् ॥

श्राद्धे वस्त्रदानावश्यकत्वमुक्तं ब्रह्माण्डपुराणे १६ अ० ३७ श्लो०—
वासो हि सर्वदैवत्यं सर्वदेवैरभिष्टुतम् । वस्त्राभावे क्रिया नास्ति यज्ञदानतपांसि च ॥
तस्माद्वस्त्राणि देयानि श्राद्धकाले तु नित्यशः ॥

श्राद्धकर्त्रा त्रिपुण्ड्रं न धार्यम्, किन्तूर्ध्वपुण्ड्रमेव तदुक्तमपरार्के—
भाले त्रिपुण्ड्रकं दृष्ट्वा स्कन्धे मालां तथैव च निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम् ॥

तथा चोक्तं पद्मपुराणे—
रक्तं चित्राम्बरं छत्रमुपानत्पादुके तथा । रक्तपुष्पं चन्दनं च श्राद्धभूमौ विवर्जयेत् ।

अथ श्राद्धे निमन्त्रणानर्हानाह अपरार्के—
न मित्रं भोजयेच्छ्राद्धे धनैः कार्योऽस्य संग्रहः ।
नारिं न मित्रं यं विद्यात्तं तु श्राद्धे निमन्त्रयेत् ॥

अथ नानास्मृतिभ्यो वर्ज्यविप्रा लिख्यन्ते—
रोगि–वैरि–मित्र–हीनाधिकाङ्ग–धूर्त्त–कृतघ्न-नक्षत्रसूचि–वैद्य–गायक–कायस्थ–कुसीदवृत्तिक–वेदविक्रयि–कवि–देवपूजक–भृतकाध्यापक–वृषलीपति–राजभृत्य–खल्वाटि–दुर्वाल–कुनख–कुष्ठि–यक्ष्मयुक्तापस्मार–विधर्मि–भगजीवि–पौनर्भव–कृष्णदन्त––गृहदाहक–गरद–समुद्रयात्रिक–कुण्ड- गोलक–नाटककर–स्वपुत्रात्तविद्य–रसविक्रयि–शस्त्रदण्डादिनिर्मातृ–पक्षिपोषक–मेषाजमहिषगोक्रयविक्रयकर–धेनुहीन–चोर–शिल्पि–पित्राक्षेपकर–शूद्रयाजक–रजस्वलापति–व्यभिचारि–कुब्ज–वामनापुत्र–कूटसाक्षिक–प्रेतवाहकायाज्ययाजक–हिंसपरिवेतृ–नास्तिका एते वर्ज्याः ।

अथ ब्राह्मणसंख्याविषये मनुराह––
द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा । भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे ॥

सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः ।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ॥

मातृश्राद्धे विशेष उक्तो वृद्धवशिष्ठेन—
मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि । पतिपुत्रान्विता भव्या योषितोऽष्टौ कुलोद्भवाः।

एकत्र निमन्त्रितोऽन्यत्र भोजने दोष उक्तो यमेन--

आमन्त्रितस्तु यो विप्रो भोक्तुमन्यत्र गच्छति ।
नरकाणां शतं गत्वा चाण्डालेष्वभिजायते ॥

तथा च स्मृत्यन्तरम्—

'निमन्त्रितो विप्रोऽन्यत्र न किञ्चिदपि भुञ्जीत । न त्वन्यत्र कार्यार्थं गच्छेन्न चिरं कुर्यान्नाध्वानं गच्छेन्न हिंसां कुर्यान्न भारमुद्वहेन्न कलहं कुर्यान्न स्त्रियं सेवेत ।'

निमन्त्रितविप्रस्य त्यागोऽवमानं च कदापि न कर्तव्यम्, करणे दोष उक्तोऽपरार्के—
केतनं कारयित्वा तु योऽतिपातयति द्विजम् । ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते ॥
आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत् । अतिकृच्छ्रासु घोरासु तिर्यग्योनिषु जायते ॥

केतनंनिमन्त्रणम् ।

प्रमादान्निमन्त्रितविप्रत्यागे हारीत आह—
प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः । तर्पयित्वा यथान्यायं सर्वं तत्फलमश्नुते ॥
एतत्प्रमादमूलके विस्मरणे, अप्रमादमूलके तु—

एतस्मिन्नहनि प्राप्ते ब्राह्मणे नियमः शुचिः ।
(१)यतिचान्द्रायणं कृत्वा तस्मात्पापात्प्रमुच्यते ॥

श्राद्धे निषिद्धभोजनलक्षणमाह हारीतः—

उद्धृत्य पाणिं विहसन् सक्रोधो विस्मयान्वितः ।
श्राद्धकाले तु यद् भुक्तं न तत्प्रीणाति वै पितॄन् ॥

तथा च वृद्धशातातपः—आसने पादमारोप्य यद्भुङ्क्ते च द्विजोत्तमः ।
हन्ति दैवं च पित्र्यं च तदन्नं च प्रजाः पशून् ॥

भोजने सर्वप्रथमं कवलग्रहणे दोष उक्तः शङ्खेन 'नाग्रासनस्थः पूर्वमश्नीयात् । नाभ्यधिकं दद्यान्न प्रतिगृह्णीयात् ।" हारीत आह—
पङ्क्त्यां वै चोपविष्टेभ्यः समं गन्धादि भोजनम् । न पङ्क्त्यां विषमं दद्यान्न याचेन्न च दापयेत् ।
याचको दापको दाता सर्वे निरयगामिनः ॥

ब्राह्मणभोजनावसरेऽन्नादिगुणं न पृच्छेत् । तदाह मनुः--
न च द्विजातयो ब्रूयुर्दात्रा पृष्टान् हविर्गुणान् ।

---

(१) पिण्डानष्टौ समश्नीयान्मासं मध्यन्दिने रवौ । यतिचान्द्रायणं ह्येतत्सर्वकल्मषनाशनम् ॥
कुक्कुटाण्डप्रमाणं वै ग्रासन्तु परिकल्पयेत् ।
विशेषनियमश्चास्य चान्द्रायणव्रतवासरे विलोक्य इति ॥

तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥

भोक्तुर्विषये पृच्छा शोभना, भोजयितुः पक्षे न शोभना इति। तथा च मनुः—

यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥

भोजने लज्जयाऽयाचनं दोषायाह शातातपः—

अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम्। न याचते द्विजो मूढः स भवेत्पितृघातकः ॥
अपेक्षितं यो न दद्याच्छ्राद्धार्थमुपकल्पितम्। कृपणो मन्दबुद्धिस्तु न स श्राद्धफलं लभेत् ॥

तथा च वाराहपुराणे—

याचते यदि दातारं ब्राह्मणो ज्ञानदुर्बलः। पितरस्तस्य तुष्यन्ति दातुर्भोक्तुर्न संशयः ॥

भोजनसमये ब्राह्मणान् हास्यवचनैः शनैः शनैर्भोजयेदित्युक्तं ब्रह्माण्डपुराणे—

हर्षयेद्ब्राह्मणांस्तुष्टो भोजयेच्चाशनं शनैः। अन्नाद्येनासकृच्चैनान् गुणैश्च परिचोदयेत्।

स्वगृहे श्राद्धं कृत्वा परगृहे तद्दिने न भोक्तव्यमित्याह—शातातपः—

श्राद्धं कृत्वा परे श्राद्धे भुञ्जते ये तु विह्वलाः।
पतन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः ।'

मनुः—ब्राह्मणं भिक्षुकं वाऽपि भोजनार्थमुपस्थितम्।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत् ॥

यमः—भिक्षुको ब्रह्मचारी वा भोजनार्थमुपागतः।
उपविष्टेषु तु प्राप्तः कामं तमपि भोजयेत् ॥

श्राद्धोत्तरं वर्ज्यकार्याणि—पुनर्भोजनमध्वानं भाराध्ययनमैथुनम्।
दानं प्रतिग्रहं होमं श्राद्धं भुक्त्वाऽष्ट वर्जयेत् ॥

अथ भोजनसमये विशेषनियम उक्तोऽपरार्के—

मांसापूपफलेक्ष्वादि दन्तच्छेदं च भक्षयेत्। ग्रासशेषं न पात्रे स्यात्पीतशेषं तु नो पिबेत्।

शातातपः—हस्तं प्रक्षाल्य यश्चापः पिबेद् भक्त्या द्विजोत्तमः।
तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः ॥

यमः—यस्तु पाणितले भुङ्क्ते यस्तु वायुं समुत्सृजेत्।
न तस्य पितरोऽश्नन्ति यश्चैवाग्रे प्रशंसयेत् ॥

श्राद्धं कृत्वाऽध्वगमनादौ निषिद्धे कर्मणि कृते फलमाह, व्यासः—

अध्वनीनो भवेदश्वः पुनर्भोजी च वायसः। होमकृन्नेत्ररोगी स्यात्पाठादायुः क्षयो भवेत् ॥
दानं निष्फलतामेति प्रतिग्राही दरिद्रताम्। कर्मकृज्जायते दासो मैथुनो शूकरो भवेत्।

श्राद्धकर्तुर्निषिद्धकर्माणि पद्मपुराणे—

दन्तानां काष्ठसंयोगं तैलाभ्यङ्गं रतिस्तथा। भेषजं च परान्नं च श्राद्धकर्त्तैव वर्जयेत् ॥
पुनर्भुक्तिं व्यवायं चाध्ययनाध्यापने तथा। दानं प्रतिग्रहः शूद्रभाषणानृतभाषणे ॥
दिवास्वापाध्वगमने क्रोधञ्च कलहं तथा। एतान् कर्त्ता च भोक्ता च श्राद्धेषु परिवर्जयेत् ।

अङ्गीकृतपरित्यागमाह्वाने च विलम्बितम् । सन्ध्यां प्रतिग्रहं होमं श्राद्धकर्तैव वर्जयेत् ॥

स्मृत्यन्तरे-द्यूतं च कलहं चैव सायं सन्ध्यां दिवाशयम् ।

श्राद्धकर्ता च भोक्ता च पुनर्भुक्तिं च वर्जयेत् ॥

निर्णयसिन्धौ—

पुनर्भोजनमध्वानं भारमायासमैथुनम् । श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद् विवर्जयेत् ॥

स्वाध्यायं कलहं चैव दिवास्वापं तथैव च ।

अध्वानं = मार्गगमनम्, क्रोशाधिकगमनं निषिद्धम् ।

येषां पार्वणं न कर्तव्यं तानाह भविष्ये--

अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये । तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥

पितरि मृते, पितामहे च जीवति सति कर्त्तव्यतोक्ता कात्यायनेन--

जीवेत्पितामहो यस्य पिता चान्तरितो भवेत् । पितुरेकस्य दातव्यमेवमाहुर्मनीषिणः ॥

यस्य प्रमीतौ द्वौ स्यातां जीवेच्च प्रपितामहः । पिण्डौ निपृणुयात्पूतौ भोजयेत्प्रपितामहम् ॥

अत एव यस्य कुमारस्य पितृपितामहप्रपितामहा जीवन्ति तस्य नान्दीमुखश्राद्धं न भवतीति ।

श्राद्धकालेऽनुपनीतोऽपि कर्त्ता वैदिकमन्त्रं पठेत् । तथोक्तं याज्ञवल्क्येन:-

नाभिव्याहारयेद् ब्रह्म यावन्मौञ्जीनिबन्धनम् । मन्त्राननुपनीतोऽपि पठेदेवैक औरसः ॥

बृहस्पतिः-बह्वीनामेकपत्नीनामेष एव विधिः स्मृतिः ।

एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥ इति ।

अथ गृहस्थाश्रमकरणावश्यकत्वमुक्तमपरार्के--

अपत्नीको नरो भूप कर्मयोग्यो न जायते । ब्राह्मणः क्षत्रियो वाऽपि वैश्यः शूद्रोऽपि वा नृप ॥

पत्नी धर्मार्थकामानां कारणं प्रवरं नृणाम् ॥

याज्ञवल्क्यः-यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते ।

तथाऽन्येनाप्युक्तम्-त्रिवर्गवर्द्धनादन्ते विरक्ते तु चतुर्थकः । अत्र चतुर्थो मोक्षः ॥

तथा चोक्तं मार्कण्डेयपुराणे--

यदा भार्या च भर्ता च परस्परवशानुगौ । तदा धर्मार्थकामानां त्रयाणामपि सङ्गतम् ॥

कथं भार्यामृते धर्ममर्थं वा पुरुषः प्रभो । प्राप्नोति काममथवा तस्यां त्रितयमाहितम् ॥

तथैव भर्त्तारमृते भार्या धर्मादिसाधने । न समर्था त्रिवर्गोऽयं दाम्पत्यं समुपाश्रितः ॥

देवतापितृभृत्यानामतिथीनाञ्च पूजनम् । न पुम्भिः शक्यते कर्त्तुमृते भार्यां नृपात्मज ! ॥

प्राप्तोऽपि चार्थो मनुजैरानीतोऽपि निजं गृहम् । क्षयमेति विना भार्यांकुभार्यां संश्रयेऽपि वा ॥

कामस्तु तस्य नैवास्ति प्रत्यक्षेणोपलक्ष्यते । दम्पत्योः सहधर्मेण त्रयीधर्ममवाप्नुयात् ॥

पितॄन् पुत्रैस्तथैवान्नसाधनैरतिथीन्नरः । पूजाभिरमराँस्तद्वत्साध्वीं भार्यां नरोऽर्हति ॥

क्रियाश्चापि विना भर्त्रा धर्मकामार्थसन्ततिः ।

न च तस्मात् त्रिवर्गोऽयं दाम्पत्यमधिगच्छति ॥

अत एव तत्रैव पतिकर्त्तव्यता—

भर्त्तव्या रक्षितव्या च भार्या हि पतिना सदा ।

धर्मार्थकामसंसिद्ध्यै भार्या भर्तृसहायिनी ॥
स्त्रीपुंसोर्युक्तयोस्तात सहैकासनसंस्थयोः । करोति सुखभङ्गं यो नरकं स व्रजेद् ध्रुवम् ॥
कामतोऽकामतो वाऽपि पश्येद्यः सुरतोन्मुखम् ।
स्त्रीविच्छेदो भवेत्तस्य ध्रुवं सप्तसु जन्मसु ॥
कामिनां निर्विकाराणामेतच्छास्त्रनिदर्शनम् ।
निर्विकारस्य हि शिशोर्न दोषः कश्चिदेव हि ॥

विवाहावसरेऽशौचनिपाते याज्ञवल्क्यः--
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे । आपद्यपि च कष्टायां सद्यः शौचं विधीयते॥
विष्णुः--व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥
षट्त्रिंशन्मते-विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥
अत्र पराशरः-भुञ्जानेष्वत्र विप्रेषु त्वन्तरा मृतसूतके ।
अन्यगेहोदकाचान्ताः सर्वे तु शुचयः स्मृताः ॥
एतदाशौचात्पूर्वमपृथक्कृतान्नविषयम् ।
बृहस्पतिः—विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
पूर्वसंकल्पितान्नेषु न दोषः परिकीर्त्तितः ॥
यो हि दीनानाथवरकन्ययोर्विवाहं कारयति तत्फलमुक्तं भविष्ये
विवाहादिक्रियाकाले तत्क्रियासिद्धिकारणम् ।
यः प्रयच्छति धर्मज्ञः सोऽश्वमेधफलं लभेत् ॥
अप्रसूतकन्यापतिगृहे तत्पितुर्भोजननिषेधः—
अप्रजायां तु कन्यायां न भुञ्जीत कदाचन । दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचति ॥
आदित्यपुराणे—विष्णुं जामातरं मन्ये तस्य कोपं न कारयेत् ।
अप्रजायां तु कन्यायां नाश्नीयात्तस्य वै गृहे ॥
विवाहादिचतुर्थिमध्ये श्राद्धादिपाते फलमाह ज्योतिर्निबन्धे--
विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात् ।
वैधव्यमाप्नोति तदाशु कन्या जीवेत्पतिश्चेदनपत्यता स्यात् ॥
पितृगृहे भुक्त्वा पुनस्तद्दिन एव स्वामिगृहे न भोक्तव्यम् ।
मत्स्यसूक्ते—भुक्त्वा पितृगृहे कन्या भुङ्क्ते स्वामिगृहे यदि ।
दौर्भाग्यं जायते तस्याः शपन्ति कुलनायिकाः ॥
एकस्मिन् मण्डपे युगपद् विवाहादिनिषेधमाह, स्मृतिसारावल्याम्—
भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा । एकस्मिन्मण्डपे चैव न कुर्यान्मुण्डनद्वयम् ॥
सोदरविषयमेतत् , तथाहि –
एकोदरप्रसूतानामेकस्मिन् वासरे पुनः । विवाहं नैव कुर्वीत मुण्डनोपरि मुण्डनम् ॥

मेधातिथिः—पृथक् मातृजयोः कार्यौ विवाहस्त्वेकवासरे ।
एकस्मिन् मण्डपे कार्यः पृथग्वेदिकयोस्तथा ॥

सहजयोर्वरयोः सहोदरकन्यके न विवाह्ये । एकस्मै वराय सहजकन्यकाद्वयं न देयम् । यथाऽऽह नारदः—

'न चैकजन्मनोः पुंसोरेकजन्ये तु कन्यके ।
न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन ॥' इति वशिष्ठोक्तेः ।

अथ कुत्सितकन्यालक्षणम् , मनुः--

नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोमां न वाचाटां न पिङ्गलाम् ॥
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ॥ अ० ३।८।
नातिस्थूलां नातिकृशां न दीर्घां नातिवामनाम् ।
वयोऽधिकां नाङ्गहीनां न सेवेत्कलहप्रियाम् ॥ अ० ३।प्र०।१।

अथ कन्याया अङ्गलक्षणेन शुभाशुभत्वम् ।

चरणौ कोमलौ मांसलौ रक्तवर्णौ संहताङ्गुलिकौ भूमिसंलग्नसर्वाङ्गुलिकौ किञ्चिदुष्णशौ कमलशङ्खरथध्वजचक्रमीनविमानाङ्कितौ समौ च प्रशस्तौ । शूर्पाकारौ विवर्णौ शुष्कौ कर्कशौ भूम्यलग्नकनिष्ठानामिकाङ्गुलिकौ वैधव्यसूचकौ । नखाः शूर्पाकारा दुःखसूचकाः । चलत्या यस्याः पादाभ्यां धूलिरुच्चलेत्सा कुलत्रयं त्यक्त्वा दुष्टेन मोदते । यस्याः पादाङ्गुल्योऽन्योन्यारूढा भवन्ति, सा पतिं हत्वाऽन्ते वारवनिता भवेत् । यस्या अनामिका भूमिं न स्पृशति सा पतिद्वयं, यस्या मध्या न स्पृशति सा पतित्रयं हन्ति । यस्याः कनिष्ठा न स्पृशति साऽपि पतिं हत्वाऽन्ते जारेण रमते । यदि पादनखाः कोमला वर्त्तुला उन्नतास्ताम्रवर्णास्तदा सा भोगिनी भवेत् । तुङ्गपार्ष्णिः कुलटा, दीर्घपार्ष्णिर्गदाकुला भवेत् । यस्या रोमहीने कदलीस्तम्भोपमे जङ्घे वर्त्तुले समे मांसले भवतः सा राज्ञी भवति । एकस्माच्छिद्रादेकमेव रोम यस्याः सा राज्ञी, द्विरोमा सौख्यभागिनी, त्रिरोमा विधवा भवति । उन्नतौ नितम्बौ यस्याः साऽपि भोगिनी । [ निर्मांसा विनता दीर्घा चिपटा शकटाकृतिः । लघ्वी रोमाकुला नार्या वैधव्यं दिशते कटिः ] योनिर्वामनता कन्याजननी । दक्षनता पुत्रजननी । रोमहीनोऽश्वत्थपत्राकृतिर्गूढमणिः शुभः । हष्टनासश्चुल्लिहकोदरसदृशः कुरङ्गखुरसदृशो भगो न शुभः । पृथूदरी पुत्रजननी भेकोदरी बलिष्ठपुत्रजननी । उन्नतोदरी कठिनोदरी वन्ध्या । घटाकृतिमृदङ्गाकृतिजठरवती पुत्रवर्जिता । रोमशहृदया पतिहीना । समस्तनवती भाग्यवती । दक्षस्तनोन्नता पुत्रजननी । वामस्तनोन्नता कन्याजननी। स्थूलास्यौ स्तनौ न प्रशस्तौ । विनतस्कन्धा पुत्रिणी । ह्रस्वस्कन्धा सुखिनी । पुष्टस्कन्धा कामिनी । कुटिलस्कन्धा मदान्धा । लोमाकुलस्कन्धा विधवा । स्रस्तांसा धन्या । उन्नतांसा विधवा । समस्वच्छदशना सुभगा । असमपीतश्यावदन्ता न शुभा । नासिका क्षुद्रच्छिद्रा शस्ता । उन्नताक्षी अल्पायुषी । कुटिलाक्षी वृत्ताक्षी कुटिला । अजाक्षी केकराक्षी कासराक्षी दुर्भगा । पिङ्गाक्षी कपोताक्षी दुःशीला । कोटराक्षी महादुष्टा ।

रक्ताक्षी पतिघातिनी । बन्ध्या दक्षकाणाक्षी । पुंश्चली वामकाणाक्षी । मधुपिङ्गलाक्षी सदा धनवती । ललाटे मशकः सुखसूचकः । कपोलेऽपि । हृदयेऽपि । नासिकायां मशकस्तदा पतिहन्त्री । कण्ठे तिलके पतिप्रिया । हसिते कपोलद्वये कूपिके भवतः साऽपि पुंश्चली । इत्यादि ।

वरपक्षाद् द्रव्यग्रहणे कन्यापितुर्महान् दोष उक्तो मनुना--

न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि ।
गृह्णञ्छुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ॥
स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः ।
नारी यानानि वस्त्रं वा ते पापा यान्त्यधोगतिम् ॥
यासां नाददते शुल्कं ज्ञातयो न स विक्रयः ।
अर्हणं तत् कुमारीणामानृशंस्यं च केवलम् ॥

कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च । कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥

तथा च कन्यापक्षीयजनस्य वरद्रव्यग्रहणे कन्या क्रयक्रीता भवति तत्पुत्रदत्तपिण्डादि पितरो न गृह्णन्तीत्यपि महान् दोषः । तदुक्तं कालिकापुराणे--

क्रीता या वनिता मूल्यैः सा दासीति निगद्यते ।
तस्यां यो जायते पुत्रो दासः पुत्रस्तु स स्मृतः ॥
न राज्ञो राजभाक् स स्याद्विप्राणां नापि श्राद्धकृत् ।
अधमः सर्वपुत्रेभ्यस्तस्मात्तं परिवर्जयेत् ॥

अथ वरगुणपरीक्षणमाह शिवपुराणे--

कुलं च शीलं च सनाथता च विद्या च वित्तं च वपुर्वयश्च ।
एतान् गुणान् वीक्ष्य वराय देया कन्याजनैः शेषमचिन्तनीयम् ॥

मूर्खाय कन्या न देया । तथाह शुभकर्मनिर्णये—

यस्य त्वेकगृहे मूर्खो दूरस्थश्च गुणान्वितः ।
गुणान्विताय दातव्या नास्ति मूर्खे व्यतिक्रमः ॥

योग्यवरालाभे कन्यावयोऽतिक्रमणमपि न दोषाय भवतीत्याह, मनुः—

काममामरणात्तिष्ठेद् गृहे कन्यर्त्तुमत्यपि ।
न त्वेवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ अ० ९।६।

भ्रातृहीनकन्याविवाहवर्ज्यत्वमाह, मनुः—

यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥ अ० ३।११।

विवाहावसरे तत्साधकानि मिथ्यावचनान्यपि न दोषाय भवतीत्युक्तं भारते-

विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे ।
विप्रस्य चार्थे ह्यनृतं वदेत पञ्चानृतान्याहुरपातकानि ॥

अतो येन सत्यवाक्येन विवाहबाधा जायते तत्सत्यमप्यसत्यव्याहारवद्दोषाय, तथा

येनासत्यप्रयोगेन विवाहादिकार्यसाधनं भवति, तदसत्यमपि सत्यव्याहारवद्धर्माय एव भवतीत्युक्तं देवीभागवते—

सत्यं न सत्यं खलु यत्र हिंसा दयाऽन्वितं चानृतमेव सत्यम् ।
हितं नराणां भवतीति येन तदेव सत्यं मुनिनाऽत्र गीतम् ॥

परिवेदनमाह—दाराऽग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

कुलीनकन्या विवाह्येत्याह, वशिष्ठः—

विद्याप्रणष्टा पुनरभ्युपैति जातिप्रणाशे त्विह सर्वनाशः ।
कुलापदेशेन हयोऽपि पूज्यस्तस्मात् कुलीनां स्त्रियमुद्वहन्ति ॥

कालिकापुराणे—बहुदारः पुमान्यस्तु रागादेकां भजन् स्त्रियम् ।
स पापभाक् स्त्रीजितश्च तस्याशौचं सनातनम् ॥
यद्दुःखं जायते स्त्रीणां स्वाम्यसंभोगजं विभो ।
न तस्य सदृशं दुःखं किञ्चिदन्यत्र विद्यते ॥

सर्वदा यो दिवारात्रौ सन्ध्यायां वनितारतः । सेवते सुरतं तस्मिन्राजयक्ष्मा वसिष्यति ॥

गर्गोऽप्याह—ज्येष्ठे तिष्ठति सोदर्ये न कुर्याद्दारसंग्रहम् ।
आवसथ्यं तथाऽऽधानं पतितस्त्वन्यथा भवेत् ॥

अत्र सोदर्यग्रहणाद्वैमात्रेयादौ भ्रातरि ज्येष्ठे अविवाहिते कनिष्ठस्य विवाहो न दुष्यतीति । स्पष्टमुक्तं शातातपेन—

पितृव्यपुत्रसापत्नपरनारीसुतेषु च । ज्येष्ठेष्वपि च तिष्ठत्सु भ्रातॄणां तु कनीयसाम् ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

अत्र सापत्नो वैमात्रेयः । परनारीसुताः क्षेत्रजदत्तकाद्याः । तथा च—

क्लीबे देशान्तरस्थे च पतिते भिक्षुकेऽपि वा ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥

क्लीबे सन्तानोत्पादकशक्तिशून्ये, देशान्तरस्थे द्वादशाधिकवर्षकालान्तरिते, पतिते जातिबहिष्कृते, भिक्षुके यतौ, योगशास्त्राभियुक्ते विरक्ते ज्येष्ठे सति न दोषः ।

तथा च कात्यायनः—

देशान्तरस्थक्लीबैकवृषणानसहोदरान् । वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः ॥
जडमूकान्धबधिरकुब्जवामनषण्डकान् । अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा । कुहकांस्तस्करांश्चापि परिविन्दन्न दुष्यति ॥

अर्थात्स्वसवर्णविवाहयोग्यतावति ज्येष्ठेऽनूढे सति दोषोऽन्यथा न दोषः । अत्र प्रायश्चित्तादि प्रायश्चित्तग्रन्थे विलोक्यम् ।

एवं ज्येष्ठायामविवाहितायां कनिष्ठाया अपि विवाहो निषिद्धः । तत्रानूढायां पूर्वजायां यस्या विवाहः साऽग्रेदिधिषूः । ज्येष्ठा तु दिधिषूः स्मृता, यथाऽऽह देवलः

ज्येष्ठायां यद्यनूढायां कन्यायामूह्यतेऽनुजा ।

या साऽग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता ॥

अत्र अग्रेदिधिषूपतिस्तु प्राजापत्यं चरित्वा तामेव ज्येष्ठां पश्चादन्येनोढामुद्वहेत् । दिधिषूपतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा स्वोढां ज्येष्ठां कनीयस्याः पूर्वे विवाहे दत्त्वाऽन्यामुद्वहेदिति मिताक्षरायाम् ।

एवं ज्येष्ठे गृहान्निर्गते, द्वादशाब्दसमयं प्रतीक्ष्य श्राद्धं कृत्वा कनिष्ठो विवाहं कुर्यात् । तत्पश्चाद्यदि दैवाज्ज्येष्ठः समागच्छति तदा सोऽपि शान्तिं कृत्वा विवाहं कुर्यात्तत्र न परिवेदनम् । शान्तिकरणे पुनरादितः संस्कारदर्शनात् तस्य ज्येष्ठत्वमपगतम् । प्राप्तबन्धनादिराजदण्डे सति ज्ञातज्जीवने यावत्स बन्धनान्मुच्यते तावत्प्रतीक्षणं कर्त्तव्यमिति ।

त्याज्यस्त्रीविशेषा आह, याज्ञवल्क्यः—

सुरापी व्याधिता धूर्त्ता वन्ध्याऽर्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाऽधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ अ० १।७३।

अधिवेत्तव्या त्याज्येत्यर्थः । तत्त्यागसमयावधिमाह मनुः—

बन्ध्याऽष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥ अ० ९।८१।

तत्र विशेषमाह याज्ञवल्क्ये देवलः—

एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति ।
समर्थस्तोषयित्वाऽर्थैः पूर्वोढामपरां व्रजेत् ॥

द्वितीयविवाहे समय उक्तो निर्णयसिन्धौ—

प्रमदामृतिवासरादितः पुनरुद्वाहविधिर्वरस्य च ।
विषमेऽयुगवत्सरे शुभो युगलं चापि मृतिप्रदं भवेत् ॥

अथ पुरुषभेदाः, मार्कण्डेयपुराणे ( अ० २१ )—

तदुपात्तं यशः पित्रा धन वीर्यमथापि वा । तन्न हापयते यस्तु स नरो मध्यमः स्मृतः ॥
तद्वीर्यादधिकं यस्तु पुनरन्यत् स्वशक्तितः । निष्पादयति तं प्राज्ञाः प्रवदन्ति नरोत्तमम् ॥
यः पित्रा समुपात्तानि बलवीर्ययशांसि वै । न्यूनतां नयति प्राज्ञास्तमाहुः पुरुषाधमम् ॥

पुत्रेण नातिशयितो यः प्रज्ञादानविक्रमैः ।
धिग् जन्म तस्य यः पित्रा लोके विज्ञायते नरः ॥
यः पुत्रात्ख्यातिमभ्येति तस्य जन्म सुजन्मनः ।
आत्मना ज्ञायते धन्यो मध्यः पितृपितामहैः ॥
मातृपक्षेण मात्रा च ख्यातिमेति नराधमः ।

तथा च—उत्तमा आत्मना ख्याताः पित्रा ख्यातास्तु मध्यमाः ।
मातुलेनाधमाः ख्याताः श्वशुरेणाधमाधमाः ॥

अथ पोष्यश्वालक्षणम् ।

बृहत्संहितायाम् ( अ० ६२ )—

पादाः पञ्चनखास्त्रयोऽग्रचरणाः षड्भिर्नखैर्दक्षिणः,

ताम्रोष्ठाग्रनसो मृगेश्वरगतिर्जिघ्रन् भुवं याति च ।
लाङ्गूलं ससटं दृगृक्षसदृशा कर्णौ च लम्बौ मृदू,
यस्य स्यात्स करोति पोष्टुरचिरात्पुष्टां श्रियं श्वा गृहे ॥

यस्य शुनोऽग्रदक्षचरणे षण् नखाः, शेषेषु पञ्च पञ्च नखा भवन्ति ओष्ठाग्रनासिके रक्तवर्णे, सिंहवद्गमनशीलः, भुवं जिघ्रन् याति । पुच्छं पृथुलोमयुक्तं, भल्लुनेत्रसदृशे नेत्रे, लम्बिता कोमलौ च कर्णौ न तु शृगालवदूर्ध्वकर्णौ । एवंलक्षणलक्षितकुक्कुरः पालकस्य गृहे पालितः सन् पूर्णा लक्ष्मीं सत्वरमेव करोति ।

तथा कुक्कुरीलक्षणम्--

पादे पादे पञ्च पञ्चाग्रपादे वामे यस्याः षण्नखाः मल्लिकाक्ष्याः ।
वक्रं पुच्छं पिङ्गला लम्बकर्णी या सा राष्ट्रं कुक्कुरी पाति पोष्टुः ॥

वामेऽग्रचरणे षट् , शेषेषु पञ्च पञ्च नखाः, तथा मल्लिकापुष्पाकृति नेत्रात्परितोधावल्यञ्च, लाङ्गूलं च वक्रं, लम्बकर्णी कपिलवर्णा च एवं या शुनी सा पालकस्य शुभं दिशति ।

## ( १५ ) अथ (क) व्रतनियमः ।

तत्र नक्तभोजिजनावश्यककर्त्तव्यमुक्तं देवीपुराणे--

हविष्यभोजनं स्नानं सत्यमाहारलाघवम् । अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत् ॥

व्रतमात्रे नियम उक्तो भविष्ये--

क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः । देवपूजाऽग्निहवनं सन्तोषस्तेयवर्जनम् ॥
सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः ॥

अथोपवासशब्दार्थः--

उपावृतस्तु दोषेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वदोषविवर्जितः ॥

तथा च शातातपः—

गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम् । उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥

अत्र दन्तधावनं पत्रद्वारा कार्यम्—

उपवासे तथा पित्र्ये न खादेद्दन्तधावनम् । दन्तानां काष्ठसंयोगाद्दहत्यासप्तमं कुलम् ॥

देवलः—उपवासः प्रणश्येत दिवास्वापात्तमैथुनैः ।
अत्यये चाम्बुपानेन नोपवासः प्रणश्यति ॥

तिथिप्रदीपे—कांस्यं मांसं मसूरञ्च चणकं कोद्रवन्तथा ।

---

( क ) देवलः—व्रतोपवासनियमैः शरीरोत्तापनैस्तथा । वर्णाः सर्वे विमुच्यन्ते पातकेभ्यो न संशयः । अनेन शौचाचारनियमवतां चतुर्णामपि वर्णानां स्त्रीपुरुषसाधारण्येन व्रतेष्वधिकारो गम्यते । **महाभारते**—मामुपाश्रित्य कौन्तेय ! येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्च शूद्राश्च तेऽपि यान्ति परां गतिम् ॥ अत्रायं विशेषो यत् योषितां भर्त्तुरादेशं विना स्वातन्त्र्येण व्रतादिषु नाधिकारः । **अथ व्रतकर्त्तृमाहात्म्यम् , भविष्ये**—अनग्नयस्तु ये विप्रास्तेषामेव विधीयते । व्रतोपवासनियमैर्नानादानैस्तथा नृप ! ॥ देवादयो भवन्त्येवं तेषां प्रीता न संशयः ।

शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥

तथाचोक्तं शुभङ्करीयतिथिनिर्णये—

'तत्रोपवासदिने दन्तधावनं हिंसामनृतं चौर्यमसकृज्जलपानं ताम्बूलभक्षणं स्त्रीसंयोगं दिवास्वापं द्यूतं च वर्जयेत् । प्रमादतः कृते सति विष्णुधर्मे—

श्राद्धोपवासदिवसे कृत्वा दन्तस्य धावनम् । गायत्र्याशतशः पूतमम्बु प्राश्य विशुद्ध्यति ॥

हिंसाचौर्ययोः प्रायश्चित्तं स्मृतिसंग्रहे—

स्तेनहिंसकयोः सख्यं कृत्वा स्तैन्यं च हिंसनम् ।
प्रायश्चित्तं व्रती कुर्याज्जपेन्नामशतत्रयम् ॥

नामविष्णुनाम कात्यायनः—

मिथ्यावादे दिवास्वापे बहुशोऽम्बुनिषेवणे ।
अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः ॥

अष्टाक्षरं तु 'ओं(क) नमो नारायणाय' इति ।

'रेतः सेकात्मकं भोगमृतेऽन्यत्र क्षयः स्मृतः ॥'

अस्यार्थः—रेतः सेके ऋतुकाले गर्भाधाननिमित्तकम् । तदात्मकं भोगं वर्जयित्वा अन्यत्र भोगे व्रतस्य क्षयः । ऋतुकालश्च षोडशनिशा ।

असंभाष्यं समाभाष्य तुलस्यतसिकादलम् ।
आमलक्याः फलं वाऽपि व्रती प्राश्य विशुद्ध्यति ॥

( द्यूते दिवास्वप्नवदिति )।

तत्रोपवासात्पूर्वदिने एकभुक्तस्यावश्यकत्वमुक्तं कृत्यशिरोमणौ—शङ्खलिखिताभ्याम्—

एकभुक्तेन यो मर्त्य उपवासव्रतं चरेत् । तस्यैव व्रतसाङ्गत्वं नान्येषां तु कदाचन ॥

तत्र संयम उक्तो लघुनारदीये—

दशम्यादि महीपाल त्रिदिनं परिवर्जयेत् । गन्धताम्बूलपुष्पादि स्त्रीसंभोगं महायशाः ॥

कूर्मपुराणे—कांस्यं मांसं मसूरान्नं चणकं कोद्रवं तथा ।
शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ।

तथा च—शाकं मांसं मसूरांश्च पुनर्भोजनमैथुने ।
द्यूतमत्यम्बुपानं च दशम्यां वैष्णवस्त्यजेत् ॥

असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् । उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् ।

तथा नारदीये—

अक्षारलवणाः सर्वे हविष्यान्ननिषेवणाः । अवनीतल्पशयनाः प्रियासंगमवर्जिताः ॥

गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम् । व्रतस्थो वर्जयेत्सर्वं यच्चान्यच्च निराकृतम् ।

---

( क ) स्त्रीशूद्रयोः प्रणवोच्चारणे दोषमाह नृसिंहतापनीयश्रुतौ—'सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयानेच्छान्ति' इति । तथा च शूद्रकमलाकरे—'न दर्भानुद्धरेच्छूद्रः' इत्युपक्रम्याह—'नोच्चरेत् प्रणवं मन्त्रं पुरोडाशं न भक्षयेत् । न शिखी नोपवीती स्यान्नोच्चरेत् संस्कृतां गिरम् ।' इति ।

स्तेनहिंसकयोः सख्यं कृत्वा स्तैन्यं च हिंसनम्।
प्रायश्चित्तं व्रती कुर्याज्जपेन्नामशतत्रयम्॥
मिथ्यावादे दिवास्वापे बहुशोऽम्बुनिषेवणे। अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः॥
'ओं नमो नारायणाय' इत्यष्टाक्षरमन्त्रः।

अथ द्वादश्यां पारणादिने वर्ज्यानाह बृहस्पतिः—

दिवानिद्रां पराऽन्नं च पुनर्भोजनमैथुने। क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत्॥

ब्रह्मपुराणेऽपि

पुनर्भोजनमध्यायो भार आयासमैथुने। उपवासफलं हन्युर्दिवानिद्रा च पञ्चमी॥

अत्रोक्तवचनाभ्यां पारणादिनेऽपि एकभुक्तमर्थाद्रात्रौ भोजनम् न विहितम्। एवमेव शिष्टाचारः।

अथाशक्तजनकृते एकभुक्तवर्जितमपि व्रतं न दोषायेत्युक्तं ब्रह्मवैवर्ते—

इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतम्। विशेषनियमाशक्तोऽहोरात्रं भुजिवर्जितम्।

तत्राप्यसमर्थो दक्षिणादि विप्राय दत्वा कारयेत्। तत्र कात्यायनः—

पितृमातृपतिभ्रातृस्वसृगुर्वादिभूभुजाम्।
दक्षिणाऽत्र न दातव्या शुश्रूषा विहिता च सा॥

सधवानां व्रतकरणे दोषमाह विष्णुः—

पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत्। पत्युः संहरते चायुः सा नारी नरकं व्रजेत्

भर्त्तुराज्ञया तस्या व्रतकरणे न दोषः। तथाऽऽह मार्कण्डेयः—

या नारी त्वननुज्ञाता भर्त्रा पित्रा सुतेन वा। निष्फलं तद्भवेत्तस्या यत्करोति व्रतादिकम्॥

भर्त्तुर्व्रतकरणासामर्थ्ये वा स्त्रिया रोगरजःप्रभृतिबाधकत्वे मिथो व्रतकरणे प्रतिनिधित्वमाह—

भार्या भर्तृव्रतं कुर्याद्भार्यायाश्च पतिस्तथा। असामर्थ्ये शरीरस्य व्रतभङ्गो न जायते॥

ब्राह्मणः क्षत्रियस्यार्थे एकादश्यामुपोषितः।
पुरोधाः क्षत्रियस्यार्थे फलमाप्नोति निश्चितम्॥
उपवासफलं ताभ्यां सममेवमवाप्यते॥

संकल्पितव्रतत्यागे दोषमाह, छागलेयः—

पूर्वं व्रतं गृहीत्वा यो नाचरेत् काममोहितः।
जीवन् भवति चाण्डालो मृतः श्वा चैव जायते।

तथा च स्मृतिः (कृत्यशिरोमणौ)

समारम्भे व्रते पश्चाद्व्रतभङ्गो भवेद्यदि। गोदानं च ततः कृत्वा पुनर्व्रतमतश्चरेत्॥

स्त्रीणां प्रारब्धव्रते रजोयोगेऽपि न दोषः, तत्र भृगुः—

एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि।

वृद्धगर्गः—संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम्।

मनुरपि—'प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत्।

न तत्रापि व्रतस्य स्यादुपरोधः कदाचन ॥'

पूजादिकमन्यद्वारेण कार्यमिति । तदुक्तं मात्स्ये--

अन्तरा तु रजोयोगे पूजामन्येन कारयेत् । उपवासत्रयं कुर्यान्नात्र कार्या विचारणा ॥

यत्तु शुचिना कर्म कर्त्तव्यमिति तत्काम्यपरम् ।

स्त्रीणामुपवासेऽपि दन्तधावने न दोषः तथा च स्त्रीधर्मप्रकारे मनुः--

पुष्पालङ्कारवस्त्राणि गन्धशय्याऽनुलेपनम् । उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ।इति

## ( १६ ) अथानुष्ठानविधानम् ।

तत्र तावत्तदावश्यकत्वमुक्तं शब्दकल्पद्रुमे—

'यथा शस्त्रप्रहाराणां कवचं विनिवारकम् ।
तथा दैवोपघतानां शान्तिर्भवति वारणम् ॥'

अनेन विधिलिपिमार्जनी शान्तिर्नापि तु दुरदृष्टदोषाघातरक्षणी नियतेति । तत्र प्राक्तनजन्मोपार्जितदुरितमूला केवला अनिष्टा एव नहि, किंतु वर्तमानजन्मविहिता अपि भवन्त्येव तथा चोक्तं वराहेण--

'अपचारेण नराणामुपसर्गः पापसञ्चयाद् भवति ।
संसूचयन्ति दिव्यान्तरिक्षभौमास्त उत्पाताः ॥
मनुजानामपचारादपरक्तो देवताः सृजन्त्येतान् ।
तत्प्रतिघाताय नृपः शान्तिं राष्ट्रे प्रयुञ्जीत' ॥

न केवलं ग्रहवैगुण्यादिनाऽनिष्टस्यैवोपशमः, शुभोदयोऽपि नियतं भवत्येव ।

तथोक्तं याज्ञवल्क्येन--

श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् । वृष्ट्यायुः पुष्टिकामो वा तथैवाभिचरन्नपि ॥
ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च । भावाभवौ च जगतस्तस्मात्पूज्यतमा ग्रहाः॥
यस्य यस्य यदा दुःस्थः स तं यत्नेन पूजयेत् । ब्रह्मणैषां वरो दत्तः पूजिताः पूज्ययिष्यथ॥

तत्र कस्यापि कर्मणः प्रारम्भे सङ्कल्पस्यावश्यकत्वमुक्तं ब्रह्माण्डपुराणे--

'मासपक्षतिथीनां च निमित्तानां च सर्वशः
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ॥'

भविष्ये--'असङ्कल्पेन यो विप्रो यत्किञ्चित्कुरुते नरः ।
फलं चाल्पाल्पकं तत्र धर्मस्यार्धक्षयो भवेत् ॥'

तत्र नित्यकर्म कृत्वा संकल्पविधानमुक्तं संवत्सरप्रदीपे--

'प्रातः सन्ध्यां ततः कृत्वा संकल्पं बुध आचरेत् ।'

तत्र कर्मारम्भलक्षणमुक्तं हारीतेन—

आरम्भो वरणे यज्ञे संकल्पो व्रतजापयोः ।
नान्दीश्राद्धं विवाहादौ, पित्र्ये पाकपरिक्रिया ॥
निमन्त्रणं तथा पित्र्ये आरम्भः स्यादिति स्थितिः ।'

एकादश्यादौ तु संकल्पं विनाऽपि उपोषणे कृते भोजनप्रत्यवायानुदयो हेत्वभावादिति कृत्यमहार्णवे लिखितम्।' तत्र नियम उक्तो देवलेन--

'अभुक्त्वा प्रातराहारं स्नात्वाऽऽचम्य समाहितः।
सूर्याय देवताभ्यश्च निवेद्य व्रतमाचरेत्॥'

इति व्रतपरम्। जपादौ हारीतवचनेन सङ्कल्पकरणं निर्बाधमेव। तत्र सविधिविहितस्यैव कर्मणः साफल्यमाह, याज्ञवल्क्यः—

'विधिहीनश्च यत्कर्म करोत्यविधिना नरः।
फलं न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत्॥'

कुलार्णवतन्त्रे—'मनोऽन्यत्र शिरोऽन्यत्र शक्तिरन्यत्र मारुतः।
न सिद्ध्यति वरारोहे कल्पकोटिशतैरपि॥'

'जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात्। परस्त्रीभिर्मनो दग्धं कथं सिद्धिर्वरानने॥

अथानुष्ठानपात्रलक्षणमुक्तं याज्ञवल्क्येन—

'न विद्यया केवलया तपसा वाऽपि पात्रता।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितम्॥'

कीदृशजनविहितं कर्म फलप्रदं भवति तदुक्तं पुराणसंग्रहे—

'यः स्वार्थे विधिवन्नित्यं करोति च जितेन्द्रियः।
तस्यैवाचरितं कर्म परार्थेऽपि फलप्रदम्॥'
अभ्यासिनो वीरनरा यथाऽऽजौ जयशालिनः।
तथा नित्यविधातारः परक्लेशान् जयन्ति ते॥

आजौ संग्रामे। शेषं स्पष्टम्। न केवलं जपादेः साफल्यं पात्रहस्तगतमेवापि तु तद्विधिवत्पुरश्चरणाचरणाधीनम्, तथोक्तं देवीभागते—

'जीवहीनो यथा देहः सर्वकर्मसु न क्षमः। पुरश्चरणहीनस्तु तथा मन्त्रः प्रकीर्त्तितः॥

अथानुष्ठानिजनकर्त्तव्यमुक्तं विधानपारिजाते--

'आहारचित्तसंसर्गशुद्धिरावश्यकी मता।
न त्वन्यकार्यचिन्ता च कार्याऽल्पाऽपि जपादिके॥
पूज्यं ध्यायन् जपं पाठञ्चाचरेद् ध्यानतत्परः।
बाह्यव्यापारशून्यः स्यात्काष्ठकुड्यसमो भवेत्॥

तथा च—उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गुणान्वितः।
अपवित्रकरोऽशुद्धः प्रलपन्न जपेत्क्वचित्॥
अनासनः शयानो वा गच्छन् भुञ्जान एव वा।
रथ्यायामशिवस्थाने न जपेत्तिमिरालये॥
मार्जारं कुक्कुरं श्वानं क्रौञ्चं शूद्रं खरं कपिम्।
दृष्ट्वाऽऽचम्य जपेत्कर्णं स्पृष्ट्वा स्नानं विधीयते॥

योगिनीतन्त्रे-'नैकवासा जपेन्मन्त्रं बहुवस्त्रावृतोऽपि वा।
पतितानामन्त्यजानां दर्शने भाषणे श्रुते॥

क्षुतेऽधो वायुगमने जृम्भणे जपमुत्सृजेत् ।
तथा तस्य च तत्प्राप्तौ प्राणायामं षडङ्गकम् ॥
कृत्वा सम्यक् जपेच्छेषं यद्वा सूर्यादिदर्शनम् ॥

अथ जपे नियम उक्तः कुलार्णवे--

उक्तसंख्याजपं कुर्यात्पुरश्चरणसिद्धये । देवतागुरुमन्त्राणामैक्यं सम्भावयन् धिया ॥
जपेदेकमनाः प्रातःकालं मध्यन्दिनावधि । यत्संख्यया समारब्धं तत्कर्त्तव्यमहर्निशम् ॥
यदि न्यूनाधिकं कुर्याद् व्रतभ्रष्टो भवेन्नरः ॥

मुण्डमालातन्त्रेऽपि--

यत्संख्ययां समारब्धं तज्जप्तव्यं दिने दिने । न्यूनाधिकं न कर्त्तव्यमासमाप्तं सदा जपेत्॥

अथ स्वार्थमनुष्ठाने परान्नभोजननिषेध उक्तः कुलार्णवे--

'यस्यान्नपानपुष्टाङ्गः कुरुते धर्मसञ्चयम् । अन्नदातुः फलस्यार्धं कर्त्तुश्चार्धं न संशयः ..'
तस्मात् सर्वप्रयत्नेन परान्नं परिवर्जयेत् । पुरश्चरणकाले तु सर्वकर्मसु शाम्भवि ! ॥'

अत्रादुष्टपरान्नमाह--

गुर्वन्नं मातुलान्नं च श्वशुरान्नं तथैव च ।
पितुः पुत्रस्य चैवान्नं न परान्नमिति स्थितिः ॥

तथाचोक्तं तन्त्रान्तरे--

सत्कर्मोपार्जितं द्रव्यमन्नञ्च व्रतजापयोः । चोरितादञ्चितान्मिथ्यागृहीतान्न फलं भवेत् ॥
यत्सात्त्विकं भवेदन्नं परद्रोहानुपार्जितम् । तदेवान्नमनुष्ठाने प्रयुञ्जीत न चान्यथा ॥

मार्कण्डेयः--यथाविधेन द्रव्येण यत् किञ्चित्कुरुते नरः ।
तथाविधमवाप्नोति स फलं प्रेत्य चेह च ॥

अनुष्ठानान्तेऽनुष्ठानतत्परान् विप्रान् सादरं तोषयेदित्युक्तं शान्तिमयूख-धृतस्कान्दे--

यथा ग्रहो द्विजस्तद्वद्विज्ञेयो वेदपारगः । तोषयन् मृदुवन्नाद्यैस्तुष्टमेनं विसर्जयेत् ॥
अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनश्च ऋत्विजः । यजमानमदक्षिण्यं नास्ति यज्ञसमो रिपुः ॥

तत्र दक्षिणादाने विलम्बकरणे दोष उक्तो ब्रह्मवैवर्त्ते--

'दक्षिणां विप्रमुद्दिश्य तत्कालं चेन्न दीयते । एकरात्रे व्यतीते तु तद्दानं द्विगुणं चरेत् ॥
मासे शतगुणं प्रोक्तं द्विमासे तु सहस्रकम् । संवत्सरे व्यतीते तु स दाता नरकं व्रजेत् ॥
न ददाति यदा दाता ग्रहीता न च याचते । उभौ तौ नरकं यातौ यावच्चन्द्रदिवाकरौ ॥

तथा चोक्तं देवीभागवते ( ९ स्कन्धे ४५ अ० )--

कृत्वा कर्म च कर्ता च तूर्णं दद्याच्च दक्षिणाम् । तत्क्षणं फलमाप्नोति वेदैरुक्तमिदं मुने॥
कर्मी कर्मणि पूर्णे च तत्क्षणे यदि दक्षिणाम् । न दद्याद् ब्राह्मणेभ्यश्च दैवेनाज्ञानतोऽथवा॥
मुहूर्त्ते समतीते तु द्विगुणा सा भवेद् ध्रुवम् । एकरात्रे व्यतीते च भवेच्छतगुणा च सा ॥

त्रिरात्रे तच्छतगुणा सप्ताहे द्विगुणा ततः ।
मासे लक्षगुणा प्रोक्ता ब्राह्मणानाञ्च वर्द्धते ॥

संवत्सरे व्यतीते तु सा त्रिकोटिगुणा भवेत् ।
कर्म तद्यजमानानां सर्वं वै निष्फलं भवेत् ॥

स च ब्रह्मस्वहारी च न कर्मार्होऽशुचिर्नरः । दरिद्रोऽव्याधियुक्तश्च तेन पापेन पातकी ॥
तद्गृहाद्याति लक्ष्मीश्च शापं दत्वा सुदारुणम् । पितरो नैव गृह्णन्ति तद्दत्तं श्राद्धतर्पणम् ॥
एवं सुराश्च तत्पूजां तद्दत्तामग्निराहुतिम् । दत्तं न दीयते दानं ग्रहीता नैव याचते ॥
उभौ तौ नरकं यातश्छिन्नरज्जुर्यथा घटः । नार्पयेद्यजमानश्चेद्याचितोऽपि च दक्षिणाम् ॥
भवेद् ब्रह्मस्वापहारी कुम्भीपाकं व्रजेद्ध्रुवम् । वर्षलक्षं वसेत्तत्र यमदूतेन ताडितः ॥

ततो भवेत्स चाण्डालो व्याधियुक्तो दरिद्रकः ।
पातयेत् पुरुषान् सप्त पूर्वांश्च सप्त जन्मतः ।

हवनविधानविषया हवनप्रकरणे द्रष्टव्याः किमत्र ग्रन्थविस्तृत्येति ।

दक्षिणारूपं विप्रधनं क्षणमपि न रक्षणीयमन्यथा वंशनाशः स्याद्यथोक्तं वामनपुराणे--

अनौषधमभैषज्यं विषमेतद्धलाहलम् । न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ॥
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् । लोहचूर्णाश्मचूर्णं च विषं च जरयेन्नरः ॥
ब्रह्मस्वं त्रिषु लोकेषु कः पुमान् जरयिष्यति । मन्युप्रहरणा विप्रा राजानः शस्त्रपाणयः ॥
शस्त्रमेकाकिनं हन्ति ब्रह्ममन्युः कुलत्रयम् । मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः ॥
चक्रात्तीव्रतरो मन्युस्तस्माद्विप्रं न कोपयेत् । अग्निदग्धाः प्ररोहन्ति सूर्यदग्धास्तथैव च ॥

मन्युदग्धस्य विप्राणामङ्कुरो न प्ररोहति ॥

यः स्वकर्मनिष्ठस्तस्यैव परार्थमाचरितमनुष्ठानं न दोषायेत्याह याज्ञवल्क्यः--

वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम् । न स्पृशन्तीह पापानि महापातकजान्यपि ॥

अथ दुष्प्रतिग्रहानाह मार्कण्डेयः--

तिलो धेनुर्गजो वाजी प्रेतान्नमजिनं मणिम् । सुरभी सूयमाना च घोराः सप्त प्रतिग्रहाः ॥
विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः । गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥

हिरण्यं भूमिमश्वं वाऽन्नं वासश्च तिलान् घृतम् ।
अविद्वान् प्रतिगृह्णीयाद् भस्मीभवति दारुवत् ॥

अथ प्रसङ्गाद्धरिवंशनवाहपारायणविधि (क):--

प्रथमे कृष्णजननं द्वितीये धेनुकार्दनम् । तृतीये कुण्डिनपुरे रुक्मिणीहरणं तथा ॥
चतुर्थे षट्पुरवधमार्यास्तोत्रं च पञ्चमे । मणोश्चरित्रं षष्ठे वै सप्तमे पावकस्तुतिः ॥
अष्टमे पौण्ड्रकवधो नवमेऽह्नि समापयेत् । वाचयेदनया रीत्या हरिवंशं यथाक्रमम् ॥

तथाऽन्यदपि तत्प्रमाणम्--

प्रथमे यदुवंशस्य कीर्तनावधि कीर्तयेत् । अध्यायानां पञ्चत्रिंशत्कीर्तनीया हि तद्दिने ॥
द्वितीयेऽह्नि पठेद्विद्वान् धेनुकस्य वधावधि । अध्यायानां त्रयस्त्रिंशत् पठितव्या हि तद्दिने ॥

---

(क) पुराणश्रवणविधिः भविष्यपुराणे—शूद्राणां पुरतो वैश्या वैश्यानां क्षत्रियास्तथा ।
क्षत्रियाणां तथा विप्राः शृण्वन्त्वेकाग्रतः स्थिताः ॥

जरासन्धवधो युद्धे गोमन्तस्य च रोहणम्। तावत् प्रकीर्तयेद्धीमान् तृतीयेऽह्नि विचक्षणः॥
अध्यायानामूनत्रिंशत् कीर्तनीया हि तद्दिने।
पारिजातस्य हरणं युद्धं कृष्णेन्द्रयोर्मिथः॥
प्रकीर्त्तयेच्चतुर्थेऽह्नि तावदेव नरः सुधीः। एकत्रिंशत्परिमितानध्यायान् समुदीरयेत्॥
सैन्यभङ्गःशम्बरस्य वाक्यं श्रीनारदस्य च।
तावत् प्रकीर्तयेद्विद्वान् पञ्चमेऽह्नि प्रयत्नतः॥
त्रयस्त्रिंशत्परिमिता अध्याया विहितास्तदा। जनमेजयवंशस्य भविष्यस्य च वर्णनम्॥
षष्ठेऽह्नि तावद्वक्तव्यं पारायणशुभेच्छुना।
अध्यायास्तु चतुर्विंशन्मितास्तस्मिन् प्रकीर्त्तिताः॥
सप्तमे दैत्यसैन्यानां विस्तारो यावदेव हि।
अध्यायाश्चाष्टचत्वारिंशन्मिता एव च कीर्त्तिताः॥
यावद्धि घण्टाकर्णस्य समाधेर्वर्णनं भवेत्। तावदेव पठेद्धीमानष्टमेऽह्नि प्रयत्नतः॥
अस्मिंस्तु दिवसेऽध्यायाः कीर्त्तितास्त्रिंशदेव हि॥
समाप्यन्तं च नवमे धीरकण्ठः शुभेच्छुकः॥
अध्यायाः पञ्चपञ्चाशन्मितास्तु विहितास्तदा। हरिवंशनवाहस्य पारायण उदाहृतः।
क्षणं विश्रम्य मध्याह्ने प्रपठेत्तु दिनावधि॥
गायत्र्या हवनं कुर्यादथवा विष्णुमन्त्रतः। भोजयेत्पायसैर्विप्रान्मधुरैश्च विशेषतः॥
दक्षिणा चात्र सामान्यान्निष्कत्रयमितोदिता।
गोद्वयं चाथवैकां गां शय्यां वस्त्रं सुभूषणम्॥
दद्यात्पुत्रप्राप्तिकामो वित्तशाठ्यं न कारयेत्॥

अत्रोक्तप्रमाणेन प्रतिदिनमध्यायसंख्याक्रमः—

प्र० दिने—हरिवंशपर्वण आदितः ३४ अध्यायान्तपाठः अ० सं० ३५।
द्वि० दिने—विष्णुपर्वणः १३ अध्यायान्तं पाठः। अ० सं० ३३।
तृ० दिने—विष्णुपर्वणः ४२ अध्यायान्तं पाठः। अ० सं० २९।
च० दिने—विष्णुपर्वणः ७३ अध्यायान्तं पाठः। अ० सं० ३१।
पं० दिने—विष्णुपर्वणः १०६ अध्यायान्तं पाठः। अ० सं० ३३।
ष० दिने—भविष्यपर्वणः २ अध्यायान्तं पाठ.। अ० सं० २४।
स० दिने—भविष्यपर्वणः ५० अध्यायान्तं पाठः। अ० सं० ४८।
अ० दिने—भविष्यपर्वणः ८० अध्यायान्तं पाठः। अ० सं० ३०।
न० दिने—भविष्यपर्वणोऽवशिष्टभागाः १३५ अध्यायान्तं पाठः। अ० सं० ५५।

अथ संकल्पः—

ओं अद्येत्यादि—अमुकगोत्रस्य सपत्नीकस्य मम श्री अमुकशर्मण उपस्थितशरीरा-विरोधेन जन्मजन्मान्तरार्जित-गो-विप्र-बाल-स्त्री-हननोपस्थितातिथिजनापमानगुरु-विप्र-देवधनापहरण-दीनानाथजनशातनादिपातकोपपातकमूलकजन्मकालिकजन्मलग्नाव-

षिकपापग्रहयुतवीक्षितापत्यस्थानप्रभृतिदोषसूचितसकलपुत्रप्राप्तिप्रतिबन्धकताऽशेषारिष्ट-झटितिसमूलध्वंसपूर्वक-सत्वरदीर्घायुर्वंशकरविद्याविनयधनैश्वर्यशौर्यवीर्यगाम्भीर्यसौन्दर्य-सामयिकाखिलगुणालङ्कृतौरससत्पुत्रप्राप्तिकामनयाऽमुकक्षेत्रे...... महाभारतान्तर्गता-खिलहरिवंशपुराणस्य ( आद्यं पुरुषमीशादमित्यादि-......मित्यन्तस्य ) नवाहपारायणं ( वा नवाहपारायणश्रवणं ) सपत्नीकोऽहं करिष्ये ।

अत्र स्त्रीरजोदोष-कन्याप्रसूतत्व-मृतवत्सात्व-काकवन्ध्यात्व-वन्ध्यात्वदोषाणामन्यतमे सति संकल्पवाक्ये स्वमत्योहः कर्त्तव्यः ।

तत्राविवाहिता कन्या, स्वाज्ञाकरमनोऽनुकूलप्रकृतिधनैश्वर्यसुरूपौदार्यपरिवारपालन-दक्ष-निर्विकारवीर्यशालि-सुभगपतिप्राप्तिकामनया, विवाहिता तु दीर्घायुर्वंशकरसत्पुत्रोत्पत्तिप्राप्तिकामनया, विवाहिता पतिपुत्रयुक्ता तु 'आजीवनपतिसुख-पुत्रपौत्रधनैश्वर्य-सकलसुखप्राप्तिकामनया, विधवा तु 'जन्मजन्मान्तरार्जितपापपुञ्जसूचितवैधव्यदोषदूरीकरणपूर्वकोपस्थितशरीरावसानोत्तरस्वर्गप्राप्तपतिसहवासकामनया सङ्कल्पं कुर्यात् ।

तत्र स्त्रीणां दोषविशेषे तदावृत्तिसंख्यामाह तन्माहात्म्ये—

दशावृत्तीरपुष्पार्थं मृतवत्सा तु सप्त वै । पञ्चावृत्तीः स्रवद्गर्भा काकवन्ध्या त्रयन्तथा ॥
कन्याप्रसूश्चैकावृत्तिं श्रुत्वा पुत्रमवाप्नुयात् ॥ ।

अथ श्रीमद्भागवतसप्ताह प्रमाणम्(क)—

आद्ये हिरण्याक्षवधं द्वितीये भरतावधि । तृतीये त्वब्धिमथनं चतुर्थे कृष्णजन्म च ॥
पञ्चमे रुक्मिणीग्राहं षष्ठे चोद्धववादकम् । सप्तमेऽह्नि समाप्तिः स्यात्सप्ताहं मुनिरब्रवीत् ॥

एतदनुसारेण प्रतिदिनमध्यायसंख्याः—

प्र० दि० = ४० । द्वि० दि० = ६० । तृ० दि० = ५४ । च० दि० = ४२ । पं० दि० ५० । ष० दि० = ४४ । स० दि० = ३७ ।

---

( क ) **प्रकारान्तरेण कौशिकसंहितायां**—मनुकर्दमसंवादपर्यन्तं प्रथमेऽहनि ५० अ० । ऋषभध्यानपर्यन्तं द्वितीये दिवसे वदेत् ४९ अ० । तृतीये दिवसे कुर्यात् सप्तमस्कन्धपूरणम् ५४ अ० । कृष्णाविर्भावपर्यन्तं चतुर्थेऽहनि वाचयेत् ५१ अ० । रुक्मिण्युद्वाहपर्यन्तं पञ्चमेऽह्नि वदेत्सुधीः । ५१ अ० । श्री हंसाख्यानपर्यन्तं षष्ठेऽह्नि वाचयेद्ध्रुवम् ५० अ० । सप्तमे दिवसे कुर्याच्छ्रीभागवतपूरणम् ३१ अ० ॥ (३३५) **तथा चैतत्फलं पाद्मे**—मनसश्चाजयाद्रोगात्पुंसां चैवायुषः क्षयात् । कलेर्दोषबहुत्वाच्च सप्ताहश्रवणं मतम् ॥ यत्फलं नास्ति तपसा न योगेन समाधिना । अनायासेन तत्सर्वं सप्ताहश्रवणे लभेत् ॥ **अथ कौशिकसंहितोक्तभागवतमाहात्म्यम्**—एतस्य श्रवणं प्रोक्तं चतुर्धा मुनिसत्तमैः । सात्त्वकं राजसं चैव तामसं निर्गुणं तथा ॥ सप्ताहं राजसं प्रोक्तं तामसं सालसं तु यत् । सात्विकन्त्वेकविंशाहं तथैवाष्टादशाहकम् । तथा पञ्चादशाहश्चानियतं निर्गुणं स्मृतम् । राजसे त्वर्थसङ्कोचस्तामसे स्मृतिविभ्रमः । सात्त्विकं सुखबोधाय निर्गुणं सर्वतो वरम् । सात्विकश्रवणेनैव बहवो लेभिरे सुखम् । इत्युक्तवन्तं सूतं तु प्रोवाच मुनिसत्तमः ॥ **अथान्यत्र पक्षश्रवणविधिः**—पक्षश्रवणपक्षे हि द्वाविंशाध्यायकं पठेत् । नित्यमेव प्रकुर्वीत सप्तमे सप्तविंशतिः ॥ यद्वा सर्वेषु कल्पेषु यथा वक्तुः सुखं भवेत् । तथैव वाचनीयं वा प्रशस्तं चोत्तरत्र वा ॥

अथ स्कन्धानुसारेण कस्मिन् दिने कियदवधि पाठविरामः—

प्रथमदिने—आदितः तृतीयस्कन्धस्य १९ अध्यायान्तं यावत् पाठः।

द्वितीयदिने—पञ्चमस्कन्धस्य १५ अध्यायान्तं यावत् पाठः।

तृतीयदिने— अष्टमस्कन्धस्य नवमाध्यायान्तं यावत् पाठः।

चतुर्थदिने—दशमस्कन्धस्य पूर्वार्धे तृतीयाध्यायान्तं यावत् पाठः।

पञ्चमदिने—दशमस्कन्धस्य त्रिपञ्चाशदध्यायान्तं यावत् पाठः।

षष्ठदिने—एकादशस्कन्धस्य सप्तमाध्यायान्तं यावत् पाठः।

सप्तमदिने सर्वम्, १२ स्कन्धस्य त्रयोदशाध्यायपर्यन्तं पाठः।

अथ वाल्मीकिनवाहप्रमाणम् (क)—

उद्योगं रामराज्यस्य भरतोद्योगमेव च। मारीचस्य वधं यावत् सुग्रीवपुरवेशनम्॥
लक्ष्मणस्य ततो यावत्त्रिजटास्वप्नदर्शनम्। रावणस्य ततो यात्रा जयार्थं देवसत्तमः॥
समुद्रतरणं यावत्त्रिकुम्भवधमेव च। ततः पूर्णकथां कुर्यान्नवमेऽहनि सर्वदा॥

प्रथमदिने—आदितोऽयोध्याकाण्डस्य पञ्चमसर्गान्तं पाठः। सर्गसंख्या ८२।

द्वितीयदिने—अयोध्याकाण्डस्यैव द्व्यशीतितमसर्गान्तं पाठः। सर्गसंख्या ७७।

तृतीयदिने—अरण्यकाण्डस्य चतुश्चत्वारिंशत्सर्गान्तं पाठः। सर्गसंख्या ८१।

चतुर्थदिने—किष्किन्धाकाण्डस्यैकत्रिंसत्सर्गान्तं पाठः। सर्गसंख्या ७२।

पञ्चमदिने—सुन्दरकाण्डस्य सप्तविंशतिसर्गान्तं पाठः। सर्गसंख्या ६३।

षष्ठदिने—लङ्का(युद्ध)काण्डस्य द्वाविंशतिसर्गान्तं पाठः। सर्गसंख्या ६३।

सप्तमदिने—लङ्काकाण्डस्यैव सप्तसप्ततिसर्गान्तं पाठः। सर्गसंख्या ५५।

अष्टमदिने—उत्तरकाण्डस्य षड्विंशतिसर्गान्तं पाठः। सर्गसंख्या ७७।

---

(क) प्रकारान्तरेण वाल्मीकीयरामायणनवाहकथाविश्रामविधिः—प्रथमे तु अयोध्यायाः षट् सर्गान्ते शुभा स्थितिः। तस्यैवाशीतिसर्गान्ते द्वितीये दिवसे स्थितिः॥ तथा विंशतिसर्गान्ते चारण्यस्य तृतीयके दिने चतुर्थे षट्चत्वारिंशत्सर्गकथास्थितिः॥ किष्किन्धाख्यस्य काण्डस्य पाठविद्भिरुदाहृता। सुसप्तचत्वारिंशत्के सर्गान्ते सुन्दरस्थितिः॥ पञ्चमे दिवसे कुर्यादथ षष्ठे तथोच्यते युद्धकाण्डस्य पञ्चाशत् सर्गान्ते विमला स्थितिः॥ एकोनशतसंख्याकसर्गान्ते सप्तमे दिने। युद्धस्यैव तु काण्डस्य विश्रामः संप्रकीर्त्तितः॥ तथा चोत्तरकाण्डस्य षट्त्रिंशत्सर्गपूरणे। अष्टमे दिवसे कृत्वा स्थितिं वै नवमे दिने॥ सर्वं समाप्य युद्धस्य चान्त्यसर्गं पुनः पठेत्। (पुनः पाठश्च मङ्गलार्थः) रामराज्यकथा यस्मिन् सर्वसाम्राज्यदायिनी। एवं पाठक्रमः पूर्वैराचार्यैश्च विनिर्म्मितः॥ यः करोति नरश्रेष्ठः शृणुयाद्वा समाहितः। धर्मार्थकाममोक्षाणां फलं त्वविकलं भवेत्॥

**तत्र प्रथमदिने—८३ सर्गाः। द्वितीयदिने—७४ सर्गाः। तृतीयदिने—७९ सर्गाः। चतुर्थदिने—१०१ सर्गाः। पञ्चमदिने—६८ सर्गाः। षष्ठदिने—७१ सर्गाः। सप्तमदिने—४९ सर्गाः॥ अष्टमदिने—६६ सर्गाः। नवमदिने—५७ सर्गाः। (सङ्कलनया ६४८)**

**बालकाण्डे—७७ सर्गाः। अयोध्याकाण्डे—११९ सर्गाः। अरण्यकाण्डे—७५ सर्गाः। किष्किन्धाकाण्डे—६७ सर्गाः। सुन्दरकाण्डे—६८ सर्गाः। युद्धकाण्डे—१३१ सर्गाः। उत्तरकाण्डे—१११ सर्गाः। (सङ्कलनया ६४८)**

नवमदिने—उत्तरकाण्डस्य समाप्तिपर्यन्तं पाठः। सर्गसंख्या ८५। इति।

अथवा प्रतिदिनं विंशतिविंशतिसर्गपाठे कृते पञ्चविंशतिदिनैर्लङ्काकाण्डान्तस्य पाठः सुखसाध्यः स्वयं वाल्मीकिप्रतिपादितोऽस्ति। अथवा प्रतिदिनं सुन्दरकाण्डस्यैव सप्तसप्तसर्गपाठः। तत्रादौ किष्किन्धाकाण्डस्य शेषसर्गद्वयं (६६।६७) ततः सुन्दरकाण्डस्य सप्तसर्गाः। ततो युद्धकाण्डस्यान्तिमो रामराज्याभिषेकसर्ग एवं नवसर्गा भवन्ति। तत्र प्रत्येकसर्गं कामनाभेदेन सुन्दरकाण्डान्तर्गतमन्त्ररूपश्लोकेन सम्पुटीकृत्य पारायणं विधेयम्। तत्रादौ हनुमन्तं सम्पूज्यासने पुष्पचन्दनाद्यैः संस्थाप्य पठेत्। तत्र 'नमोऽस्तु रामाय सलक्ष्मणाय' इति मन्त्रेण वा 'जयत्यतिबलो रामो लक्ष्मणश्च महाबल'- इत्यादि, समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम्, इत्यन्तैश्चतुर्भिर्मन्त्रैः, वा 'सिद्धिं दिशन्तु मे सर्वे' इत्यादिसार्धत्रयश्लोकेन सर्गान् सम्पुटीकृत्य पठेत्। वा प्रतिदिनं संपूर्णसुन्दरकाण्डस्यैव पाठः कार्यः।

अथ देवीभागवतस्य (क) नवाह्विधिः—

प्र० दिने—आदितस्तृतीयस्कन्धस्याध्याय (ख) त्रयान्तम्। अ० सं० ३५।

द्वि० दिने—चतुर्थस्कन्धस्याष्टमाध्यायान्तं यावत् अ० सं० ३१।

तृ० दिने—पञ्चमस्कन्धस्याष्टादशाध्यायान्तं यावत्। अ० सं ३५।

चतुर्थदिने—षष्ठस्कन्धस्याष्टादशाध्यायान्तं यावत्। अ० सं० ३५।

पञ्चमदिने—सप्तमस्कन्धस्याष्टादशाध्यायान्तं यावत्। अ० सं० ३१।

षष्ठदिने—अष्टमस्कन्धस्य सप्तदशाध्यायान्तं यावत्। अ० सं० ३९।

सप्तमदिने—नवमस्कन्धस्याष्टाविंशतितमाध्यायान्तम्। अ० सं० ३५।

अष्टमदिने—दशमस्कन्धस्य त्रयोदशाध्यायान्तम्। अ० सं० ३५।

नवमदिने—द्वादशस्कन्धान्तं यावत्पारायणम्। अ० सं० ३८।

(१७) अथ (ग) कर्मप्रशंसा।

कूर्मपुराणे—

कर्मणा क्षीयते पापमैहिकं पौर्विकं तथा। मनः प्रसादमन्वेति ब्रह्मविज्जायते नरः॥

तथा च पद्मपुराणे पातालखण्डे (५९ अ० ५८ श्लो०)—

तण्डुलस्य यथा चर्म यथा ताम्रस्य कालिमा।
नश्येत क्रियया राजन्! तथा पुंसो मलं महत्॥

---

(क) अथाष्टादशपुराणानि वाचस्पतौ—ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा। तथान्यं नारदीयं च मार्कण्डेयं च सप्तमम्। आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा। दशमं ब्रह्मवैवर्तं लिङ्गमेकादशं तथा। वाराहं द्वादशं प्रोक्तं स्कान्दं चात्र त्रयोदशम्। चतुर्दशं वामनं च कौर्म्मं पञ्चदशं तथा। मात्स्यं च गारुडं चैव ब्रह्माण्डमष्टादशं तथा।

(ख) अध्यायसंख्या यथा—प्र० स्कन्धे २०, द्वि०, १२, तृ. ३०, च. २५, प. ३५, ष. ३१, स. ४०, अ. २४, न. ५०, द. १३, ए. २४, द्वा. १४। सङ्कलनया = ३१८

(ग) षट् कर्माण्याह पराशरः—सन्ध्या स्नानं जपो होमो देवतातिथिपूजनम्। आतिथ्यं वैश्वदेवञ्च षट्कर्माणीति प्रोच्यते॥

एकजन्मसुखस्यार्थे सहस्राणि विलोपयेत् । प्राज्ञो जन्मसहस्राणि सञ्चिनोत्येकजन्मतः ॥

मूर्खो जन एकजन्मसुखस्यार्थे सहस्राणि, सहस्रजन्मार्जितपुण्यानि विलोपयति । पुण्यफलं सुखं, पापफलं दुःखं, दुःखावसरे यः सुखमिच्छति तस्य जन्मान्तरार्जित-पुण्यमूलकं सुखं, तदानीं देवाराधनेन भवति जन्मान्तरे तत्पुण्यफलस्य पूर्वविहित-भोगेन दुःखमेव भोग्यमवशिष्यते । प्राज्ञो विद्वान् । एकजन्मतः-एकजन्मार्जिततुल्य-पुण्यराशितः, जन्मसहस्राणि=अनेकजन्मसुखानि, सञ्चिनोति=सम्पादयति । पूर्वानेक-जन्मार्जितपापपुञ्जम् उग्रतपोज्वालया भर्जितं विधाय अग्रिमानेकजन्मभोग्यसुखमूल-कानि महान्ति पुण्यानि अर्जयतीत्यर्थः ।

## ( १८ ) अथ शान्तिप्रकरणम् ।

अथ काकमैथुनावलोकने स्पर्शे च शान्तिरुक्ता गर्गसंहितायाम् ।

काकस्य मैथुनं पश्येत् काकः शिरसि चेद्विशेत् । शिरस्युपरि वा कुर्यात्पक्षघातं नखैस्तथा॥ विदारणं च कुरुते शयानं च स्पृशेद्यदि । तदा वहेत्तु मरणं महारिष्टमथापि वा ॥ शान्तिं तत्र प्रकुर्वीत विधानेन यथोदिताम् । मध्यरात्रे यदा काको वसते हेतुना विना ॥ तद्गृहारिष्टमाचष्टे ग्रामारिष्टमथापि वा । शान्तिं तत्रापि कुर्वीत विधानेन यथोदितम् ॥

नारदोऽप्याह—

दिवा वा यदि वा रात्रौ यः पश्येत्काकमैथुनम् ।
स नरो मृत्युमाप्नोति ह्यथवा स्थाननाशनम् ॥
सूर्यास्तमनवेलायां वायसः संस्पृशेद्यदि ।
निःशब्दो वा सशब्दो वा पुंसो मृत्युप्रदायकः ॥

अङ्गनां च स्पृशेत्काको वैधव्यं तत्र निर्दिशेत् । नदीतीरे गवां गोष्ठे वधबन्धनमाप्नुयात् प्रतिचन्द्रं प्रतिसूर्यं वायसः स्पृशते यदि । अर्थहानिं तथा मृत्युं शस्त्रेण च विनिर्दिशेत्

मासैः पञ्चभिरेवास्य निशाभिः फलमादिशेत् ।
तद्दिनादि फलं सद्भिः प्रोक्तमत्र शुभाशुभम् ॥
शान्तिं तत्र प्रकुर्वीत शास्त्रदृष्टेन कर्मणा ॥

तत्र शान्तिः—महानद्यम्भसि स्नात्वा शिवलिङ्गं निरीक्षयेत् ।
नत्वा सम्पूज्य लिङ्गन्तु स्तुत्वा च दिक्पतीनपि ॥

आरभ्य तद्दिनादेव वायसेभ्यो बलिं क्षिपेत् । शनैश्चरदिने प्राप्ते एकान्ते शुभमन्दिरे ॥
कृष्णानि नववस्त्राणि अहतानि नवानि च ॥

शनिवासरे गङ्गादिमहानद्यां स्नात्वा शिवलिङ्गं प्रणम्य पञ्चदेवताविष्णुनवग्रह-दिक्पालान् सम्पूज्य प्रस्थमितमाषोपरिस्थपीठे लोहनिर्मितं चतुर्बाहुं कृष्णवस्त्रकौ-ष्णीषदण्डैरलंकृतं यमं सम्पूज्य तत्परितः काकान् पूजयेत् । तत्र प्रस्थपरिमितमाषं यमादष्टसु विदिक्षु दत्त्वा तदुपरि पूर्वादिक्रमतः कृष्णपुष्पवस्त्रादिना कपिल-नीलग्रीव-विकृतस्वर-क्रौञ्च-विद्युज्जिह्व- कृष्णकर्बुर-काल-श्वेत-संज्ञकान् स्वस्वसंज्ञया सम्पूज्य पश्चात् कलशस्थापनं कृत्वा तदुपरि शिवं प्रतिष्ठाप्य पूजयेत् । तत्र काकपूजने सर्वेषां क्रमेण मन्त्रा यथा—

कपिल ! त्वं च वर्णेन शुभाशुभनिवेदकः । गृहाणार्घ्यं मया दत्तं भवाशुभविनाशनः ॥
नीलग्रीव ! गृहाणार्घ्यं मया दत्तं खगेश्वर ! अल्पमृत्युविनाशाय ददामि बलिमुत्तमम् ॥

क्रूरस्त्वं पापिनां नित्यं सौम्यस्त्वं धार्मिके जने ।
विकृतस्वर ! गृहाणार्घ्यं मया दत्तं शुभाय नः ॥

क्रूरस्त्वं पापिनां नित्यं वधशुम्भं न ऋच्छसि। गृहाणार्घ्यं मया दत्तं कौञ्च! सौम्यप्रदो भव

विद्युज्जिह्व ! नमस्तेऽस्तु शोकव्याधिविनाशन ! ।
बलिपूजां मया दत्तां गृहाण सुखदो भव ॥

कृष्णकबुरनामा त्वं भूतभव्यनिवेदकः । गृहाणार्घ्यं मया दत्तं भव वैधव्यनाशनः ॥
काल ! त्वं कालनामाऽसि दुष्टकालनिवेदकः । गृहाण बलिपूजां मे दत्तां दुःखविनाशिनीम्
श्वेतस्त्वं सितपर्णोऽसि मृत्युभावस्य सूचक ! गृहाणार्घ्यं मया दत्तं भव मृत्युविनाशनः ॥
अथ यमपूजनम् यथा--"तन्मध्ये पूजयेद् देवं धर्मराजं चतुर्भुजम् ।"

तत्पूजनमन्त्रः--

यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
नीलग्रीवाय लोकेश ! दण्डहस्ताय ते नमः । पाशहस्ताय सायुधाय सपरिवाराय ते नमः

एभिः पूजयेद्वा प्रणमेत् ।

चन्दनैश्च सुगन्धैश्च वासोभिः पूजयेद्यमम् । आदौ त्र्यम्बकमन्त्रेण ईश्वरं च प्रपूजयेत्
मृत्युविनाशनीं विद्यां कुम्भे चैव नियोजयेत् । शतमष्टोत्तरं चैव आचार्यो हृष्टमानसः ॥
स्वगृह्योक्तविधानेन चरुं च यमदैवतम् । संश्रप्य जुहुयादग्नौ समिदाज्यचरूंस्तिलान् ॥
तद्दैवत्या समित्कार्या शतमष्टोत्तरं तथा । समित्क्रमेण जुहुयात्प्रतिद्रव्यं शतं हुनेत् ॥
सुगन्नुपन्था मन्त्रेण होतव्यं सर्वमत्र तु । भद्रासनं प्रकर्त्तव्यं पञ्चवर्णकसंयुतम् ॥
तस्योपरि न्यसेत्पट्टं यजमानमथाह्वयेत् । निवेश्याच्छादिते पट्टे अभिषेकं च कारयेत् ॥

पावमानीभिस्तु तल्लिङ्गैर्मन्त्रैर्वारुणसंभवैः ।

तल्लिङ्गैः सुगन्नुपन्थामित्यादिभिः ।

तत्र स्नानं प्रकर्तव्यं तीर्थानीतेन वारिणा । सहस्राक्षादिभिर्मन्त्रैः स्नानं कार्यं द्विजोत्तमैः ॥
ततोऽन्यद्वस्त्रमादाय धर्मराजं तु पूजयेत् । उक्तैः षोडशभिर्मन्त्रैः सुगन्धेत्यर्घं प्रदापयेत् ॥
तत उत्थाय संप्रार्थ्य भक्तिभावसमन्वितः । रक्ष मां पुत्रपौत्रांश्च रक्ष मां पशुबान्धवान् ॥
रक्ष पत्नीं पतिं चैव पितरं मातरं धनम् । अग्नितो मे भयं माऽस्तु रोगाच्च व्याधिबन्धनात् ॥
शस्त्रतो विषतोऽवौघाद् भयं नाशय मे सदा । प्रार्थना च प्रकर्तव्या नमस्कारसमन्विता ॥

काकस्पृष्टं च यद्वस्त्रं स्नानक्लिन्नं च यद् भवेत् ।
सहिरण्यं च तत्कृत्वा ब्राह्मणाय निवेदयेत् ॥

तत्र मन्त्रः--

यत्किञ्चित्स्पर्शदोषोक्तं दुष्कृतं चापि विद्यते । तत्सर्वं नाशमायातु वस्त्रदानेन सूर्यज ॥

वायसांस्तान् यमं चैवमाचार्याय निवेदयेत् ।
माषान् वासांसि कृष्णां तु धेनुं चैव पयस्विनीम् ॥

शनिवारे च तत्कार्यं रविवारेऽथवा पुनः । घृतपात्रे ससौवर्णे दर्शयेदात्मनस्तनुम् ॥
ब्राह्मणेभ्यो ददेदन्नं भूयसीं चैव शक्तितः । तथोक्तां दक्षिणां दद्याद्वित्तशाठ्यं न कारयेत्।
स्थाने यत्र स्पृशेत्काकस्तत्स्थानं पूजयेत्तदा । एवं कुर्यात्प्रदानेन ध्वाङ्क्षदोषः प्रशाम्यति ॥

तत्रोपयुक्तमन्त्राः—

( १ ) यस्मिन् वृक्षे सुपलाशे देवः सम्पिबते यमः ।
अत्रानो विश्पतिः पिता पुराणां अनुवेनति ॥

( २ ) परेयिवासं प्रवतो महीरनुबहुभ्यः पन्थानमनुपस्पशानम् ।
वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ॥

( ३ ) सुगन्नः पन्था अनृक्षर आदित्या सऋतं यते ।
नात्रावखादो अस्ति वः ।

इति काकस्पर्शादिशान्तिः ।

अथ गृहोपरि गृध्राद्युपवेशने फलं शब्दकल्पद्रुमे--
गृध्रः कङ्कः कपोतश्च उलूकः श्येन एव च । चिल्लश्च चर्मचिल्लश्च भासः पाण्डर एवच
गृहे यस्य पतन्त्येते गेहं तस्य विपद्यते । पक्षान्मासात्तथा वर्षान्मृत्युः स्याद् गृहमेधिनः॥

अत्र गृध्रस्योलूकस्य च महान्दोषः, तदन्यानां गृहोपवेशने दोषविचारो न क्रियते इति लोकरीतिः ।

तथा चोक्तं शान्तिग्रन्थे--
पत्न्याः पुत्रस्य वा मृत्युर्द्रव्यं चापि विनश्यति ।
ब्राह्मणाय गृहं दत्त्वा दत्त्व तन्मूल्यमेव वा ॥

अद्भुतसागरे--
यदि पूर्वगृहे चैव गृध्रश्चोपवेशेत्तदा । धनस्य नाशमाप्नोति याम्ये चैव धनागमः ॥
पश्चिमे भवने चैव किञ्चित्क्लेशमवाप्नुयात् । उत्तरे च महापीडा कोणभागेऽल्पकं फलम्
यदा च पूर्वाभिमुखो गृहोपरि विशेत्स्वतः । तदा पीडाकरो नैव दक्षिणाभिमुखो महत् ॥
पश्चिमाभिमुखश्चैव नृणां भयमुपादिशेत् । उत्तराभिमुखे चैव परां चिन्तामवाप्नुयात् ॥
अष्टभागं गृहं कृत्वा तत्फल संविचारयेत् । पूर्वभागे मनोद्विग्नं दक्षिणे धनमाप्नुयात् ॥
पश्चिमे धनचिन्ता स्यादुत्तरे पशुहानिकृत् । आग्नेय्यामग्निभयदो नैरृते भूमिलाभदः ॥
वायव्ये सस्यनाशः स्यादैशान्यां महती व्यथा ।
मध्यभागे यदा वासस्तदा भयमुपागतम् ॥
अकारणाद्यदा वासस्तदैतत्फलमाप्नुयात् । कारणादल्पदोषः स्यान्मुख्यशालां विशेषतः॥

अथ शान्तिः—

पूर्वदिने निरामिषमेकवारं भुक्त्वा रविदिने पीतवस्त्रं परिधाय गृहमध्यदेशे शान्ति कुर्यात् । तद्यथा--आदौ गौरमृत्तिकोपलिप्तं गृहं पञ्चगव्येन परिषिच्य गङ्गाजलेन च पुनरभिषिच्य पूजामारभेत । प्रथमं पञ्चदेवताविष्णू ततो गणेशलक्ष्मीपृथ्वीवास्तुपुरुष-दशदिक्पालनवग्रहान् सम्पूज्य ततोऽष्टोत्तरसहस्रसंख्यकं शनिसूर्ययोर्वैदिकमन्त्रैर्होमं विधाय वा दशसहस्रसंख्यकं वैदिकसूर्यमन्त्रेण ओं आकृष्णेनेत्यादिना, अर्केन्धनैर्घृ-

ताक्तैः कृत्वा वा शमीबिल्वार्कखदिरैः पलाशोदुम्बरैः सह चूतकाष्ठैः साकल्यैर्हुत्वा तत्तर्पणमार्जनं कुर्यात् । होमाशक्तौ द्विगुणजपं कुर्यात् । ततो ब्राह्मणभोजनं कुमारीभोजनं लक्षसंख्यकपार्थिवशिवलिङ्गपूजनञ्च कार्यम् । शतावृत्तिचण्डीपाठञ्च महामृत्युञ्जयमन्त्रजपं च कुर्यात् ।

एवं तु क्रियमाणे वै नानिष्टफलभाग्भवेत् ।
विभवो नास्ति यस्यापि तत्स्थानं संत्यजेत्स्वतः ॥
तद्गृहं च परित्यज्य सर्वान् कामानवाप्नुयात् ।।" इति ।

अथ तीतरशान्तिमाह, गर्गः--

सुतत्रये सुता चेत् स्यात्तत्त्रये वा सुतो यदि ।
मातापित्रोः कुलस्यापि तदाऽनिष्टं महद् भवेत् ।।

ज्येष्ठनाशो धने हानिर्दुःखं वा सुमहद् भवेत् । तत्र शान्तिं प्रकुर्वीत वित्तशाठ्यविवर्जितः।।
जातस्यैकादशाहे वा द्वादशाहे शुभे दिने । आचार्यमृत्विजो वृत्त्वा ग्रहयज्ञपुरःसरम् ॥
ब्रह्मविष्णुमहेशेन्द्रप्रतिमाः स्वर्णतः कृताः । पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः ॥
पञ्चमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया । रुद्रसूक्तानि चत्वारि शान्तिसूक्तानि सर्वशः ॥
आचार्यो जुहुयात्तत्र समिदाज्यं तिलांश्चरुम् । अष्टोत्तरसहस्रं वा शतं वा त्रिशतं तु वा ॥
देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरःसरम् । ब्रह्मादिमन्त्रैरिन्द्रस्य यत इन्द्रभयामहे ॥
ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं ततः । अभिषेकं कुटुम्बस्य शान्तिपाठं तु कारयेत् ॥

ब्राह्मणान् भोजयेच्छक्त्या दीनानाथांश्च तर्पयेत् ।
कृत्वैवं विधिना शान्तिं सर्वारिष्टाद्विमुच्यते ॥

कांस्यपात्रं शर्कराज्यपलैः षोडशमानतः । ब्राह्मणेभ्यः प्रदातव्यं शुभं भवति नान्यथा ॥

अथ यमलजननशान्तिः काशीखण्डे--

त्रिविधा यमलोत्पत्तिर्जायते योषितामिह । सुतौ च सुतकन्ये वा कन्ये वाऽपि तथा पुनः।।
एकलिङ्गौ विनाशाय द्विलिङ्गौ मध्यमौ स्मृतौ । पित्रोर्विघ्नकरौ ज्ञेयौ तत्र शान्तिर्विधीयते।।
हेममूर्ती विधातव्ये दस्रयोश्च द्विजोत्तम ! पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ॥
ब्रह्मवृक्षस्य पट्टे च स्थापयेद्रक्तवाससी । स्वस्तिके तण्डुलानां च न्यस्ते पीठे द्विजोत्तम्॥
पूजयेद्रक्तपुष्पैश्च चन्दनेनानुलेपयेत् । दशाङ्गेनैव धूपेन धूपयेत् प्रयतः पुमान् ॥
दीपैर्नीराजयेच्चैव नैवेद्यं परिकल्पयेत् । यस्मै त्वरुकृते जातवेद इति मन्त्रेणाहुतैरर्चयेत्।
अनेनैव तु मन्त्रेण होमं कुर्यादतन्द्रितः । अष्टोत्तरसहस्रं च पायसेन ससर्पिषा ॥
शान्तिपाठं जपेद्विद्वान् सूर्यसूक्तं जपेत्ततः । विष्णुसूक्तं तथा गाथां वैश्वदेवीं जपेद् बुधः
अश्वदानं ततो दद्यादाचार्याय कुटुम्बिने । तयोर्मूर्ती प्रदातव्ये यजमानेन धीमता ॥

तत्र दानमन्त्रः-

अश्वरूपौ महाबाहू अश्विनौ दिव्यचक्षुषौ । अनेन वाजिदानेन प्रीयेतां मे यशस्विनौ।।

मूर्त्तिदानमन्त्रः----

आचार्यः प्रथमे वेधा विष्णुस्तु सविता भगः । दस्रमूर्त्तिप्रदानेन प्रीयेतामश्विनौ भगः ॥

ततोऽभिषेचनं कार्यं दम्पत्योर्विधिवद् बुधैः ।
ब्राह्मणान् भोजयेत्पश्चाद् दक्षिणाभिश्च तोषयेत् ॥
सालङ्कारैश्च वस्त्रैश्च प्रार्थयेद्वचनैः शुभैः ।
एवं कृते विधानेन यमलोत्पत्तिशान्तिकम् ॥ इति ।

अथ षोडशाब्दगर्भधारणशान्तिः राजमार्त्तण्डे—
षोडशाब्दे गर्भधराऽष्टममासप्रसूतिका । उभयोर्मरणं वाच्यं सत्याचार्यः प्रभाषते ॥
अब्दे पञ्चदशे गर्भे प्रसवः षोडशेऽपि वा । दम्पत्योर्हि विनाशः स्यादेकस्मिन्नेकनाशनम् ।
षोडशाब्दगता नारी भवेद्गर्भसमन्विता । अग्रतो म्रियते माता पश्चात् पुत्रो विनश्यति ॥
तत्प्रतिकारश्च—
दद्याद् गर्भवतीं छागीं वस्त्रालङ्कारभूषिताम् । पुंसवनविधानेन संक्रमे शिवसन्निधौ ॥
गौरीं सुसम्यक् सम्पूज्य काञ्चनीं कांस्यभाजने ।
दासीं गर्भवतीं दद्याद् दैवज्ञाय च गोयुताम् ॥

अत्र गर्भवतीपतिः वा देवरस्तदभावेऽन्यः सुयोग्यः कश्चिदाप्तजनः शान्तिं कुर्यात् । आदौ कांस्यभाजने सुवर्णनिर्मितां गौरीं पूजयेत् । तद्यथा—ओं भगवति गौरि इहागच्छ इह तिष्ठ इति प्राणप्रतिष्ठापूर्वकं संस्थाप्य पञ्चोपचारैस्तां वस्त्रालङ्कारैश्च पूजयेत् रजतपात्रे नार्मदलिङ्गं वा रजतनिर्मितं शिवं पूजयेत् । विधिवत्कलशस्थापनं विधाय तत्र पञ्चरत्नसर्वौषधीश्च दत्त्वा निम्नलिखितक्रमेण दानं कुर्यात् ।

ओं कांस्यभाजनस्थितायै काञ्चन्यै गौर्यै नमः ३ । ओं ब्राह्मणाय नमः ३ । ओं इमां कांस्यभाजनस्थां काञ्चनीं गौरीं ददानि इति ब्राह्मणकरे जलदानम् । ओं ददस्व इति ब्राह्मणेनोक्ते प्रतिमां जलेन सिक्त्वा सतिलकुशजलं गृहीत्वा—

ओं अद्यामुके मास्यमुके पक्षेऽमुकतिथौ अमुकराश्यर्कप्रयुक्तपुण्याहे पुण्यकाले शिवसन्निधाने अमुकगोत्राया अस्मत्पत्न्याः अस्याः श्रीअमुकीदेव्या उपस्थितशरीराविरोधेन स्वीयषोडशाब्दिकगर्भधारणसंसूचिताशेषारिष्टकष्ट-पतिगताशेषारिष्टकष्टापत्यगताशेषारिष्टकष्टझटितिप्रशमनपूर्वकसकलसद्गुणगणालंकृतचिरजीविवंशकरपुत्रप्राप्तिकाम इमां कांस्यभाजनस्थितां काञ्चनीं गौरीं विष्णुदेवताम् अमुकगोत्रायामुकशर्मणे दैवज्ञाय ब्राह्मणाय तुभ्यमहं ददे । ओं स्वस्तीति दैवज्ञेनोक्ते-दक्षिणादानम्

ओं अद्यकृतैतत्कांस्यभाजनस्थितकाञ्चनगौरीदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय दैवज्ञब्राह्मणाय दक्षिणां तुभ्यमहं सम्प्रददे । ओं स्वस्तीति दैवज्ञेनोक्ते-छागीदानम्—ओं वस्त्रालङ्कारयुतायै गर्भवत्यै छाग्यै नमः ३ । ओं दैवज्ञब्राह्मणाय नमः ३ । ओं वस्त्रालङ्कारयुतां गर्भवतीं छागीं ददानि इति दैवज्ञविप्रकरे जलदानम् । ओं ददस्वेति तेनोक्ते-छागीं जलेन सिक्त्वा ओं अद्येत्यादि-अमुकराश्यर्कसंक्रमणप्रयुक्तपुण्याहे पुण्यकाले शिवसन्निधौ अमुकगोत्राया अस्मत्पत्न्या अस्याः श्री अमुकीदेव्या उपस्थितशरीराविरोधेन स्वीयषोडशाब्दिकगर्भधारणसंसूचिताशेषारिष्टकष्टानिष्टझटितिप्रशमनपूर्वकपतिपुत्रचिरजीवित्वसकलसुखप्राप्तिकामः इमां वस्त्रालङ्कारसंयुतां

सगर्भा छागीमग्निदैवताममुकगोत्रायामुकशर्मणे दैवज्ञब्राह्मणायाहं ददे । ओं स्वस्तीत्युक्ते दक्षिणां दद्यात् । ओं अद्य कृतैतद्द्रव्यालङ्कारसंयुतगर्भवतीछागीदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्रायामुकशर्मणे दैवज्ञाय ब्राह्मणाय दक्षिणामहं सम्प्रददे। ओं स्वस्तीत्युक्ते—

गर्भवतीदासीदानम् । ओं सगर्भायै दास्यै नमः ३ । ओं ब्राह्मणाय नमः ३ ।

ओं अद्येत्यादि—शिवसन्निधौ अमुकगोत्राया अस्मत्पत्न्या अस्याः श्री अमुकीदेव्या उपस्थितशरीराविरोधेन स्वीयषोडशाब्दिकगर्भधारणसंसूचिताशेषकष्टानिष्टझटितिप्रशमनपूर्वकसकलसुखप्राप्तिकामनया इमां गर्भयुतां दासीं प्रजापतिदैवतां यथानामगोत्राय दैवज्ञाय ब्राह्मणायाहं ददे । ओं स्वस्तीत्युक्ते—

ओं अद्य कृतैतत्सगर्भसोपकरणदासीदानप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय दैवज्ञब्राह्मणाय दक्षिणामहं सम्प्रददे । ओं स्वस्तीत्युक्ते सकलारिष्टं च कुर्यात् । यदि गर्भवत्याः स्त्रियाः पञ्चदशवर्षाणि, तदा स्वीयपञ्चदशाब्दिकगर्भधारणेत्यादि योज्यम् । अन्ते गोदानं च कुर्यात् । अत्र झटिति स्मरणार्थं तद्दानोपकरणानि ( स्त्रीक साड़ी, स्वामीक धोती जोड़, चादर, कांसक थारी १, सोनाक गौरीक प्रतिमा, चानीक शिवक प्रतिमा वा नर्मदेश्वर ) प्रथमगर्भयुक्ता दासी, प्रथमगर्भयुता छागी, प्रथमगर्भयुता गौः । कलशोपकरणसप्तमृत्तिका, पञ्चरत्नपञ्चपल्लववस्त्रफलनारिकेलादि । इति षोडशाब्दगर्भधारण (क)शान्तिः ।

## अथ गर्भिण्या आचारः—

मत्स्यपुराणे—

'सन्ध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि । न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा ॥
नोपस्करेषूपविशेन्मुशलोलूखलादिषु । जले च नावगाहेत शून्यागारं च वर्जयेत् ॥'
वल्मीकानां न तिष्ठेत न चोद्विग्नमना भवेत् । विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना॥

---

(क) अथ प्रसङ्गात् गर्भपातनिवारणं शान्तिस्वस्त्ययनकल्पद्रुमे—मधुच्छागीपयः पीत्वा किं वा श्वेताद्रिकर्णिकाम् । शर्करां पद्मकन्देन तिलकं मधुकान्वितम् ॥ भक्षित्वा धारयेन्नित्यं पतन्तं गर्भमञ्जसा । समभागं सितायुक्तं शालितण्डुलचूर्णितम् । उदुम्बरशिखाक्वाथं पीतो॥ गर्भं न मुञ्चति ॥ अकालगर्भवेदनाशान्तिस्तत्रैव—"ॐ ठं ह्रीं अमुकया गर्भं रक्ष रक्ष स्वाहा" इति मन्त्रेण जलोपरि अष्टोत्तरशतधा जप्त्वा दद्याद् अनेन जलपानेन गर्भवेदनाशान्तिर्भवतीति निश्चितम् । अथ सुखप्रसवस्तत्रैव—अपामार्गस्य मूलं च समुत्पाट्य शुभे दिने अश्वलोम्ना च संवेष्ट्य शिरसा बन्धनात्ततः ॥ क्षणमात्रेण सा नारी सुखेनैव प्रसूयते । श्वेतपुनर्णवामूलचूर्णं योनौ प्रवेशयेत् । क्षणात्प्रसूते सा नारी गर्भेणातिप्रपीडिता । सबीजं तिन्तिडीवृक्षम् उत्पाट्य च प्रयत्नतः । केशेषु ग्रथितं कृत्वा नासाग्रं तत्प्रलम्बयेत् । घ्रात्वा तद्गर्भिणी सम्यक् शीघ्रमेव प्रसूयते। ह्रीं ह्रीं ह्रीं ह्रीं श्रीकूकीति मन्त्रमश्वत्थपत्रे लिखित्वा तत्पत्रं प्रक्षाल्य तज्जलं गर्भिण्यै पानार्थं दातव्यं तेन सुखेन प्रसवो भवतीति । प्रसङ्गादेव बालानां क्रन्दनशान्तिस्तत्रैव—सिद्धि ऊलेट् नरसिंह विकटकेश ! ओं नरसिंह नरसिंह । ओं ह्रीं क्षौं इति मन्त्रं हरिद्रया भूर्जे संलिख्य बालकानां शिरसि कण्ठे बाहौ वा धारयेत् । तेन बालकस्य क्रन्दनोपशमो भवतीति ।

न शयालुः सदा तिष्ठेद् व्यायामं च विवर्जयेत्। न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् ॥
वर्जयेत्कलहं लोकैर्गात्रभङ्गं तथैव च। न मुक्तकेशा तिष्ठेत नाशुचिः स्यात्कदाचन ॥
न शयीतोत्तरशिरा न चापरशिरास्तथा। न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा सती ॥
नामङ्गल्यां वदेद्वाचं न च हास्याधिका भवेत्। कुर्यात्तु गुरुशुश्रूषां नित्यं माङ्गल्यतत्परा॥
सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत्। इति वृत्ता भवेन्नारी विशेषेण तु गर्भिणी॥
यस्तु तस्या भवेत्पुत्रः शीलायुर्वृद्धिसंयुतः। अन्यथा गर्भपतनमवाप्नोति न संशयः। इति।

शब्दकल्पद्रुमे—
आर्तवस्नानदिवसात् त्र्यहं सा ब्रह्मचारिणी। शयीत दर्भशय्यायां पश्येदपि पतिं न च॥
करे शरावे पर्णे वा हविष्यं त्र्यहमाचरेत्। अश्रुपातं नखच्छेदमभ्यङ्गमनुलेपनम् ॥
नेत्रयोरञ्जनं स्नानं दिवास्वापं प्रधावनम्। अत्युच्चशब्दश्रवणं हसनं बहुभाषणम् ॥
आयामं भूमिखननं प्रवातं च विवर्ज्जयेत्। ततश्चतुर्थे दिवसे स्नात्वा सद्वसनादिभिः ॥
भूषिता सुमनाः पश्येद् भर्त्तारं समलंकृतम्। पूर्वं पश्येदृतुस्नाता यादृशं नरमङ्गना ॥
तादृशं जनयेत्पुत्रं ततः पश्येत्पतिं प्रियम्। अज्ञानाद्वा प्रमादाद्वा लौल्याद्वा दैवतेन वा॥
सा चेत् कुर्यान्निषिद्धानि गर्भदोषांस्तदाप्नुयात्। एतस्या रोदनाद्गर्भो भवेद्विकृतलोचनः ॥
नखच्छेदेन कुनखी कुष्ठी त्वभ्यङ्गतो भवेत्। अनुलेपात्तथा स्नानाद् दुःखशीलोऽञ्जनादहक्॥
स्वापशीलो दिवास्वापाच्चञ्चलः स्यात् प्रधावनात्। अत्युच्चशब्दश्रवणाद्बधिरः खलु जायते॥
तालुदन्तोष्ठजिह्वासु श्यावो हसनतो भवेत्। प्रलापी भूरिकथनादुन्मत्तस्तु परिश्रमात्।
खलतिर्भूनिखननादुन्मत्तो वातसेवनात्। शाकाहाराल्लोमपूर्णः श्वित्री दुग्धस्य सेवनात् ॥
शूरणाच्चर्मरोगी स्यान्नेत्रस्रावी कटूषणात्। अतिश्रमादङ्गहीनो गर्भबालोऽभिजायते ॥

अथ गर्भिणीपतिनियमः—
न गच्छेत्परदेशं तु न व्रजेत्प्राणसंशये। न तु क्षौरं शवोद्वाहं तीर्थयात्रां च नाचरेत् ॥
न सिन्धुमज्जनं कुर्यात्पूज्यं देवं च तीर्थकम्।
नाधिपेत्परुषैर्वाक्यैस्तच्छापादानिमाप्नुयात् ।
न कुर्यात् पिण्डदानं च पित्रे जातु गयां विना।
गुरुदेवार्चनं नित्यं मङ्गलाचारतत्परः ।
एवं कुर्वन् लभेत् पुत्रं चिरजीविनमुत्तमम् ॥ इति।

अथ प्रसङ्गात् प्रथमगर्भसंस्कारस्यावश्यकतामाह देवलः—
सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता
यं यं गर्भं प्रसूयेत स गर्भः संस्कृतो भवेत् ।

अथ द्वादशवर्षावधिकसमयान्तमाप्तसम्बन्धिनः समागमाभावे शान्त्या समागमः कर्त्तव्य इत्युक्तं भविष्ये—
दम्पती पितृपुत्रौ च स्वसारौ मातृपुत्रकौ। पितृव्यमातुलौ चैव दौहित्रभागिनेयकौ ॥
दुहिता भगिनी चैव भगिनीभ्रातरौ तथा। द्वादशाब्दे व्यतीते तु दूरदेशं गते यदि ॥
एतेषामेकमेकोऽपि नान्योन्यमवलोकयेत्। इच्छन्ति केचिदाचार्या अन्योन्यमवलोकनम्॥
शिवालयेऽथवा तीर्थे स्नात्वा प्रज्वाल्य दीपकौ। शिवं सम्पूज्य विधिवद्भूमौ तौ देवमध्यतः ॥

कृत्वा कांस्यमयं पात्रं सजलं रत्नपूरितम् । शान्तिकैर्मन्त्रघोषैश्च द्विजैः सहावलोकनम् ॥
आननं चैकमेकस्य दृष्ट्वा सम्यक् शिवं नमेत्।ब्राह्मणेभ्यो यथा शक्त्या दद्यात्पात्रं सदक्षिणम्
अनेकेभ्यश्च विप्रेभ्यो यथावित्तानुसारतः । दद्याच्च दक्षिणां भक्त्या पूजयेच्च शिवं पुनः ॥
नत्वा देवं द्विजान् सूर्यमागच्छेत् स्वस्य मन्दिरम्। ततो व्याहृतिभिर्होमं शतमष्टोत्तरं तिलैः
कृत्वाऽथ भोजयेद्विप्रान् यथावित्तानुसारतः । बान्धवैः सह भुञ्जीत सर्वारिष्टप्रशान्तये ॥
इत्थं यः कुरुते मर्त्यस्तथाऽनिष्टं न जायते । आयुष्कामो नरश्चैव नमस्कृत्वाऽवलोकयेत्
पूर्वावलोकितानां च विधिरेष उदाहृतः । नैवापि पूर्वदृष्टानामिति चाहुर्मनीषिणः ॥

इति द्वादशाब्दादूर्ध्वमवलोकने ।

अथोलूककृतानिष्टमुक्तमद्भुतसागरे—

उलूको वासते यत्र निपतेद्वा तथा गृहे । ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥

वसन्तराजः--

रात्रौ गृहस्योपरि वासमानो दुःखाय शूकः सुतमृत्यवे स्यात् ।
गृहस्थनाशाय च सप्तरात्रं नाशाय राज्ञो द्विगुणान्यहानि ॥
त्र्यहं गृहद्वारि चरत्युलूके हरन्ति चौरा द्रविणान्यवश्यम् ।
तस्मिन् प्रदेशे निशि मासयुक्तस्तद्दोषनाशाय बलिः प्रदेशः ॥

तथा च तत्रैव—

उलूकश्चैव गृध्रश्च कपोतः श्येन एव च । पतन्ति भवने यस्य तस्य प्राहुर्महद्भयम् ॥
षण्मासात्तथा वर्षान्मृत्युः स्याद् गृहमेधिनः।पत्न्याः पुत्रस्य वा मृत्युर्द्रव्यं चैव प्रणश्यति॥
ब्राह्मणाय गृहं दद्याद्दत्त्वा तन्मूल्यमेव च । गृह्णीयाद्यदि रोचेत शान्तिं चैतां प्रयोजयेत्
चरुं यवमयं कृत्वा अश्वत्थसमिधोऽयुतम् । मनसः काममित्येतद्धुत्वा जप्त्वा सुखी भवेत्॥
यदि वा वर्धनी चेति तया शान्तिः प्रदिश्यते।ऐन्द्रीं शान्तिं ततःकुर्यात्त्रातारमितिमन्त्रतः॥
औदुम्बरीश्च समिधो जुहुयाद्घृतसंयुताः । अष्टोत्तरसहस्राणि पञ्च तच्छान्तिकाम्यया ॥
चरुकर्माशनं चास्य विप्रान् दधिगुडौदनैः । तर्पयित्वा वरं हेम दद्याद्धेनुं च दक्षिणाम् ॥

मयूरचित्रे--

गृहद्वारेण सर्पस्य प्रवेशे गृहिणीवधः । षड्भिर्मासैर्न सन्देह उपोष्य जुहुयात्ततः ॥
दधिमधुघृतानामयुतं जुहुयाच्छुचिः । वैकङ्कतस्य विप्राय ताम्रं दद्याच्च दक्षिणाम् ॥

अद्भुतसागरे—मांसास्थीनि समादाय श्मशानाद् गृध्रवायसाः ।
श्वा शृगालोऽथवा मध्ये पुरस्य प्रविशन्ति चेत् ॥
विकिरन्ति गृहादौ च श्मशानं सा मही भवेत् । चौरेण हन्यते लोकः परचक्रसमागमः।
संग्रामश्च महाघोरो दुर्भिक्षं मरणं तथा । अद्भुतानि प्रसूयन्ते तत्र देशस्य विप्लवः ॥
अकाले फलपुष्पाणि देशविद्रवकारणम् ॥

नारदस्तु—

आदित्यचन्द्रयोर्मध्ये छिद्रं पश्यति यो नरः । उत्पातमीदृशं दृष्ट्वा मासमेकं स जीवति ॥
इमारुद्रेति मन्त्रेण जुहुयात्सर्पिषा हुतिम् । आहुती द्वे सहस्रे तु होमश्च कथितो भवेत् ॥
वृषभं दक्षिणां दद्यात् ततः सम्पद्यते शुभम् ॥

देवलः—
रात्रौ चेन्द्रायुधं पश्येद्दिवा नक्षत्रमण्डलम्। परनेत्रेषु चात्मानं न पश्येत् स न जीवति।
औशनसे तु—देशे वा यदि वा ग्रामे योनिव्यतिकरो भवेत्।
अजः शुनीमजां श्वा वा संसर्गं यत्र गच्छति॥
अभ्यन्तरेण तत्राब्दाद्राष्ट्रे मरणमादिशेत्॥

शान्तिस्तु—
तर्पयेद् ब्राह्मणांश्चात्र जपहोमांश्च कारयेत्। स्थालीपाकेन धातारं पशुना च पुरोहितः॥
प्राजापत्येन मन्त्रेण जपेद्बहन्नदक्षिणाम्।

औशनसे—
गौरश्वं वडवा गावो यस्मिन् देशे प्रसूयते। अभ्यन्तरेण वर्षात्तु राज्ञो मरणमादिशेत्॥
व्यजायन्त खरा गोषु करभाश्वतरीषु च। शुनीषु हि बिडालाश्च मूषिका नकुलीषु च॥
विष्णुधर्मोत्तरे—क्रव्यादाः पक्षिणो यस्य मूर्ध्नि गायन्ति वै द्विजाः!
काकश्येनादयस्तस्य षड्भिर्मासैर्मृतिं वदेत्॥
देवलः—काकः कपोतो गृध्रो वा निलीनो यस्य मूर्धनि।
क्रव्यादाः पक्षिणश्चैव षण्मासान् न स जीवति

मार्कण्डेयः—गृध्रः कपोतः काको वा वायसो वाऽपि मूर्धनि॥
क्रव्यादो वै खगो लीनः षण्मासं न निवर्त्तते॥
दिवा तारादर्शने दोष उक्तोऽद्भुतसागरे—
यस्मिन् देशे दिवा तारा दृश्यते दिवि कर्हि चित्।
तस्य देशस्य यो राजा सराष्ट्रः स विनश्यति॥

पराशरस्तु—कदाचिद् दृश्यते यत्र दिवा देवपुरोहितः।
राजा च म्रियते तत्र सर्वदेशो विनश्यति॥
अह्नः सर्वं यदा शुक्रो दृश्यते तु महाग्रहः।
तदा चागन्तुभिर्ग्रामा वध्यन्ते नगराणि च॥
अत्र देवपुरोहितो बृहस्पतिग्रहः।
इन्द्रधनुः—वृष्टिं करोत्यवृष्ट्यां वृष्टिं वृष्ट्यां निवारयत्यैन्द्र्याम्'
पश्चात्सदैव वृष्टिं कुलिशभृतश्चापमाचष्टे॥
मयूरचित्रके—निशायामिन्द्रचापस्य दर्शने नृपतेर्वधः।
परचक्रागमश्चैव यथा गर्गेण भाषितम्॥

नारदः—
रात्रौ चेन्द्रधनुर्यत्र दृश्यते दिवि सत्तम। अद्भुतं तत्र विज्ञेयं शान्तिं चेमां समारभेत्॥
औदुम्बर्याः सहस्राणि अष्टौ च जुहुयाद् द्विजः।
मध्वक्तानि घृताक्तानि जातवेदसि मन्त्रवित्॥
विप्राय दक्षिणां दद्याद् धेनुं च वृषभं तथा। एकरात्रोषितो भूत्वा ततः संपद्यते शुभम्॥

पूर्णिमायां रात्रौ चन्द्रो यदा क्षितिजासन्नवर्त्ती भवेत्तदा चन्द्रविरुद्धदिशि किंचित्स-वृष्टिमेघे सति चन्द्रस्यापि परिवेषो भवति। ( मया दृष्टमेतद्रूपम् )

अथ गन्धर्वनगरम्।

वराहः--

अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम्।
यदा तदा नागमनुष्यवाजिनां पिबत्यसृक् भूरि रणे वसुन्धरा॥

अथ यामले--

चतुर्ग्रहसमायोगे दुर्भिक्षादिभयं भवेत्। महारोगभयं राष्ट्रक्षयो वृष्टिक्षयोऽपि च॥
पञ्चग्रहसमायोगे दुर्भिक्षं संकरादिकम्। जनक्षयो भूपवैरं गर्भनाशस्तु जायते
ग्रहषट्कसमायोगे मन्त्रिणो मरणं भवेत। पशवश्वादिभयं सर्वं संकरादि जनक्षयः॥
पट्टराज्ञीविनाशो वा महाभयमथापि वा। सप्तग्रहसमायोगे क्षितीशमरणं ध्रुवम्॥
जगत्प्रलयमेवापि तदा निर्मानुषं जगत्। अत ऊर्ध्वं महोत्पातनानादुःखमहाकुलम्॥
सूर्यः स्याद्व्यतिरिक्तश्चेत्तदा योगो महाद्भुतः। विना चन्द्रेण योगोऽपि जगत्प्रलयकारणम्
तद्देशजातजन्तूनां महारोगो महाभयम्। अर्थनाशः स्थाननाशो मानहानिर्नृपीडनम्॥
वातपित्तादिसंभूतमहापीडा महद् भयम्। समायोगग्रहा नृणां दोषान् कुर्वन्ति सर्वदा॥
षण्मासाभ्यन्तरे वाऽपि आयुर्हानिः श्रियस्तथा॥ इत्यादि शान्तिमयूखे द्रष्टव्यम्।

अथ शिवारुते शान्तिः।

श्मशानभूमौ दिनमध्यभागे मध्ये रजन्याः स्वगृहप्रवेशे।
या रौति तस्यै बलिमर्घ्ययुक्त भक्त्या प्रदद्याद्यदि भद्रमिच्छेत्।
कथ्यते बलिविधानमिदानीं शाकुनागममतेन शिवायाः।
दिव्यमन्त्रबलिबाधितदोषं साधिताखिलसमुद्यतकार्यम्॥
शून्यालयं रुद्रगृहं श्मशानं चतुष्पथं मातृगृहं जलान्तम्।
बन्ध्यावनिश्चत्वरमेवमाद्या बलिप्रदानाय मताः प्रदेशाः॥
तेषां च मध्याद्रुचितप्रदेशे विशोधितं मण्डलकं विदध्यात्।
पौराणिकश्लोकसरीक्षितायाः संगृह्य गोगोमयमन्तरिक्षात्।
अत्यन्तजीर्णदेहाया बन्ध्यायाश्च विशेषतः। रोगार्त्तनवसूताया न गोर्गोमयमाहरेत्॥
तस्मिन् विचित्रं विततं विदध्यात् पिष्टात्तकेनाष्टदलं सरोजम्।
सम्पूजयेत्तत्र सुराधिपादीन् क्रमेण सर्वानपि लोकपालान्।
मध्ये सुतैः पञ्चभिरभ्युपेता शिवान्विता पिष्टमयी प्रसन्ना॥
पूज्या शिवा तुष्यति भक्तियोगात्प्रभूतपुष्पाक्षतधूपदीपैः।
साज्यगुडौदनमाषकुलोत्थैर्यावकपूपलिकामिषमद्यैः।
सम्भृतिरत्र नराशनमात्रं बुद्धिमता बलिकर्मणि कार्या॥
प्राप्याष्टमीं वाऽथ चतुर्दशीं--सम्मन्त्र्य मन्त्रेण च सप्तकृत्वः।
बलिं शिवाया निशि निश्चयेन दद्यान्मनुष्यो यदि भद्रमिच्छेत्॥

अथात्र मन्त्रः—"ॐ शिवे ज्वालामुखि बलिं गृहाण २ हूँ फट् स्वाहा, ॐ शिवे शिवदूति भगवति चण्डे इदमर्घ्यं बलिलीलासमुचितं गृहाण २ आगच्छ २ वायुवेगेन शुभं कुरु २ स्वाहा। अयमर्घ्यमन्त्रः। बलिदानाय मन्त्रान्तरम्। ॐ नमो भगवति एनमेनं बलिं गृह्ण २ गन्धपुष्पधूपदीपादिकं दह दह पच २ घोररूपिणि भो भगवति पिबत २ स्वाहा।'

एतस्य मन्त्रद्वितयेन मध्यादेकेन केनाप्यभिमन्त्रणीयः।
बलिः शिवायाः सुमहाप्रभावं पृथक् पृथक् मन्त्रयुगे यदेतत्॥
ताम्बूलवस्त्रासनदक्षिणाभिर्नैमित्तिकं शाकुनशास्त्रदक्षम्।
प्रपूजयेत्तत्र भवत्यभीष्टमाचार्यवर्य्ये परितोषिते हि॥
आश्लेषिका वह्निकृतान्तरुद्रधिष्ण्यानि पूर्वात्रितयेन सार्धम्॥
ज्येष्ठां च सन्त्यज्य विरौति येह श्रेयस्करी जम्बुकगेहिनी सा॥
हितैषिणी सर्वसमीहितेषु देवी भवानी भुवि फेरवा च।
कृताधिवासा कृपया सदैव शिवारुते तेन यतेत विद्वान्॥

इति शिवारुते शिवाबलिप्रकारः।

अथ दिग्वशेन शिवारुतफलम्।

शक्रे चौरादिशङ्का हुतभुजि विविधक्लेशभीतिश्च याम्ये
सौख्यं कल्याणवित्तं दितितनयदिशि स्वल्पकाले स्थितिं च।
वारुण्यां वित्तलाभोऽनिलदिशि सुहृदामुत्तरस्यां स्थिरत्वं
वासे सन्मानमैशं शिवदिशि निधनं वस्तुवेश्मप्रवेशे॥

(१६) अथ सतीस्त्रीजीवनम्।

धूलिमृत्क्रीडने बालाम् पाकं बालकपालनम्। गृहप्रबन्धं गीतञ्च माङ्गल्यं शिक्षयेत्ततः॥
ततो रसमिते वर्षे वर्णशिक्षां तु दापयेत्। अनुसूया सती सीता सावित्री दमयन्तिका॥
मदालसा शाण्डिली च शैव्याऽऽसां शिक्षयेत्क्रियाम्।
माता वा ज्येष्ठभगिनी पितृव्यानी पितृस्वसा॥
श्वश्रूर्ननान्दा वा पूज्या वृद्धा कार्या तु शिक्षिका। अनूढा पतियुकाभिः सङ्गं कुर्यान्नहि कचित्
तेन सोत्कण्ठिता भूत्वा भ्रष्टा भवति कामतः। चरितं रक्षयेत्साध्वी कुट्टिनीतो विशेषतः॥
हानिर्लाभः परः स्वः कः कृत्यं धान्याश्च शिक्षणम्। यज्ञोपवीतनिर्माणमेतद्यत्नेन शिक्षयेत्॥
स्त्रीभिः स्त्रियश्चोपदेश्या काचिदन्यत्र विद्यते। बहुलायाश्च सावित्र्याः पुत्री त्वंस्थापयान्तिके
गुरुजनसंकुचिता या धनचयदक्षा व्यये विमुखी।
शिशुपरिपोषणनिपुणा पतिभक्ता देवता नारी॥
कार्ये दासी रतौ वेश्या भोजने जननीसमा। विपत्तौ बुद्धिदात्री च सा भार्या सर्वदुर्लभा॥
आयव्ययसद्बोधा पथ्यापथ्यप्रमाणनिपुणा या।
शिशुशिक्षणे तु पट्वी या नारी सा सुधासदना॥
परशिशुखेलनरक्षणशिक्षणतः स्वीयमपि रक्षेत्॥

तथाऽऽह मनुः स्त्रीदोषान्—

त्रीणि स्त्रियाः पातकानि लोके धर्मविदो विदुः। भर्त्तुर्वधो भ्रूणहत्या स्वस्य गर्भनिपातनम्॥

यस्याः पतिरन्यत्र तिष्ठति तस्या अकर्त्तव्यमुक्तं वामनपुराणे—

क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम्। हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका॥

एभिर्व्यापारैश्चित्तस्य सकामसम्भवात् तदा, पत्युरसन्निधानाच्चारित्र्यदोषसंभावना-निकटैवेति।

तिथितत्त्वे—

प्रकीर्णभाण्डामनवेक्ष्यकारिणीं सदा च भर्त्तुः प्रतिकूलवादिनीम्।
परस्य वेश्माभिरतामलज्जामेवंविधां स्त्रीं परिवर्जयामि॥

लक्ष्यावाक्यमिदम्। इति।

## अथ गुरुलक्षणम्।

अपरार्के—

आलापमात्रैर्व्याख्यानैर्यश्च शिष्यान् प्रबोधयेत्।
देशाभिधानविन्यासैर्बोधयेच्चापि यो गुरुः॥
स गुरुः स पिता माता स तु चिन्तामणिः स्मृतः।

अथ गुरुमाहात्म्यमुक्तं तत्रैव—

विना तु गुरुणा सम्यग्बोधकेन विपश्चिता। नैव विद्याफलप्राप्तिर्गुरुं तस्मात्तु पूजयेत्॥
अज्ञानदुःखशमनं नरकोद्धारणं तथा। कुतो माता पिता वाऽपि बान्धवोऽपि महागुणः॥
तादृगभ्युदयं कुर्याद्यादृक् कुर्याद्गुरुर्महत्। कोऽन्यो ज्ञानेन दुःखौघादुद्धरेद्भवबन्धनात्॥
सम्यक् शास्त्रार्थबोद्धारं महादेववदर्चयेत्।

तथा चोक्तं चिदम्बररहस्ये—

गुरौ मनुष्यबुद्धिं तु मन्त्रे चाक्षरबुद्धिताम्। यन्त्रे मूर्त्यां शिलाबुद्धिं कुर्वाणो नरकं व्रजेत्॥

## अथ शिष्यलक्षणम्।

आहूताध्यायी गुरुकर्मसु चोद्यतः पूर्वोत्थायी चरमञ्चाथ शायी।
मृदुर्दान्तो धृतिमानप्रमत्तः शालायशीलः सिद्ध्यति ब्रह्मचारी॥

गुरुणाऽऽहूतः सन् पठनाय गमनशीलः। न तु पाठनमनिच्छन्तमपि गुरुं पाठनाय नियोजयेदित्यर्थः। गुरुकर्मसु पुष्पजलेन्धनादि–समाहरणेषु दक्षः। गुरोरुत्थान-समयात्पूर्वकाले उत्थायी। गुरोः शयनानन्तरं शयनशीलः। मृदुरनुत्कटः। क्रोधोत्पादकहेतौ जातेऽपि शान्तस्वभावः। दान्तः (शान्त इत्यर्थः) धृतिमान् धैर्यधारी, द्रव्यादिलोभशून्यः। अप्रमत्तः सावधानः। ब्रह्मचारी ब्रह्मचर्यनिरतः एवंभूतः पाठकः सिद्ध्यति पठनसाफल्यं यशोधनधर्मसुखं लभत इति।

तथा चोक्तं मेधातिथिना—

योऽहेरिव धनाद्भीतो मिष्टान्नाच्च विषादिव। राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति॥

अर्थाल्लोभ-जिह्वास्वाद-स्त्रीसुख-पराङ्मुखो जनो विद्यां प्राप्नोति विद्यामभिलषता सर्वथा जितेन्द्रियेण भाव्यम्।

अथ भारते उद्योगपर्वणि ( अ० ३६ )

'असूयैकपदं मृत्युरतिवादः श्रियो वधः । अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवस्त्रयः॥

आलस्यं मदमोहौ च चापल्यं गोष्ठिरेव च ।
स्तब्धता चाभिमानित्वं तथा त्यागित्वमेव च ॥
एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः ।
सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् ॥
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम् ॥

तथा च—अनुदिनपठनं नित्यं सम्यग्ज्ञात्वाऽभ्यसन् दक्षः ।
गुरुपरिचर्यानिरतो जडधीरप्याशु वाक्पतिर्भवति ॥
गुरुनिन्दकोऽलसो यो गोष्ठीनिरतोऽतिगल्पसञ्जल्पः ।
व्यवहारेष्वतिनिपुणो रसिकः स्यात्तीक्ष्णधीरपि क्षुद्रः ॥

तथा च—

अमाद्विद्या श्रमाद्विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थी नोपपद्यते ॥

मनुः—यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥

विद्यार्थिनामध्ययनसमये सर्वदा सदाचारिणा भवितव्यम् । तदाह वशिष्ठः—

यथाऽन्नं मधु-संपृक्तं मधु चाप्यन्नसंयुतम् । एवं तपश्च विद्या च संयुक्तं भेषजं हि तत् ।

अथाचारप्रशंसामाह मनुः—

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः। आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥
दुराचारो हि पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥
सर्वलक्षणहीनोऽपि सर्वदाऽऽचारवान्नरः । श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥
विद्यामधीत्य यो विप्रो गुरुनिन्दां करोति च । स महापापसंयुक्तो निरयं याति दारुणम्॥

अथ गुरुपरिचर्याक्रम उक्तोऽपरार्के—

नोद्विजेत्तस्य पारुष्ये न च वै लोप्य पृच्छतः ।
न चास्य व्याधिदुःखेषु मलानां चापि शोधने ॥

प्रसादयेत्तु कुपितं दुःखमग्नं समुद्धरेत् । रोगेभ्यश्चापि यत्नेन परिरक्षेन्न चोद्विजेत् ॥

पठनक्रमोऽपि तत्रैवोक्तः--

शिष्यैः परस्परं शास्त्रं चिन्तनीयं विचक्षणैः ॥

अथ गुरुप्रणामविधिमाह मनुः--

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥

(२१) अथोपनयननिर्णयः । ( द्वैतनिर्णयोक्तः )

तत्र दक्षिणायनमासषट्कं ( सौरश्रावणादि—सौरपौषान्तं यावत् ) निषिद्धम् । उत्तरायणे ( मकरसंक्रान्तितः कर्कसंक्रान्तिपर्यन्तकाले ) अपि सर्वाः कृष्णपक्षीयास्ति-थयो निषिद्धाः । शुक्लास्वपि तिथिषु प्रतिपदष्टमीचतुर्दशीपौर्णमास्यः सर्वा अनध्यायत्वेन

निषिद्धाः । स्वाध्यायेष्वपि चतुर्थीषष्ठीसप्तमीनवमीत्रयोदश्यः स्वत एव निषिद्धाः । त्रयोदशीचतुर्दश्योर्दिवावेधे द्वादश्यपि गलग्रहत्वेन निषिद्धा ।

आरम्भानन्तरं यत्र प्रत्यारम्भो न विद्यते ।
गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रहम् । इत्युपक्रम्य,—
अष्टम्या सप्तमी विद्धा चतुर्दश्या त्रयोदशी ।
द्वितीया प्रतिपद्विद्धा गलग्रह उदाहृतः ॥

इत्युपसंहारात् । चैत्रशुक्ला द्वितीया माघशुक्ला द्वितीया च स्वरूपेणैव निषिद्धा । चैत्रशुक्लतृतीया आषाढशुक्लदशमी माघशुक्लसप्तमी एतास्तिथयो मन्वन्तरादित्वेन निषिद्धाः । वैशाखशुक्लतृतीया युगादित्वेन निषिद्धा । हरिशयनद्वादशी स्वरूपेणैव निषिद्धा । विहिततिथयोऽपि संक्रान्त्यवरुद्धा निषिद्धाः । तत्पूर्वतिथयस्तु तत्पूर्वतिथित्वेन ( मासान्तत्वेन ) निषिद्धाः । पौषमाघफाल्गुनचैत्रास्तु वृष्ट्या दूष्यन्ते । वैशाखज्येष्ठाषाढेष्वतिवृष्ट्याऽतिवातेन चानध्यायः । ग्रहणकाले भूकम्पोल्कापातकरकापातवज्रपातादिसमाहारे व्रतबन्धे त्रयोदशाहमशुद्धम् । किञ्चिदूनतत्समाहारे दशाहम् । ग्रहणाद्येकैकोदये त्र्यहम् । उपनयनपूर्वदिने सायं सन्ध्यायां गर्जे उपनयनदिनमनध्यायं करोति । हस्तचित्रास्वातीश्रवणधनिष्ठाशतभिषापुष्याश्विनीमृगशिरोरेवतीपूर्वाषाढपूर्वफल्गुनीत्येतानि नक्षत्राणि व्रतबन्धे सामान्यतः प्रशस्तानि । लग्नानि तु वृषसिंहतुलाधनुर्मीनात्मकानि विहितानि । बुधगुरुशुक्राः केन्द्रस्थास्त्रिकोणस्थाश्च प्रशस्ताः। रविचन्द्रगुरुतारासु बलवतीषु, गुरुशुक्रविवारे व्रतं शस्तम् । रविमङ्गलराहुकेतवो लग्नस्था निषिद्धाः । चन्द्रः सप्ताधिको (अष्टमः) निषिद्धः । षट्त्र्येकादशगाः सूर्यशनिकुजाः प्रशस्ताः । नवमपञ्चमगाः पापा निषिद्धाः । ( धर्मबुद्धिविद्याविषयहानिकरत्वात् ) लग्नस्था रविशनिकुजाश्च निषिद्धाः । ( शरीरदोषकरत्वात् । ) धनस्थाः सहजस्थाश्च शस्ताः । बन्धुस्था निषिद्धाः । पुत्रस्था निषिद्धाः । षष्ठराशौ शस्ताः । सप्तमराशौ निषिद्धाः । निधनस्था निषिद्धाः । चन्द्रस्तु षष्ठेऽष्टमे निषिद्धः । गुरुर्जन्मनि षष्ठेऽष्टमे तृतीये चातिनिषिद्धः । दशमे चतुर्थे च निषिद्धः । गुरुर्द्वितीये पञ्चमे च शस्तः । द्वादशे अतिनिषिद्धः । शेषेषु मध्यमः । जन्मर्क्षे जन्मोदये जन्मसमये जन्ममासे जन्मचन्द्रे च व्रतबन्धः प्रशस्तः । गुरुवारेऽतिप्रशस्तः । शाखाधिपे बलिनि व्रतं शस्तम् । ते च 'ऋगथर्वसामयजुषामधिपा गुरुसौम्यभौमसिताः ।' इति यथासंख्यम् ।
मेखलाबन्धसमये सर्वथा पञ्चमं ग्रहम् । शुभयुक्तं प्रशंसन्ति तदालोकितमेव वा ॥

इति महामहोपाध्यायसन्मिश्रवाचस्पतिविरचित उपनयननिर्णयः समाप्तः ॥

अत्र बटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः ।
श्रेष्ठो गुरुः खषट्त्र्याद्ये पूजयाऽन्यत्र निन्दितः । मु० चि० ।

अनेन २।५।७।९।११ एषु स्थितो गुरुः शुभः । १।३।६।१० एषु पूजया शुभः । ४।८।१२ एषु निन्दितः । किन्तु—

स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे गुरुः ।

रिष्फाष्टतुर्यगोऽपीष्टो नीचारिस्थः शुभोऽप्यसत् ॥

अनेन कर्कधनुर्मीनसिंहमेषवृश्चिकान्यतमराशौ वा धनुर्मीनराशिनवांशे, तथा चरादिमलवे स्थिरराशिपञ्चमलवे द्विस्वभावराशिनवमलवे स्थितो गुरुः ४।८।१२ एतन्निन्दितस्थानान्यतमगतोपि शुभः। तथा यदि मकर-मिथुन-कन्या-वृष-तुलाऽन्यतम-राशि-स्थो गुरुः २।५।७।९।११ एषु चन्द्राद्वर्त्तमानोऽपि न शुभ इति।

अथ शुभकर्मनिर्णयोक्तोपनयननिर्णयः।

वृद्धशातातपः—प्राक् चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः।
कुमारस्तु स विज्ञेयो यावन्मौञ्जीनिबन्धनम् ॥
शिशोरभ्युक्षणं कार्यं बालस्याचमनं स्मृतम्।
रजस्वलादिसंस्पर्शे स्नातव्यं तु कुमारकैः ॥

ब्रह्मपुराणे—मातापित्रोरथोच्छिष्टं बालो भुञ्जन् भवेत्सुधीः।
एतेनान्यदीयोच्छिष्टे दोषः।

आपस्तम्बः—'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं शरदि वैश्यम्'। अत्र वसन्ते इत्यादि विशेषफलार्थम्। शरदीति ज्योतिःशास्त्रप्रतिकूलम्। तस्य याम्याय-नान्तर्गत वात्सौम्यायन एव विहितत्वाच्च। तथा मनुः—
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥'

इत्यपि विशेषफलार्थमेवास्ति। सामान्यतो विप्रस्य पञ्चमे वाऽष्टमे। क्षत्रियस्य षष्ठे वैकादशे। वैश्यस्याष्टमे द्वादशेऽपि व्रतबन्धनं कर्तव्यम्। सर्वत्र गर्भाद्वा जन्मत इति योज्यम्। अथ द्विगुणे विहितवर्षे अतीते गौणं वदन्ति। तत्परं व्रात्यताऽविवार्या भवति। राजमार्तण्डे—
नवमवर्षेऽपि यज्ञोपवीतविधानमुक्तं, तत् प्राग् द्रष्टव्यम्।

याज्ञवल्क्यः—आषोडशाच्च द्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः स्मृतः ॥
अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ अ० १।३७।

मनुः—नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान्यौनांश्च सम्बन्धानाचरेद्ब्राह्मणैः सह ॥ अ० २।४०।

तत्र विहितवर्षेऽपि गुरुशुद्धिरावश्यकी, तथाऽऽह, पौलस्त्यः—
यदा गर्भाष्टमे वर्षे शुद्धिर्नास्ति बृहस्पतेः। अष्टमे वा तथाऽप्येवं व्रतं तत्र न कारयेत् ॥

तत्र गुरुशुद्धिमाह सत्यः—
जन्मष्टमारिसहजोपगतः सुरेज्यो मृत्युं व्रतोपनयने विदधाति निस्यम्।
अन्त्योपगे च दशमे नियतश्चतुर्थे द्रव्यक्षयं प्रकुरुते विसुखत्वमाशु ॥

इयं शुद्धिः—"बटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः।
श्रेष्ठो गुरुः खषट्त्र्याद्ये पूजयाऽन्यत्र निन्दितः ॥'

एतन्मुहूर्तचिन्तामण्युक्तगुरुशुद्धिविचारतो भिन्नाऽस्ति ।

तत्र रविशुद्धिरपि यथाऽऽह, माण्डव्यः--

सूर्यो व्रतोपकरणे दशमे धनाढ्यं षष्ठे तृतीयभवने क्रतुभाजनं च ।
एकादशे सकलशास्त्रकलाविधिज्ञं शेषेषु राशिषु नरं बहुदुःखभाजम् ॥

अथ सर्वेषां ग्रहाणां गोचरशुद्धिरुक्ता बादरायणेन--

सूर्यः षड्त्रिदशस्थितस्त्रिदशषट्सप्ताद्यगश्चन्द्रमा-
जीवः सप्तनवद्विपञ्चमगतो वक्रार्कजौ षट्त्रिगौ ॥
सौम्यः षट्दशद्विचतुर्दशाष्टमगतः सर्वेऽप्युपान्ते शुभाः
शुक्रः षट्दशसप्तराशिसहितः शार्दूलवभ्रासकृत् ॥

सर्वत्र जन्मराशिमारभ्य गणना कार्येति ।

तत्र ग्रहगोचरशुद्धौ वर्णभेदेन ग्रहशुद्धिभेद उक्तो लघुहारीतेन--

व्रतबन्धो द्विजातीनां विशुद्धया जीवशुक्रयोः ।
चन्द्रशुद्धया तु वैश्यानां क्षत्रियाणां कुजार्कयोः ॥

अथ मासफलम् ।

वाचस्पतिः--

माघे द्रविणशालाढ्यः फाल्गुने च दृढव्रतः । चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् ॥
ज्येष्ठे गहननीतिज्ञ आषाढे क्रतुभाजनः । शेषेष्वन्यत्र रात्रिः स्यान्निषिद्धं च निशिव्रतम् ॥

वराहः--

दिनकरशशिजीवे गोचरे शोभनस्थे । उदगयनगतेऽर्के लग्नयोगे प्रशस्ते ॥
हरिकरवसुचित्रासौम्यपौष्णाश्विशक्रा सलिलपवनपुष्या मेखलाबन्धनेष्टाः ॥

एवञ्च--हस्तत्रये दैत्यरिपुत्रये च पुष्येन्दुशक्राश्विनिरेवतीषु ।
वारेषु शुक्रार्कबृहस्पतीनां हितानुबन्धी द्विजमौञ्जिबन्धः ॥

श्रीपतिः--

शाखाधिपे बलिनि केन्द्रगतेऽथवाऽस्मिन् वारेऽस्य चोपनयनं कथितं द्विजानाम् ।
नीचस्थितेऽप्यरिगृहेऽथ पराजिते वा जीवे भृगौ श्रुतिविधिस्मृतिकर्महीनम् ॥

तत्र शाखाधिपाः--'ऋगथर्वसामयजुषामधिपा गुरुसौम्यभौमसिताः ॥'

व्यवहारसमुच्चये विहितनक्षत्राणि--

अश्विनीमृगचित्राश्च हस्ताः स्वात्यथ शक्रभम् । पुष्यश्च पूर्वफल्गुनी श्रवणा रेवती तथा ।
शतभिषा वसुसंयुक्ता व्रतबन्धे प्रशस्यते ॥

लग्नानि तु व्रतबन्धे वृषसिंहधनुर्मीनतुलात्मकानि विहितानि तत्र लग्नशुद्धिः-

लग्ने सौरिदिवाकरावनिसुताः कुर्युर्वधं बन्धनं
वित्ते वित्तविनाशमाशु सहजे नैरुज्यमिष्टागमम् ॥
बन्धौ बन्धुविरोधमेव तनये पुत्रक्षयं षष्ठभे
सौभाग्यार्थसुखानि, दारमरणं यच्छन्ति जामित्रभे ॥

निधनभवनसंस्था मृत्युमथप्रणाशं तपसि विविधरोगान् कर्महानिं दिशन्ति ॥
वियति रवियमारा नीचवृत्तिं तथाऽऽये बहुविधधनलाभं रिष्फगेऽर्थक्षयञ्च ॥
षष्ठेऽष्टमे शशधरे मरणं प्रयाति जीवे निशाकरसुते विगुणोऽर्थ हीनः।
क्रूरः कुजे मृदुमना विगुणोऽलसश्च शुक्रे पटुर्गुरुवदिन्दुभृगू विकल्प्यौ ॥

व्यासः—अस्तं गते दैत्यगुरौ गुरौ वा क्षीणेऽपि वा पापयुतेऽप्यनुक्ते।
व्रतोपनीतो दिवसैः प्रणाशं प्रयाति देवैरपि रक्षितो यः ॥

नो सन्ध्यागर्जिते प्राहुर्व्रतोपनयन बुधाः। न रात्रौ न च सन्ध्यायां नानध्याये गलग्रहे ॥
त्रयोदश्यादिचत्वारि पञ्चम्यादिदिनत्रयम्। चतुर्थी चैकतः प्रोक्ता अष्टावेते गलग्रहाः ॥
पौषादि चतुरो मासान् ज्ञेया वृष्टिरकालजा। व्रतयात्रादिकं तत्र वर्जयेत्सप्तवासरान् ॥
एकेनैकदिनं त्याज्यं द्वितीयेन दिनत्रयम्। तृतीयेन तु सप्ताहं त्यजेदाकालवर्षणे।
वृत्तेऽप्यकालवर्षे नाशुद्धिर्निर्दिशेत्तावत्। यावन्न भवति याने नरपशुचरणाङ्किता वसुधा॥

नरसिंहपुराणे—
अयने विषुवे चैव शयने बोधने तथा। अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ॥

इति विशेषाः म० म० मैथिल पं० मुरारिमिश्रकृतशुभकर्मनिर्णये द्रष्टव्याः—

तत्र दण्डप्रमाणमुक्तं राजमार्त्तण्डे—
ऋजुरनुपहतो दीनः सुश्लिष्टो ब्राह्मणस्य पालाशः।
राज्ञश्चौदुम्बरजो वैश्यस्य तु बिल्वसम्भवः प्रोक्तः ॥

केशललाटघ्राणप्रमाणकानि त्वभीष्टानि। क्रमशो विप्रक्षत्रियवैश्यानां दण्डकाष्ठानि ॥

स्त्रियास्तु नोपनयनं तत् स्थान एव विवाहविधानात् तदाह, मनुः—
वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥

## (२२) अथ हवनप्रकरणम्।

तत्र ब्रह्मदक्षिणार्थे पूर्णपात्रप्रमाणमुक्तं कात्यायनेन—
यावता बहुभोक्तुस्तु तृप्तिः पूर्णेन विद्यते। नावराद्ध्यर्मतः कुर्यात्पूर्णपात्रमिति स्थितिः ॥

विष्टरविषये तत्रैव—'दर्भसंख्या न विहिता विष्टरास्तरणेषु च।'

अग्निं मुखेनैव प्रज्वालयेन्नशूर्पादिना—
होतव्ये च हुते चैव पाणिशूर्पस्थदारुभिः। न कुर्यादग्निधमनं कुर्याद्वा व्यजनादिना ॥
मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत।
नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तम् ॥
न पाणिना न शूर्पेण न च मेध्याजिनादिभिः। मुखेनोपधमेदग्निं मुखादेव व्यजायत ॥
पटकेन भवेद्व्याधिः शूर्पेण धननाशनम्। पाणिना मृत्युमाप्नोति कर्मसिद्धिर्मुखेन तु ॥

अथेन्धनलक्षणम्—
नाङ्गुष्ठादधिका कार्या समित्स्थूलतया क्वचित्।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता।
प्रादेशान्नाधिका नोना—इत्यादि

तथा चोक्तं शब्दकल्पद्रुमे—

विशीर्णा विदला ह्रस्वा वक्राः स्थूलाः द्विधा कृताः ।
कृमिदष्टाश्च दीर्घाश्च समिधो नैव कारयेत् ॥

तत्फलमपि तत्रैव—

विशीर्णाऽऽयुः क्षयं कुर्याद्विदला पुत्रनाशिनी ।
ह्रस्वा नाशयते पत्नीं वक्रा बन्धुविनाशिनी ॥
कृमिदष्टा रोगकरी विद्वेषकरणी द्विधा । पशून् मारयते दीर्घा स्थूला चार्थविनाशिनी ॥

अथ नवग्रहाणां समिध उक्ता याज्ञवल्क्यस्मृतौ—

अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ।
औदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ अ० १।३०३।

अथ स्रुवादिलक्षणम्—कात्यायनस्मृतौ—

खादिरो वाऽथ पालाशो द्विवितस्तिः स्रुवः स्मृतः ।
स्रुग्बाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः ॥
स्रुवाग्रे घ्राणवत्खातं द्व्यङ्गुष्ठपरिमण्डलम् । जुह्वाः शराववत्खातं सनिर्वाहं षडङ्गुलम् ॥

एकहस्तेनैव जुहुयात्, तथाऽऽह यमः—

श्राद्धे हवनकाले च दद्यादेकेन पाणिना ।
उभाभ्यां तर्पणे दद्यादिति धर्मो व्यवस्थितः ॥

(क) अग्निमध्ये एव यथाऽऽहुतिपातस्तथा होतव्यः—

'बाह्यहोमप्रदाता च पाषाणेदर्दुरो भवेत् ॥'

इति लिङ्गपुराणे उत्तरार्धे २५ अध्याये उक्तम् ।

आचार्यलक्षणमाह, स्मृतौ—

सार्थवेदविचारज्ञः सदाचारी समर्थकः । दयालुः क्रोधशून्यश्च निर्लोभो वीतमत्सरः ॥
अप्रमत्तः सदा शुद्धःस्वग्निहोत्री तु होतृकः ॥

तथा तस्यानधिकारिलक्षणमाह, मनुः—

नैव कन्या न युवतिर्नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा ॥ प० पु० १३ ।

अर्थात्स्त्रीमूर्खरोगिविवाहहीना आचार्या न भवेयुः ॥

---

(क) अथाग्निं ध्यायन्नाहुतिं प्रक्षिपेत् । तत्राग्नेर्ध्येयरूपम् रुद्रकल्पे—रुद्रतेजःसमुद्भूतं द्विमूर्धानं द्विनासिकम् । षण्नेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम् ॥ याम्यभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम् । स्रुवं स्रुचं च शक्तिं च अक्षमालां च दक्षिणे ॥ तोमरं व्यजनं चैव घृतपात्रं तु वामके । बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् । दक्षिणे च चतुर्जिह्वं त्रिजिह्वमुत्तरे मुखम् । द्वादशकोटिमूर्त्याख्यं द्विपञ्चाशत्कलायुतम् ॥ स्वाहास्वधावषट्कारैरङ्कितं मेषवाहनम् । रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम् । रौद्रं तु वह्निनामानं वह्निमावाहयाम्यहम् ॥ इति ।

अथ निन्दितपुरोहितलक्षणम् ।

कालिकापुराणे--

काणं यज्ञमपुत्रं वाऽनभिज्ञमजितेन्द्रियम् ।

न ह्रस्वं व्याधितं वाऽपि नृपः कुर्यात्पुरोहितम् ।

अथ साकल्यप्रमाणमुक्तमानन्दरामायणे--

तिलार्धं तण्डुला देयास्तण्डुलार्धं यवास्तथा ।

यवार्धं शर्कराः प्रोक्ताः सर्वार्धं च घृतं स्मृतम् ॥

शुभकर्मनिर्णये--ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥

अथ ब्रह्मविष्टरयोर्लक्षणम्, अङ्गिरा आह--

पञ्चाशद्भिर्भवेद् ब्रह्मा तदर्धेन तु विष्टरः । ऊर्ध्वकेशो भवेद् ब्रह्मा अधःकेशस्तु विष्टरः ।

अथार्घ्यमधुपर्कयोर्लक्षणं कात्यायने--

साक्षतं सुमनोयुक्तमुदकं दधिसंयुतम् । अर्घ्यं, दधिमधुभ्यां च मधुपर्को विधीयते ।।

तथा वीरमित्रोदये संस्कारप्रकाशोद्धृतवचनम्--

'कांस्येन कांस्ये विहितं दधिमध्वाज्यसंयुतम् । मधुपर्कमिति प्राहुर्याज्ञिका यज्ञकर्मणि ॥

आज्यस्थाली मृन्मयी चक्रमात्रनिष्पन्ना न ग्राह्येति--

म० म० पं० मुरारिमिश्रा आहुः । तथा च कात्यायनः--

कुलालचक्रनिष्पन्नमासुरं मृन्मयं भवेत् । तदेव हस्तघटितं प्रशस्तं हव्यकव्ययोः ।।

अथवा--आज्यस्थाली तु कर्तव्या तैजसद्रव्यसम्भवा ।

माहेयी वापि कर्तव्या नित्यं सर्वाग्निकर्मसु ॥

अथ स्रुवधारणम्--

चतुरङ्गुलं परित्यज्य अग्रे चैव द्विरष्टकम् । चतुरङ्गुलं च तन्मध्ये धारयेच्छङ्खमुद्रया ॥

हीयते यजमानो वै स्रुवमूलस्य दर्शनात् । तस्मात् संगोपयेन्मूलं होमकाले स्रुवस्य तु ।।

साम्बपुराणे--क्षुत्तृट् क्रोधत्वरायुक्तो हीनमन्त्रैर्जुहोति यः ।

अप्रवृद्धे सधूमे वा सोऽन्धः स्यादन्यजन्मनि ।।

हवनेऽनिष्टलक्षणम्--

अल्पे रूक्षे सस्फुलिङ्गे वामावर्ते भयानके । आर्द्रकाष्ठैः सुसम्पूर्णे फूत्कारवति पावके ॥

कृष्णार्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम् । आहुतीर्जुहुयाद्यस्तु तस्य नाशो भवेद् ध्रुवम् ॥

तथा च कात्यायनः--

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणी च मानवः । मन्दाग्निरामयावी च दरिद्रश्चाभिजायते ।।

तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन ।

आरोग्यमिच्छताऽऽयुश्च श्रियमात्यन्तिकीं तथा ।।

होमक्रियाबहिर्भूतशब्दाभिलापश्च जुह्वतो लक्ष्मीविनाशकर इति मुरारिमिश्रा आहुस्तथा च मनुः--

स्नातस्य वर्णस्तेजो जुह्वतोऽग्निः श्रियं हरेत् ।

भुञ्जानस्य यमस्त्वायुस्तस्मान्न व्याहरेत्त्रिषु ।।

अथ पूर्णाहुतिलक्षणम् । शौनकः--

अथ पूर्णाहुतिं दद्याद्गन्धपुष्पफलान्विताम् ।
साक्षता मूर्द्धकायस्तु समपाश्वकृदिङ्मुखः ॥

तथा शान्तिमयूखेऽग्निपुराणवचनम्--

मूर्धानं दिवमन्त्रेण संस्रवेण च धारया । दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचन ॥

गोभिलीये विशेषः--

न मुक्तकेशो जुहुयान्नातिपातितजानुकः । उत्तानेनैव हस्तेन अङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥

सर्वत्राचार्यो यजमानस्य स्वशाखीय एव कार्योऽन्यथाऽचार्यस्य यजमानशाख्यध्ययनाभावेन तच्छाखीयपदार्थानां निर्वाह एव न स्यात् ।

तथा च पराशरः--

यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् । अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति॥

येनैकाऽपि शाखा नाधीता, तस्य सकलशाखीयाचार्यत्वेऽयोग्यता सिद्धा । अतोऽनभिज्ञमाचार्यं न कुर्यादिति हवनप्रकरणम् ॥

अथ काम्यहोमेऽग्निवासविचारः ।

सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः ।
सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशो दिवि भूतले च ॥

अस्यार्थः—शुक्लपक्षे तिथिसंख्यामेकयुक्तां सूर्यादिवारसंख्यासंयुतां च कृत्वा चतुर्भिर्भजेद्यदि त्रिमितं वा शून्यमितं शेषं भवेत्तदा भूलोकेऽग्निवासः स होमे सुखदो भवति । यदि च एकमितमवशिष्टं तदा स्वर्गेऽग्निवासः स प्राणनाशकरः । यदि द्विमितं शेषं तदा पातालेऽग्निवासस्तत्र कृतो होमो धननाशकरः । अतः शून्यत्रिशेषे होमः कर्तव्यः इति सिद्धोऽर्थः । अत्र हवनेच्छितसमयप्राप्ततिथिर्ग्राह्या । कृष्णपक्षे तु या तिथिसंख्या तस्यां पञ्चदश संयोज्य शुक्लप्रतिपदादितस्तत्संख्या जाता, दर्शान्तादेव मुख्यचान्द्रमासारम्भत्वात् । तां सैकां रव्यादिदिनसंख्यासंहितां विधाय चतुर्भक्तां कृत्वा शेषतः पूर्ववत्फलं ज्ञातव्यम् ।

अथान्योऽपि विचारस्तत्रैव--

सूर्यभात्त्रित्रिभे चान्द्रे सूर्यविच्छुक्रपङ्गवः । चन्द्रारेज्यागुरुशिखिनो नेष्टा होमाहुतिःखले॥

सूर्याक्रान्तनक्षत्राच्चन्द्राश्रितनक्षत्रावधि गणिते एकद्वित्रिसंख्यान्यतमे सूर्यभागः । ततस्त्रिमितेऽर्थाच्चतुःपञ्चषडन्यतमसंख्यके बुधभागः । एवं ततस्त्रिमितेऽर्थात्सप्तमाष्टमनवमान्यतमे शुक्रभागः, एवं चक्रन्यासः—

| सू. | बु. | शु. | श. | च. | कु. | बृ. | रा. | के. |
|---|---|---|---|---|---|---|---|---|
| १ | ४ | ७ | १० | १३ | १६ | १९ | २२ | २५ |
| २ | ५ | ८ | ११ | १४ | १७ | २० | २३ | २६ |
| ३ | ६ | ९ | १२ | १५ | १८ | २१ | २४ | २७ |

अत्र खले पापभागे सूर्यशनिकुजराहुकेतुभागे होमाहुतिर्नेष्टा। अर्थाद्रविनक्षत्रात् १।२।३।१०।११।१२।१६।१७।१८।२२।२३।२४।२५।२६।२७। एतदन्यतमचन्द्रनक्षत्रे होमो न कर्त्तव्य इत्यर्थः।

अत्र मद्विशेषप्रकारः—

शुक्लतिथिदिनयोगः सैको वेदैर्हृतः शेषः। कृष्णे तिथिदिनयोगो भक्तो वेदैर्हृतः शेषः॥
यदि शून्यं त्रिमितं वा तदा शुभं काम्यहोमेषु॥

अथ प्रसङ्गात्, काष्ठकरीषस्थापननक्षत्रविचारः—

सूर्यर्क्षाद्रसभैरघस्थलगतैः पाको रसैः संयुतः।
शीर्षे युग्ममितैः शवस्य दहनं मध्ये युगैः सार्पभीः॥
प्रागाशादिषु वेदभैः स्वसुहृदां स्यात्संगमो रोगभीः
काथादेः करणं सुखं च गदितं काष्ठादिसंस्थापने॥

यदा यस्मिन्नक्षत्रे सूर्यो भवेत्ततः १।२।३।४।५।६ एतन्मितैर्नक्षत्रैः स्थापितेन काष्ठादिना सरसः पाकः। ७।८ आभ्यां नक्षत्राभ्यां मृतकदहनम्। ९।१०।११।१२ एभिः सर्पभयम्। १३।१४।१५।१६ एभिर्मित्रसमागमः। १७।१८।१९।२० एभी रोगभयम्। २१।२२।२३।२४ एभिः काथादिकरणम्। २५।२६।२७।२८ एभिः सुखं भवति।

अर्थात् सूर्याक्रान्तनक्षत्रात् १।२।३।४।५।६।१३।१४।१५।१६।२५।२६।२७।२८ एतेषु काष्ठादिस्थापनं शुभम्। अत्राभिजितोऽपि ग्रहणं कृतम्। तन्मानम् 'वैश्वप्रान्त्याङ्घ्रिश्रुतितिथिभागतोऽभिजित् स्यादिति।

अथ व्यतिपातयोगः (पृ० १३२)

तल्लक्षणं तु—'श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके।
यद्यमा रविवारेण व्यतिपातः स उच्यते॥'

श्रवणाश्विनीधनिष्ठाऽऽर्द्राऽऽश्लेषानक्षत्राणामन्यतमनक्षत्रं यदा रविवारयुक्तायाममावास्यायां दैवाद्भवेत्तदाऽयं योगः सम्भवति। तत्र यन्नक्षत्रं यस्याममायां भवति तन्नक्षत्रात्पूर्वगतं यत् षोडशतमं नक्षत्रं तत्साधारण्येन पूर्वपूर्णिमायां, परगतं च षोडशतमं भं परपूर्णिमायां च क्रमेण गतं सम्भवतीति युक्त्या श्रवणनक्षत्रात् परतः षोडशतमं मघा, तद्युक्तपूर्णिमा माघमासेऽतस्तत्पूर्वामायामर्थात्पौषामावास्यायां तस्य सम्भवः।

एवमश्विनीनक्षत्रात् षोडशतमं पूर्वगतं हस्तनक्षत्रं तन्नाम्ना मासनाम्नः संकेताभावात्पूर्वगतपञ्चदशनक्षत्रस्य चित्रानक्षत्रस्य चैत्रमासीयपूर्णिमायां सम्भवात् तत्पूर्णिमोत्तरामावास्यायामर्थाद्वैशाखमासीयदर्शे तत्संभवः। तथा धनिष्ठानक्षत्रात् पूर्वगतषोडशतमनक्षत्रं पुष्यं तस्य पौषीयपूर्णिमायां सम्भवात् तदुत्तरामावास्यायामर्थान्माघमासीयदर्शे तत्सम्भवः। एवमार्द्रानक्षत्रात् पुरतः षोडशतमं नक्षत्रमुत्तराषाढा, तस्या आषाढीयपूर्णिमायां संभवात्तत्पूर्वामायां तन्मासीयामायामेव तत्सम्भावना। आश्लेषानक्षत्रात्तु पूर्वगतं पञ्चदशतमनक्षत्रं श्रवणं तेन भाद्रे तथा षोडशतमं नक्षत्रमुत्तराषाढसंज्ञं तेनाषाढेऽपि तत्सम्भावना सिद्ध्यति। कृष्णपक्षे कस्यापि नक्षत्रस्य क्षयसंभवे

अमातः पञ्चदशनक्षत्रमेव तत्पूर्णिमायां संभवति। वृद्धिस्थले सप्तदशनक्षत्रमिति मध्यममानेन। अत्र योगे गङ्गास्नाने महत्फलं, तथा दानेऽपि उपवासेऽपि फलश्रवणादर्शनं दृश्यते जयसिंहकल्पद्रुमप्रभृतिषु स्मृतिनिबन्धेषु। तत्रामायां मध्यमचन्द्ररविक्रान्तिसाम्यादपि ज्यौतिषसिद्धान्तसिद्धपातयोगोऽर्थसिद्ध एव। परन्तु 'व्यतिपातोऽयनभेदे गोलकत्वेऽर्कचन्द्रयोः क्रान्त्योः साम्ये वैधृत एकायनेऽन्यदिगपक्रमसमत्वे ॥' इति सिद्धान्तशिरोमणिपाताध्यायश्लोकाद्वैधृतस्य संभवो न तु दर्शे व्यतिपातस्य। योगोऽयमर्धोदयप्रतिरूपक एव, तत्र व्यतिपातयोगस्यैव विशेषात् यथा श्रवणनक्षत्ररविवारव्यतिपातयोगयुक्तायां पौषमाघयोरमायां त्वर्धोदयो योगविशेषस्तदन्तर्गत एवायं व्यतिपातोऽपि भवतीति ॥

व्यतिपाते (क) दानमनन्तफलं भवतीत्युक्तं वाराहे—

शतमिन्दुक्षये दानं सहस्रं तु दिनक्षये। विषुवे शतसाहस्रं व्यतिपाते त्वनन्तकम् ॥
यथैवाभ्युदितः सूर्यः समग्रं च तमो दहेत्। इदं व्रतं तथैवेह सर्वपापं व्यपोहति ॥इत्यादि

अथारोग्यदानफलम्, नन्दिपुराणे—

धर्मार्थकाममोक्षाणामारोग्यं साधनं यतः। अतस्त्वारोग्यदानेन नरो भवति सर्वदः ॥

अथारोग्यशालाकरणफलम्—

आरोग्यशालां कुरुते महौषधिपरिच्छदाम्। विदग्धवैद्यसंयुक्तां घृतान्नमधुसंयुताम् ॥
आरोग्यशालामेवं तु कुर्याद्यो धर्मसञ्चयः। स पुमान् धार्मिको लोके स कृतार्थः सबुद्धिमान् ॥
सम्यगारोग्यशालायामौषधैः स्नेहपाचनैः। व्याधितं नीरुजीकृत्य अप्येकं करुणायुतः ॥
प्रयाति ब्रह्मसदनं कुलसप्तकसंयुतः ॥

अथ जलादिदानफलम्—

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः। तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥
वासोदश्चन्द्रसालोक्यं सूर्यसालोक्यमश्वदः।
भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः। गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥

---

(क) अथात्र हस्तोदकदाननिषेधो यथा शन्तनुकृतदानचन्द्रिकायाम्-तरङ्ग ७७श्लो० ७२ हस्ते दानं ददद्दाता ह्यनन्तं फलमाप्नुयात्। गृहीतुस्तप आदत्ते सद्य एव न संशयः॥ हस्ते गृहीतं यद्दानं जलदर्भसमन्वितम्। पुण्यतीर्थे गृहीतं तत् सर्वान् धर्मान् व्यपोहति।

चक्रपाणिकृतव्यवहारमयूखे—तपः स्वाध्यायनिरतः साङ्गवेदार्थचिन्तकः। हस्ते गृहीतदानेन सद्यः पतति निश्चितम्।

राजराजेश्वरकृताचारपद्धतौ—श्लो० ४७-४९ प्रयागादौ शुभक्षेत्रे यत्र कुत्रापि वा द्विजः। असद्दानाद्यथा विप्रस्तथा पतति निश्चितम् ॥ एतेन सह सम्बन्धं यौनं मौखं च यश्चरेत् ॥ सोऽपि तत्समतामेति अन्नानां चैव भक्षणात् ॥ दुर्भिक्षे राजविद्रोहे प्राणसङ्कटकेऽपि वा। हस्तोदकं न गृह्णीयात्तद्धि तेजस्तपोहरम्।

पुनराह्निकसूत्रे—मनसा पात्रमुद्दिश्य कुशोपरि जलं क्षिपेत्। दाता तत्फलमाप्नोति प्रतिगृहीता न दोषभाक् ॥ मनसा पात्रमुद्दिश्य जलं भूमौ विनिक्षिपेत्।

अथ भूमिदानफलम्--
भूदानेन समं दानं न भूतं न भविष्यति । इति धर्मविदः प्राहुस्तस्मै निगदतः शृणु ॥
षष्टिवर्षसहस्राणि स्वर्गे वसति भूमिदः । आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ।
अथ भूहरणे दोष आदित्यपुराणे--
स्वदत्तां परदत्तां वा यो हरेत्तु वसुन्धराम् । श्वविष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति॥
अथान्नदानफलम्, भारते--
अन्नेन सदृशं दानं न भूतं न भविष्यति । तस्मादन्नं विशेषेण दातुमिच्छन्ति साधवः ॥
यो दद्यादप्रियेणाग्नं यश्चान्नं नाभिनन्दति । तावुभौ नरके मग्नौ वसेतां शरदां शतम् ॥
अथ गृहदानफलमुक्तं तत्रैव--

रसान्नोपस्करान् गेहं विप्रेभ्यो यः प्रयच्छति ।
तस्य न क्षीयते वंशः स्वर्गमाप्नोत्यनन्तकम् ॥

अभयदानं (क)फलम्—
भूताभयप्रदानेन सर्वान् कामानवाप्नुयात् । दीर्घमायुश्च लभते सदा च सुमना भवेत् ॥
श्रान्तदीनपरिचर्ययाऽपि विशेषफलमुक्तं हारीतेन--

श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम् ।
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत् ॥

अथोपार्जितद्रव्यस्योपयोगक्रममाह मार्कण्डेयः—

पादेन तस्य पारक्यं कुर्यात् सञ्चयमात्मवान् ।
अर्धेन चात्मभरणं नित्यनैमित्तिकान्वितम् ॥
पादश्चार्थोऽयमर्थस्य मूलभूतं विवर्द्धयेत् ॥

## अथ मन्त्रोद्धारविधिः ।

तत्र दीक्षाग्रहणावश्यकत्वमुक्तं यामले—
अदीक्षितानां मर्त्यानां दोषं शृण्वन्तु साधकाः । अन्नं विष्ठासमं ज्ञेयं जलं मूत्रसमं तथा ॥
अदीक्षितकृतं श्राद्धं श्राद्धं चादीक्षितस्य च । गृहीत्वा पितरस्तस्य नरके चाशु दारुणे ॥

पतन्त्येव न सन्देहो यावदिन्द्राश्चतुर्दश ।
तथाऽप्यदीक्षितस्यार्चां देवा गृह्णन्ति नैव हि ॥ इत्यादि ।

तत्र दीक्षाशब्दव्युत्पत्तिस्तत्रैव—

दिव्यं ज्ञानं यतो दद्यात् कुर्यात्पापस्य संक्षयम् ।
तस्माद् दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः ॥

अपि च चिदम्बररहस्ये—
दीयते ज्ञानमेतेन क्षीयतेऽज्ञानसम्पदः । तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः ।

---

(क) दानप्रसङ्गात् यज्ञोपवीतादिदानफलान्याह-क्षौमजं वाथ कार्पासं पट्टसूत्रमथापि वा यज्ञोपवीतं यो दद्याद्वस्त्रदानफलं लभेत् । यज्ञोपवीतं व्यजनं छत्रोपानहमेव च । स्वल्पदानं च कौन्तेय पुण्यसंख्या न विद्यते ॥ श्राद्धकाले तु यो दद्याच्छोभने च उपानहौ । स गच्छन्नन्यमार्गेऽपि अश्वदानफलं लभेत् ॥

केभ्यो मन्त्रग्रहणं न कार्यन्तदुक्तं ताराकल्पे--

पितुर्मन्त्रं न गृह्णीयात्तथा मातामहस्य च । सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥

प्रमादाद्वा तथाऽज्ञानात् पितृदीक्षां समाचरेत् ।
प्रायश्चित्तं ततः कुर्यात् पुनर्दीक्षां समाचरेत् ॥
पितुर्दीक्षा यतेर्दीक्षा दीक्षा च वनवासिनः ।
अनाश्रमाणां या दीक्षा सा दीक्षा दुःखदायिनी ॥

त्रिपुरारहस्ये—

भिक्षुभ्यश्च वनस्थेभ्यो वर्णिभ्यश्च महेश्वरि ! ।
गृहस्थो भोगमोक्षार्थी मन्त्रदीक्षां न चाचरेत् ॥

ब्राह्मणः सर्ववर्णानां, त्रयाणां क्षत्रियो गुरुः । वैश्यो वर्णद्वयानां तु शूद्राणां शूद्रएव तु ॥

स्त्रीणां पतिमन्त्रग्रहणेऽपि दोष उक्तो भविष्यपुराणे—

'पत्युर्मन्त्रं पितुर्मन्त्रं न गृह्णीयाद् वै (क) कदाचन ।'

इति पतिभिन्नगुरुजनसद्भावे बोध्यम् ।

पतिभिन्नगुरुजनाभावे पत्युर्मन्त्रग्रहणे प्रमाणमुक्तं चिदम्बररहस्ये—

पतिव्रतानां सर्वासां पतिरेव गुरुः स्मृतः । तस्मादेव तु सा दीक्षां गृह्णीयाद्भक्तिसंयुता ॥
भर्त्तुर्गुरोः सकाशाद्वा गृह्णीयाद्भक्तिसंयुता । पितुर्वा स्वपितुर्वापि चान्यथा पापभागिनी ॥

अथ शिष्यलक्षणम्--

शान्तः सुनीतिः शुद्धात्मा श्रद्धावान् धारणक्षमः । समर्थश्च कुलीनश्च प्राज्ञः सच्चरितो व्रती ॥
एवमादिगुणैर्युक्तः शिष्यो भवति नान्यथा ॥

गुरौ शिष्येण मानवभावो न कर्त्तव्यस्तदाह--

गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरबुद्धिताम् । यन्त्रे मूर्त्तौ शिलाबुद्धिं कुर्वाणो नरकं व्रजेत् ॥

अथ दीक्षाग्रहणे मुहूर्त्तविचारः—

तत्र चैत्रवैशाखश्रावणाश्विनकार्त्तिकमार्गमाघफाल्गुनमासाः, रविचन्द्रबुधगुरुशुक्रदिनानि, द्वितीयातृतीयापञ्चमीसप्तमीदशम्येकादशीद्वादशीतिथयः, अ० रो० मृ० पुन० पुष्य० पूफ० उफ० ह० चि० स्वा० वि० अनु० मूल० पूर्वाषाढ, उत्तराषाढ, शतभि० पू.भा; उभा० रे० एतानि भानि, शुभ, सिद्धि, आयु० ध्रुव० प्रीति० सौ० वृ० हर्षण० एते योगाः । बव० बा० कौ० तै० एतानि करणानि, वृषसिंहकन्याधनुर्मीनलग्नानि प्रशस्तानि । शुक्लः पक्षः । पञ्चम्यन्तं कृष्णपक्षोऽपि । एते शुभा दीक्षाग्रहणे ।

चिदम्बररहस्ये—प्रातःकालो धर्मदः स्यात्संगवो राज्यदः स्मृतः ।
मध्याह्ने सर्वसिद्धिः स्यात् परौ द्वौ च विनिन्दितौ ॥
रजनी मन्त्रदाने च केवलेनैव गर्हिता ।
दिवा सर्वेऽपि कुर्वन्ति सिद्धिदं परमं स्मृतम् ॥

---

(क) अत्राधिकपाठः । इति स०

तत्रैव लग्नशुद्धिरुक्ता—

त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः।
दीक्षायां तु शुभाः सर्वे रन्ध्रस्थाः सर्वनाशकाः॥

तत्र वर्षेषु सिद्धदिनानि—मेषतुलामकरकर्कसंक्रान्तिः। मन्वादिः, युगादिः, सूर्यग्रहणम्। इत्यादि।

अथ देवताभेदेन मन्त्राः—

दक्षिणकालिकायाः—क्रीँ १॥ क्रीँ क्रीँ क्रीँ॥ ऐँ क्रीँ ऐँ। अन्ये मन्त्रा अन्यग्रन्थे द्रष्टव्याः।

तारायाः—स्त्रीँ॥ ओँ ह्रीँ स्त्रीँ हूं फट्। श्रीँ स्त्रीँ हूँ फट्। ह्रीँ स्त्रीँ हूँ।

एकजटायाः—ह्रीँ श्रीँ हूँ फट्।

नीलसरस्वत्याः—ह्रीँ स्त्रीँ हूँ।

बालायाः—ऐँ क्लीँ सौँ।

महालक्ष्म्याः—श्रीँ। ऐँ श्रीँ ह्रीँ क्लीँ। श्रीँ ह्रीँ श्रीँ।

भुवनेश्वर्या—ह्रीँ १। ऐँ ह्रीँ श्रीँ। श्रीँ ह्रीँ क्लीँ।

छिन्नमस्तायाः—हूँ।

धूमावत्याः—धूँ धूँ धूमावती ठः ठः।

दुर्गायाः—ह्रीँ दूँ। स्त्रीँ दूँ। श्रीँ दूँ। ऐँ दूँ। ओँ दूँ। क्लीँ दूँ। इत्यादि

अन्नपूर्णायाः—श्रीँ नमः। ओँ नमः। क्लीँ नमः। ह्रीँ नमः। ओँ स्वाहा क्लीँ स्वाहा। ह्रीँ स्वाहा। ऐँ स्वाहा।

बगलायाः—ह्रीँ। ओँ ह्लीँ बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीँ ओँ स्वाहा।

अथ गुरुमाहात्म्यमुक्तं चिदम्बररहस्ये—

गुरुभक्तिविहीनाय तपो विद्या व्रतं कुलम्। निष्फलं हि महेशानि! केवलं लोकरञ्जनम्॥
नारायणे महादेवे मातापित्रोश्च राजनि। यथा भक्तिर्भवेद् देवी तथा कार्या निजे गुरौ॥
लक्ष्मीनारायणौ वाणीधातारौ गिरजाशिवौ। श्रीगुरुं गुरुपत्नीं च पितराविति चिन्तयेत्॥
गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरबुद्धिताम्। यन्त्रे मूर्त्यां शिलाबुद्धिं कुर्वाणो नरकं व्रजेत्
गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः। शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टेन कश्चन॥
गुरौ हितं हि कर्तव्यं वाङ्मनःकायकर्मभिः। अहिताचरणाद् देवि! विष्ठायां जायते कृमिः॥
गुरुत्यागाद् भवेन्मृत्युर्मन्त्रत्यागाद्दरिद्रता। गुरुमन्त्रपरित्यागाद्रौरवं नरकं व्रजेत्॥
गुर्वर्थं धारयेद् देहं तदर्थं धनमर्जयेत्। निजप्राणान् परित्यज्य गुरुकार्यं समाचरेत्॥
गुरूक्तं परुषं वाक्यमाशिषं चिन्तयेच्छिवे। तेन सन्ताडितो वाऽपि प्रसादमिति संस्मरेत्॥
गुर्वग्रे न तपःकुर्यान्नोपवासं व्रतादिकम्। तीर्थयात्रां च नो कुर्यान्न स्नायादात्मशुद्धये॥
न नियोगं गुरोर्दद्यायुष्मदा नैव भाषयेत्। ऋणदानं तथा दानं वस्तूनां क्रयविक्रयम्॥
न कुर्याद् गुरुभिः सार्धं, तदाज्ञां नैव लङ्घयेत्। न कुर्यान्नास्तिकैर्वादमाभाषणमपीश्वरि॥

विलोक्य दूरतो गच्छेन्नासीत सह तैः क्वचित् । गुरौ सन्निहिते यस्तु पूजयेदन्यमन्तिके ॥
स याति नरकं घोरं सा पूजा निष्फला भवेत् । यस्तिलार्धं तदर्धं वा गुरुस्वमुपजीवति॥
लोभान्मोहात् स पच्येत नरके च त्रिसप्तके । गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनोत्सुकः ॥
पतितस्य च चुल्लस्य प्रायश्चित्तं न विद्यते । व्यजनं पादुका छत्रं चामरं केशमोचनम् ॥
ताम्बूलमुल्वणं वेषमृत्सृजन् प्रविशेच्छनैः । पादप्रक्षालनं स्नानमभ्यङ्गं दन्तधावनम् ॥
मूत्रं निष्ठीवनं क्षौरं शयनं स्त्रीनिषेवणम् । वीरासनं च दुर्वाक्यमासनं हास्यरोदनम् ॥
केशमोचनमुष्णीषं प्रपदोद्घाटनं तथा । द्यूतकुक्कुटमल्लादियुद्धमित्यादि चाम्बिके ॥
गुरुयोगिमहायोगिसिद्धपीठाश्रमेषु च । नाचरेदाचरेन्मोहाद् देवताशापमाप्नुयात् ॥
अभिमानो न कर्तव्यो जातिविद्याधनादिभिः । छायाभूमिपरित्यागी तिष्ठेच्छ्रीगुरुसन्निधौ॥
एकासने नोपविशेद् गुरुणा तत्समैः सह ॥
रिक्तहस्तस्तु नोपेयाद्राजानं देवतां गुरुम् । गुरुं नाम्ना न भाषेत जपाच्छ्राद्धादृते प्रिये !
गुरुं प्रकाशयेद्धीमान् मन्त्रं नैव प्रकाशयेत् । अप्रकाशप्रकाशाभ्यां क्षीयते सम्पदायुषी ।
एकाक्षरप्रदातारं यो गुरुं नैव मन्यते । श्वानयोनिशतं गत्वा चाण्डालत्वमवाप्नुयात् ॥
पूजामध्ये गुरौ ज्येष्ठे पूज्ये चापि समागते ।
नत्वा ब्रूयाच्चतः शेषमाचरेत्तदनुज्ञया ॥ इत्यादि ।

स्वामिना यस्मान्मन्त्रग्रहणं कृतं, तत एव स्त्रिया अपि मन्त्रो ग्राह्य इत्युक्तं त्रिपुरारहस्ये—

यस्मात् पत्युश्च वामाङ्गं पत्नीति श्रुतयो जगुः । तस्मात्पतिश्च पत्नी च गुरुमेकं समाश्रयेत्
अज्ञानाद्वा गुरुं याऽन्यं कुरुते दैवतं तथा । सा नारी च्यवते धर्मान्नरकं चाधिगच्छति॥

यदि दैवादसंशोधितमनिष्टं बीजं गृहीतं तदा पुनरिष्टमन्त्रग्रहणे गुरुकरणविचारस्तत्रैव--

यो गुरोस्तु मन्त्रं प्राप्य पुनर्मन्त्रान्तरेच्छया । अन्यं न वरयेद्धीमान् वरयेद्यदि पापभाक् ॥
मन्त्रान्तरे यदीच्छा चेत्तमेव शरणं व्रजेत् । मृतश्चेद् दैवयोगेन तदा गुर्वन्तरं व्रजेत् ॥

अथ स्वप्नलब्धमन्त्रग्रहणविधिरुक्तस्तत्रैव--

स्वप्नलब्धे तु कलशे गुरोः प्राणान् निवेशयेत । वटपत्रे कुङ्कुमेन लिखित्वा ग्रहणं शुभम्।
ततः सिद्धिमवाप्नोति चान्यथा विफल भवेत् । इदं गुरोरभावे तु विधानं ग्रहणं मतम् ॥

अथ मन्त्रोद्धारविधिर्लिख्यते---

यथा कस्यचित् 'देवदत्त' इति नामास्ति तस्य को मन्त्र इष्टः स्यादिति विचारे नामादिवर्णः=द, कालीभुवनेश्वरीतारामहालक्ष्मीसरस्वतीमन्त्राणां क्रमेण मन्त्रादिवर्णाः=क, ह, स, श, ए । एभिः सह दकारस्य विचारः । तत्रादौ कुलाकुलचक्रं विलोकनीयम् । तत्र दकारः पृथ्वीतत्त्वे वर्तते । तस्य ककारः=वायुतत्त्वं न हितम् । हकारः आकाशतत्त्वं समम् । सकारः=जलतत्त्वात्मकं मित्रम् । शकारः=आकाशतत्त्वं समम् ॥ एकारोऽग्नितत्त्वं शत्रुः ।

अतः

| द. | क | ह | स | श | ए |
|---|---|---|---|---|---|
| | अ | स. | मि. | स. | श. |

अस्माच्चक्रात् सर्वापेक्षया तारामन्त्रः शुभः सिद्धः। अथ राशिचक्रे, दकारो मकरराशौ ततः ककारगतकोष्ठसंख्या = १०, हकोष्ठ संख्या = ९, स संख्या = ९, श = ९, ए = ७ । अत्र सर्वे मन्त्राः शुभा एव। अत्र ४। ८। १२ एते त्याज्याः। शेषाणि शुभानि। यात्रायां चन्द्रविचारवत्, रिपुवेदाष्ट-भानुषु' इत्युक्तिरपि तत्र प्रमाणम्।

अथ ताराचक्रे दकारोऽनुराधानक्षत्रम्। ततः क, ह, श, स, वर्णगतकोष्ठानि गणयित्वा नवभिर्भक्त्वा तारामानचक्रम् अत्र सर्वोत्तमौ शकारैकारौ

| द | क. | ह. | श. | स. | ए |
|---|---|---|---|---|---|
| ० | । | । | । | । | ८ |

कहसा मध्यमाः । यात्रायां ताराविचारवत् ३।५। ७ एता अशुभाः १ = मध्यमाः । २।४।६।८।६ उत्तमा ज्ञेयाः। अत्रैव गणचक्रमपि विचारणीयम्। यथा द = देवः, क= देवः। हः = नरः, श = नरः। स = नरः। अत्र दकारस्य ककारः सर्वोत्तमः । ह स शा उत्तमाः। इति।

अथ अकडमचक्रविचारे—द कोष्ठाद्गणिताः क, श, ह, साः क्रमेण क = ८ । श = १। ह = ४। स = ३। ए = ३। अत्र 'त्यजेच्छत्रुं मृतिं व्ययम्। 'इत्युक्त्या ककारो न शुभः। शेषाः शुभाः। अत्र गणना विलोमतो बोध्या। यथा मेषान्मीनं, मीनात्कुम्भं कुम्भान्मकरमेवं ज्ञेयम्।

अथ अकथहचक्रे विचारः।

अत्र चत्वारि, चतुष्कानि, तत्रापि चत्वारि चत्वारि कोष्ठानि सन्ति। यथा प्रथमम् १, २, ३, ४ एभिश्चतुर्भिरङ्कितं प्रथमकोष्ठम्। ५।६।७।८ एभिरङ्कितं द्वितीयकोष्ठम्। ९।१०।११।१२ एभिरङ्कितं तृतीयम् । १३।१४।१५।१६ एभिरङ्कितं चतुर्थं कोष्ठम्। तत्र प्रत्येककोष्ठे चत्वारि कोष्ठानि स्पष्टतया दृश्यन्ते। अत्र यावत् यस्मिन् चतुष्के नामादिवर्णः पतितस्तस्मान्मन्त्रादिवर्णकोष्ठं यावद्गणनीयम्, अर्थान्नामादिवर्णचतुष्ककोष्ठं = सिद्धम्, ततो दक्षिणक्रमेण द्वितीयं चतुष्कं साध्यम्। ततस्तृतीयं = सुसिद्धम्, चतुर्थम् = अरिः।

यथाऽत्र दकारः ५ कोष्ठे, तत्र ५, ६, ७, ८ एतान्यङ्कितकोष्ठानि मिलित्वा यदेकं चतुष्कं, तत्सिद्धम्। ९।१०।११।१२ एतच्चतुष्कं साध्यम्। १३।१४।१५।१६ एतच्चतुष्कं सुसिद्धम्। १।२।३।४ एतच्चतुष्कमरिः। अथ तत्रापि प्रत्येकचतुष्के चत्वारि कोष्ठानि, तत्रापि सिध्यसाध्यसुसिद्धारिक्रमेण गणनीयम्। अर्थादत्र तावद् दकारस्य ककारः कीदृशः? इति विचारे दकारचतुष्काच्चतुर्थे चतुष्के ककारस्तेनारिः। एवञ्च नामादिवर्णचतुष्कोपरि मन्त्रादिवर्णगतचतुष्कं तथा निवेशनीयम् यथा तत्सजातीयता न नश्यति अत्र ५।६।७।८ चतुष्कोपरि १।२।३।४ चतुष्कं निवेशितं तदा ५ अस्योपरि १ इदं कोष्ठं, ६ अस्योपरि २ इदं, ७ अस्योपरि ३, ८ अस्योपरि ४ इदं पतितं, तत्र दकोष्ठे एव ककोष्ठं पतितं, तत्रापि सिद्धसाध्यसुसिद्धारिक्रमेण गणने

सिद्धमेव सिद्धं पूर्वमरिः । अतोऽरिसिद्धो हि ककारः । हकारोऽपि तथैव सुसिद्धारिः सकारः । सिद्धारिः शकारः । अत्र सर्वत्र अरियुक्तत्वात्सर्वेऽपि मन्त्रा न शुभाः । 'आदावन्ते रिपुर्यस्य भवेत् त्याज्यः स मन्त्रकः' । एकारः सुसिद्धसुसिद्धम् ।

### अथ ऋणधनचक्रविचारः ।

तत्र चक्रोर्ध्वकोष्ठगता नामगतस्वरव्यञ्जनसंख्याः पृथग् विलिख्य योगं कृत्वाऽष्टभिर्भजेत्, तन्नामशेषमनष्टं स्थाप्यम् । एवञ्च चक्राधःकोष्ठगतमन्त्रस्वरव्यञ्जनसंख्या पृथग् विलिख्य योगं कृत्वाऽष्टभिर्भजेत्, शेषं मन्त्रशेषम्, अनयोर्यदि मन्त्रशेषोऽधिकाङ्कस्तदा मन्त्रः शुभः । समे समः । अल्पे मन्त्रशेषे स च मन्त्रो न ग्राह्यः ।

तथोक्तं तन्त्रे—मन्त्रो यद्यधिकाङ्कः स्याच्चदा मन्त्रं जपेत् सुधीः ।
समेऽपि च जपेन्मन्त्रं न जपेत्तु ऋणाधिके ॥

यथा देवदत्त = द् + ए + व् + अ + द् + अ + त् + त् + अ = १ + २ + १ + २ + १ + २ + ० + ० + २ + = ११ $\frac{११}{८}$ = १ + $\frac{३}{८}$

अत्राष्टभक्तानामङ्कशेषः = ३, अथ 'ए' = + अं = ४ + ० = ४

अत्र मन्त्राङ्कः = ४, योऽधिकः स ऋणी भवेदित्यनेन ऋणी शुभप्रदो मन्त्रः, 'मन्त्रो यद्यधिकाङ्कः स्यात्तदा मन्त्रं जपेत् सुधी' रित्यनेन च देवदत्तस्य 'ऐं' इति मन्त्रः शुभः ।

एवम् श्रीँ = श् + र् + ई + अं = ० + ३ + ६ + ० = ९।$\frac{९}{८}$९।८ = १ + $\frac{१}{८}$

क्रीँ = क् + र् + ई + अं = ६ + ३ + ६ + ० = १५। $\frac{१५}{८}$ = १ + $\frac{७}{८}$

अत्र देवदत्तस्य शकारो न शुभः । दक्षिणकालिकामन्त्रस्याष्टभक्तशेषाङ्काः = ७, एतदधिका न क्वापि मन्त्रेऽतोऽयं मन्त्रः सर्वेषामिष्ट एवेति ।

अथवा मन्त्राक्षराङ्कयोगो द्विगुणो नामाक्षराङ्कयोगेन युक्तोऽष्टभक्तः सन्मन्त्रशेषाङ्कः । तथा नामाक्षराङ्कयोगो द्विगुणो मन्त्राक्षराङ्कयोगेन युक्तोऽष्टभक्तः सन्नामशेषाङ्कः । तत्रापि मन्त्रशेषाङ्केऽधिके शुभप्रदो मन्त्रोऽन्यथाऽशुभप्रद इति ।

एवं षट्चक्रेषु मन्त्रस्योद्धारं कृत्वा शुभाशुभत्वं विचार्यम् ।

यदि प्रकृत्या देवविशेषेऽनुरागबाहुल्यं तदा तन्मन्त्रोद्धारावश्यकत्वं नैवेत्युक्तं चिदम्बररहस्ये—

यत्र यस्य भवेद्भक्तिविशेषः स मनूत्तमः । वैरिकोष्ठमपि प्राप्तोऽभीष्टदस्तस्य जायते ॥

### अथ मन्त्रग्रहणप्रकारः संक्षेपेण—

आदौ स्वस्तिवाचनं, ततः शिष्यः संकल्पं कुर्यात् तत्र संकल्पः—

ओं अद्येत्यादि—जन्मजन्मान्तरार्जितपापक्षयपूर्वकसकलाभीष्टाभ्युदयकामोऽमुकदेवतामन्त्रग्रहणमहं करिष्ये, ततो विधिवत्कलशस्थापनं विधाय गुरुवरणं कुर्यात् 'ओं अद्येत्यादि अमुकगोत्रममुकशर्माणं वाऽमुकगोत्राममुकदेवीं ( मातरं ) एभिः पुष्पचन्दनाक्षतताम्बूलवासोयुगालङ्कारैर्गुरुत्वेनाहं वृणे—वृतोऽस्मीति प्रतिवचनम् । यथा-

विहितं कर्म कुरु । करवाणीति प्रतिवचनम् । ततो गुरुः शिष्यशिरसि मातृकान्यासं मूलमन्त्रं च जपन् जलेनाभिषिञ्चेत् । ततो दातव्यमन्त्रमष्टोत्तरशतं प्रजप्य शिष्यकर्णे दद्यात् स्त्रिया वामकर्णे, पुरुषस्य दक्षिणकर्णे । शिष्यः फलद्रव्यादिभिर्गुरुपादयोः पतन् गुरुमन्त्रदेवतैक्यं सम्भावयन् प्रणमेत् । ततः शिष्यं गुरुरुत्थाप्याशीर्दद्यात् । ततः शिष्योऽष्टोत्तरसहस्रं वा तन्मन्त्रजपं विधाय गुरुदक्षिणां कुर्यात् । ओं अद्य कृतैतदमुकमन्त्रग्रहणप्रतिष्ठार्थमिदं द्रव्यं यथानामगोत्राय वा यथानामगोत्रायै मात्रे, वा गुरवे दक्षिणां तुभ्यमहं सम्प्रददे ।

ततोऽष्टोत्तरसहस्रं, वाऽष्टोत्तरशतं तन्मन्त्रयुक्ततद्देवतानाम्ना स्वाहान्तेन यथा 'क्रीं कालिकायै स्वाहा' इति मन्त्रेण हवनं कुर्यात् ।

## कुलाकुलचक्रम् ।

| वायुः | अग्निः | पृथ्वी | जलम् | आकाशम् |
|---|---|---|---|---|
| अ | इ | उ | ऋ | लृ |
| आ | ई | ऊ | ॠ | ॡ |
| ए | ऐ | ओ | औ | अं |
| क | ख | ग | घ | ङ |
| च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण |
| त | थ | द | ध | न |
| प | फ | ब | भ | म |
| य | र | ल | व | श |
| ष | क्ष | व | स | ह |

## अथ राशिचक्रम् ।



## अथ नक्षत्रचक्रम् ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अ. आ. | इ. | ई. उ. ऊ. | ऋ. ॠ. ऌ. ॡ. | ए. | ऐ. | ओ. औ. | क. | ख. ग. |
| अश्विनी | भरणी | कृ. | रो. | मृ | आ. | पुन. | पुष्य. | अश्लेषा |
| देवः | नरः | राक्षसः | नरः | देवः | नरः | देवः | देवः | राक्षसः |
| घङ | च. | छ. ज. | झ. ञ. | ट. ठ. | ड. | ढ. ण. | त. थ. द. | ध. |
| मघा | पूर्वा. | उत्तरा | हस्त | चित्रा | स्वाती | विशाखा | अनु० | ज्येष्ठा |
| राक्षसः | नरः | नरः | देवः | राक्षसः | देवः | राक्षसः | देवता | राक्षसः |
| न. प. फ. | ब. | भ. | म. | य. र. | ल. | व. श. | ष. स. ह. | अं अः क्ष. |
| मूल. | पूर्वा | उत्तराषाढा | श्रवण. | धनिष्ठा | शतभिषा | पू. भा | उ. भा. | रेवती. |
| रा. | न. | न. | दे. | रा. | रा. | न. | न. | दे. |

## अथ अकथहचक्रम् ।

| | | | |
|---|---|---|---|
| अ. क. थ. ह. १ | ङ. ड. प. २ | आ. ख. द. ५ | ऊ. च. फ. ६ |
| ओ. ड. व. ४ | लॄ. भ. म. ३ | औ. ढ. श. ८ | लृ. ञ. य. ७ |
| ई. घ. न. १३ | ॠ. ज. . भ १४ | इ. ग. ध. ९ | ऋ. छ. ब. १० |
| अः त. स. १६ | ऐ. ठ. ल. १५ | अं. ण. ष. १२ | ए. ट. र. ११ |

## अकडमचक्रम् ।

अ. क. ड. म.

अः ठ. भ. अं. ट. ब.

आ. ख. ढ. य. र. ष. ग. झ.

औ. ञ. फ.

ष. त. ल. ई.

ऌ. ऋ. प. औ. ज. न. स. ऐ.

ए. छ. ध. पः

इ. थ. व. उ. ध. द. श. ऊ.

## ऋणधनचक्रम् ।

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ·६ | ·६ | ·६ | ० | ·३ | ·४ | ·४ | ० | ० | ० | ३ | मन्त्राङ्काः |
| अ. आ | इ. ई. | उ. ऊ. | ऋ ॠ | लृ. ॡ | ए. | ऐ. | ओ | औ | अं. | अः | |
| क. | ख. | ग. | घ. | ङ. | च. | छ. | ज. | झ. | ञ. | ट. | |
| ठ. | ड. | ढ. | ण. | त. | थ. | द. | ध. | न. | प. | फ. | |
| ब. | भ. | म. | य. | र. | ल. | व. | श. | ष. | स. | ह. | |
| ·२ | ·२ | ५ | .. | .. | २ | १ | ० | ४ | ४ | १ | नामाङ्काः |

### (१) अथ कालीध्यानम् ।

शवारूढां महाभीमां घोरदंष्ट्रां हसन्मुखीम् । चतुर्भुजां खड्गमुण्डवराभयकरां शिवाम् ॥
मुण्डमालाधरां देवीं ललज्जिह्वां दिगम्बराम् ।
एवं संचिन्तयेत् कालीं श्मशानालयवासिनीम् ॥

### (२) अथ ताराध्यानम् ।

प्रत्यालीढपदार्पिताङ्घ्रिशवहृद्घोराट्टहासापरा,
खड्गेन्दीवरकर्त्रिखर्परभुजा हुङ्कारबीजोद्भवा ।
खर्वानीलविशालपिङ्गलजटाजूटैकनागैर्युता
जाड्यन्न्यस्य कपालकर्तृ जगतां हन्त्युग्रतारा स्वयम् ॥

### (३) अथ षोडशीध्यानम् ।

बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् । पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां भजे ॥

### (४) अथ भुवनेश्वरीध्यानम् ।

उद्यदिनद्युतिमिन्दुकिरीटां तुङ्गकुचां नयनत्रययुक्ताम् ।
स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरां प्रभजे भुवनेशीम् ॥

### (५) अथ छिन्नमस्ताध्यानम् ।

प्रत्यालीढपदां सदैव दधतीं छिन्नं शिरः कर्तृकां
दिग्वस्त्रां स्वकबन्धशोणितसुधाधारां पिबन्तीं मुदा ।
नागाबद्धशिरोमणिं त्रिनयनां हृद्युत्पलालङ्कृतां
रत्यासक्तमनोभवोपरि दृढां ध्यायेज्जवासन्निभाम् ॥
दक्षे चातिसिताविमुक्तचिकुरा कर्त्री तथा खर्परं
हस्ताभ्यां दधती रजोगुणभवा नाम्नाऽपि सावर्णिनी ।
देव्याश्छिन्नकबन्धतः पतदसृग्धारां पिबन्ती मुदा

नागाबद्धशिरोमणिर्मनुविदा ध्येया सदा सा सुरैः ॥
प्रत्यालीढपदा कबन्धविगलद्रक्तम्पिबन्ती मुदा
सैषा या प्रलये समस्तभुवनं भोक्तुं क्षमा तामसी ।
शक्तिः साऽपि परात्परा भगवती नाम्ना परा डाकिनी
ध्येया ध्यानपरैः सदा सविनयं भक्तेष्टभूतिप्रदा ॥

(६) अथ त्रिपुरभैरवीध्यानम् ।

उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिकां
रक्तालिप्तपयोधरां जपवटीं विद्यामभीतिं वराम् ।
हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियं
देवीं बद्धहिमांशुरत्नमुकुटां वन्दे समन्दस्मिताम् ॥

(७) धूमावतीध्यानम् ।

विवर्णा चञ्चला दुष्टा दीर्घा च मलिनाम्बरा । विमुक्तकुन्तला रूक्षा विधवा विरलद्विजा ॥
काकध्वजरथारूढा विलम्बितपयोधरा । शूर्पहस्ताऽतिरूक्षाक्षा धूतहस्ता वरान्विता ॥
प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा । क्षुत्पिपासार्दिता नित्यं भयदा कलहास्पदा ॥

(८) अथ बगलामुखीध्यानम् ।

मध्येसुधाब्धिमणिमण्डपरत्नवेदीसिंहासनोपरिगतां परिपीतवर्णाम् ।
पीताम्बराभरणमाल्यविभूषिताङ्गीं देवीं स्मरामि धृतमुद्गरवैरिजिह्वाम् ॥
जिह्वाग्रमादाय करेण देवीं वामेन शत्रून् परिपीडयन्तीम् ।
गदाभिघातेन च दक्षिणेन पीताम्बराढ्यां द्विभुजां नमामि ॥

(९) अथ मातङ्गीध्यानम् ।

श्यामाङ्गीं शशिशेखरां त्रिनयनां रत्नसिंहासनस्थिताम् ।
वेदबाहुदण्डैरसिखेटकपाशाङ्कुशधराम् ॥

(१०) अथ कमलात्मिकाध्यानम् ।

कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजै—
र्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् ।
बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां
क्षौमाबद्धनितम्बबिम्बवलितां वन्देऽरविन्दस्थिताम् ॥

अथ दुर्गाध्यानम् ।

सिंहस्कन्धसमारूढां नानालङ्कारभूषिताम् । चतुर्भुजां महादेवीं नागयज्ञोपवीतिनीम् ॥
रक्तवस्त्रपरीधानां बालार्कसदृशीतनुम् । नारदाद्यैर्मुनिगणैः सेवितां भवगेहिनीम् ॥
त्रिवलीवलयोपेतनाभिनालसुवेशिनीम् । रत्नद्वीपे महाद्वीपे सिंहासनसमन्विते ॥
प्रफुल्लकमलारूढां ध्यायेत्तां भवगेहिनीम् ॥

अथ शिवध्यानम् ।

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।

पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

इति मन्त्रोद्धारविधिः ।

## अथ कुलदेवतास्थापनविधिः ।

तत्र सौम्यायने गुरुशुक्रयोर्वक्रास्तातीचारदोषादिरहिते शुद्धसमये, शुक्लपक्षे, प्रतिपच्चतुर्थ्यष्टमीनवमीचतुर्दश्यमावास्यावर्जिततिथिषु, रविकुजशनिभिन्नवारे, अश्विनीरोहिणीमृगशिरःपुनर्वसुपुष्यहस्तचित्रास्वात्यनुराधोत्तराषाढश्रवणधनिष्ठाशतभिषोत्तरभाद्ररेवतीनक्षत्रेषु वृषसिंहमिथुनकन्यावृश्चिकधनुः कुम्भमीनलग्नेषु पापानाक्रान्तेषु याम्यायनेऽपि नवरात्रादिप्रसिद्धसिद्धदिवसे स्थापनं विहितम् ।

तत्र गृहमुख्यजनः कृतपूर्वदिनैकभुक्तादिसंयमः प्रातः स्नात्वा नित्यकर्म समाप्य शुद्धनवीनवस्त्रमुत्तरीयवस्त्रं च परिधाय, पूजोपकरणञ्च सङ्गृह्य स्वासन उपविश्य सप्तमृत्तिकाभिः ( घोड़सार, हथिसार, दीवार, नदीसङ्गम, गङ्गादिपुण्यतीर्थक, राजद्वार, चौबट्टी ) एतत्स्थानोद्धृताभिर्वा केवलगङ्गामृत्तिकाभिः संस्थाप्य देवतासंख्यकाः पिण्डिका विधेयाः । तासु पञ्चरत्नानि ( प्रवाल-सुवर्ण-रजत-लाजावर्त.........), वा यथाविभवद्रव्याणि सम्मिश्रयेत् । यदि पूर्वस्थापितदेवीपीण्डिकाऽवशिष्टमृत्तिका रक्षिता भवेयुस्तदा ता अपि तासु यथाक्रमेण प्रक्षिप्य पुनर्वर्तुला विधेयाः । ततो गृहाग्निकोणे समचतुरस्रां सपादहस्तसम्मितां वा यथास्थानानुसारिणीं वेदीं चतुरङ्गुलोच्छ्रितां विधाय तां गौरमृत्तिकायुतगोमयेनोपलिप्य गायत्रीं पठन् पञ्चगव्येन संशोध्य 'ओं सद्यो जातं प्रपद्यामि सद्योजाताय वै नमः ।' इति मन्त्रं पठन् गङ्गाजलेन वेदीं सिञ्चेत् । तत आमतण्डुलपिष्टकेन सिन्दूरहरिद्रायुक्तेन संस्थाप्य देवतासंख्यकं स्वस्तिकादिचित्रं निर्माय, कुशत्रयतिलजलान्यादाय सङ्कल्पं कुर्यात्—'ओं अद्यामुके मास्यमुके पक्षेऽमुकतिथौ अमुकगोत्रस्य सपरिवारस्य मम श्री अमुकशर्मण उपस्थितशरीराविरोधेन सकलसञ्चितदुरितसमूलक्षयपूर्वकधनजनपूर्णत्वनित्याभ्युदयकल्याणचतुर्वर्गसुखप्राप्तिकामनया अमुकामुककुलदेवतास्थापनमहं करिष्ये इति' ततो गणेशं पञ्चदेवता विष्णुं च सम्पूज्य, तद्वेदीलिखितेषु चित्रेषु यथाऽऽचारं पिण्डिकां संरक्ष्य 'ओं मनोजूतिर्जुषता माज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ १ समिमं दधातु, विश्वेदेवा स इह मादयन्तामोंप्रतिष्ठ' इति मन्त्रेण पिण्डिकां स्पृशन् प्राणप्रतिष्ठां कुर्यात् । सामवेदिनः स्थापकस्य कृते 'ओं वाङ्मनः प्राणव्यानश्चक्षुः श्रोत्रं शर्मवर्मभूतिः प्रतिष्ठा ।' इति प्राणप्रतिष्ठामन्त्रो विज्ञेयः । ततः 'आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हौँ हँ सः सोऽहम्' श्री अमुकदेवतायाः प्राणा इह प्राणाः ॥ इति पिण्डिकां स्पृशेत् । पुनस्तेनैव मन्त्रेण 'अमुकदेवताया जीव इह स्थितः ।' पुनस्तेनैव मन्त्रेण अमुकदेवतायाः सर्वेन्द्रियाणि इह स्थितानि । पुनस्तेनैव मन्त्रेण 'अमुकदेवताया वाङ्मनस्त्वक्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । इति पठन् स्पृशन् लेलिहानमुद्रया प्रतिष्ठां कृत्वा ध्यात्वा षोडशोपचारेण पञ्चोपचारेण वा पूजयेत् । ओं एतानि पाद्यार्घाचमनी-

यस्नानीयपुनराचमनीयानि ओं अमुककुलदेवतायै नमः। इदं रक्तचन्दनम्, इदं सिन्दूरम्, इदमक्षतम्, इदं रक्तवस्त्रम्, एतानि पुष्पाणि, एष दीपः, एष धूपः, ओं अमुककुलदेवतायै नमः । एतानि नानाविधमोदकयुक्तपायसपोलिकादिनैवेद्यानि ओं कुलदेवतायै नमः। एष पुष्पाञ्जलिः, ओं कुलदेवतायै नमः। एवं सकलाः कुलदेवताः पृथक् २ सम्पूज्य तत्र वामभागे शीतला विषहरा च संस्थाप्या पूज्या च। ततः पीठासन्नवर्त्तिकुडये नवीनाञ्चलबन्धनम्, अञ्चलाधः कुलदेवतापिण्डिकाया उपरि तत्संख्यकाः सिन्दूरेण रेखा अङ्क्याः। ततश्चामरबीजनम्। तन्मन्त्रस्तु—'ओं यन्मया भक्तियोगेन पत्रं पुष्पं फलं जलम्। निवेदितं च नैवेद्यं तद् गृहाणानुकम्पया॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि। यत् पूजितं मया देवि! परिपूर्णं तदस्तु मे'॥ ततो दक्षिणां कुर्यात् कुशत्रयतिलजलान्यादाय 'ओं अद्य कृतैतत्कुलदेवतास्थापनकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे। ततः कुमारिकाः सधवा वा स्त्रियः- बालकाः, ब्राह्मणाश्च भोजनीयाः। ततः प्रतिदिनं पूजनं विधेयम्। पुरुषजनानुपस्थितौ, उपस्थितेऽपि अन्यकार्यासक्ते स्त्री अपि तां पूजयेत्। अशौचेऽनशौचिपरगोत्रीयजनेन तां पूजयेत्। तदभावेऽपूजितदिनसंख्यकां विशेषपूजां तदन्ते कुर्यात्।

इति कुलदेवतास्थापनविधिः।

---

## अथ हनुमद्ध्वजदानविधिः।

तत्रादौ ध्वजयोग्यवंशलक्षणम्—

सरलश्छिद्ररहितो निर्व्रणो मूलसंयुतः। दशहस्ताधिको ग्राह्यो वंशस्तु ध्वजहेतवे॥
सिन्दूर–पिष्टलिप्ताङ्गो रक्तत्र्यस्रपताककः। अनुच्छिष्टोऽनुल्लङ्घितश्च साग्रमूलो ध्वजो मतः
कुजवारे नवम्यां वाऽन्यस्यां शुभतिथौ दिने। सार्धयामोत्तरे काले ध्वजदानविधिः शुभः॥

तत्र पुजास्थानं गोमयेनोपलिप्य सपादहस्तद्वयपरिमितं गर्त्तं खनित्वा तदासन्नेउपरितनप्रदेशे पूजां कुर्यात्। तत्रादौ सङ्कल्पः–कुशत्रयतिलजलान्यादाय–ओं अद्येत्यादि अमुकगोत्रस्य सपरिवारस्य मम श्री अमुकशर्मण उपस्थितशरीराविरोधेन सकलोपद्रवनिवृत्तिपूर्वकदीर्घायुष्ट्वबलपुष्टिनैरुज्यधनपरिजनसुखसौमनस्याभीष्टसिद्धिकामः पूर्वाङ्गीकृतं हनुमद्ध्वजदानं तदङ्गदेवतापूजनञ्चाहं करिष्ये। इति सङ्कल्प्य तिलेन ओं भूर्भुवः स्वः श्रीससीतरामलक्ष्मणाविहागच्छतम्, इह तिष्ठतम्, इत्यावाह्य, एतानि पाद्यादीनि ओं ससीतरामलक्ष्मणाभ्यां नमः। एवं चन्दनाक्षतपुष्पधूपदीपनैवेद्यानि दद्यात्। ततः ओं भुर्भुवः स्वर्वायो इहागच्छ इह तिष्ठेत्यावाह्य, एतानि पाद्यादीनि ओं वायवे नमः। एवं गन्धादिभिः पूजयेत्। तत ओं नवग्रहा इहागच्छत इह तिष्ठत, एतानि पाद्यादीनि ओं नवग्रहेभ्यो नमः। एवं गन्धादिभिः पूजयेत्। तत ओं इन्द्रादिदशदिक्पाला इहागच्छत इह तिष्ठत, इत्यावाह्य, एतानि पाद्यादीनि ओं इन्द्रादिदशदिक्पालेभ्यो नमः, एवं गन्धादिना पूजयेत्। ततस्ताम्रपात्रे सिन्दूरेण वा रक्त-

चन्दनेन षट्कोणं यन्त्रं विलिख्य तदुपरि हनुमन्तं पूजयेत्। तत्र रक्तपुष्पमेकं गृहीत्वा ओं तप्तकाञ्चनसङ्काशं हृदये निहिताञ्जलिम्। किरीटिनं कुण्डलिनं ध्यायेद्वानरनायकम्॥ इति ध्यात्वा ओं हनुमन्निहागच्छ इह तिष्ठ इत्यावाह्य ओं आञ्जनेयमहाबाहो! रामकार्यार्थतत्परः। गृहाणार्घ्यं मया दत्तं मम कार्यं च साधय॥ एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं हनुमते नमः। इदमनुलेपनम्, इदं रक्तचन्दनम्, इदं सिन्दूरम्, इदमक्षतम्, ओं हनुमते नमः। ततः पुष्पाण्यादाय—ओं नानागन्धसमायुक्तं देवतानां सुखावहम्। गृहाण कुसुमं देव! वायुपुत्र! सुखावहम्॥ एतानि पुष्पाणि ओंहनुमते नमः। इदं वस्त्रं बृहस्पतिदैवतं ओं हनुमते नमः। इमे यज्ञोपवीते बृहस्पतिदैवते ओं हनुमते नमः। इदं माल्यम्, एष धूपः। एष दीपः। एतानि गन्धपुष्पधूपदीपताम्बूलनानाविधनैवेद्यानि, ओं हनुमते नमः एतानि लड्डुकानि ओं हनुमते नमः। एष पुष्पाञ्जलिः ओं हनुमते नमः। इदमाचनीयम् ओं हनुमते नमः। ततो गर्त्तं खनित्वा तस्मिन् ओं पृथिवी इहागच्छ इह तिष्ठेत्यावाह्य एतानि पाद्यादीनि ओं पृथिव्यै नमः। एवं गन्धादिभिः सम्पूज्य तत्र फल-द्रव्ये दत्वा ध्वजमारोप्य मृत्तिकया चतुरस्रां परितः पिण्डिकां निर्माय ततोऽक्षतमादाय ओं सपताकध्वज इहागच्छ इह तिष्ठ, एतानि पाद्यार्घाचमनीयानि ओं सपताकध्वजाय नमः। ततश्चन्दनाक्षतपुष्पैः सम्पूज्य एतानि मोदकसहितानि लड्डुकानि ओं सपताकध्वजाय नमः एवं सम्पूज्य अमुं सपताकध्वजं विष्णुदैवतम् ओं हनुमतेऽहं ददे। ततः ओं हनुमते स्वाहेति मन्त्रेणाष्टोत्तरशतवारं घृताक्तपवित्रप्रादेशमात्रेण इन्धनेन हवनं कृत्वा, ओं देवासुराणां सर्वेषां मङ्गलोऽयं महाध्वजः। गृह्यतां सुखहेतोर्मे ध्वजः श्रीपवनात्मज!॥

अमुं सपताकध्वजम् ओं हनुमते नमः। ततो हनुमत्प्रणाममन्त्राः—
ओं अञ्जनीगर्भसम्भूतं वायुपुत्रं महाबलम्। सीताशोकविनाशाय सुग्रीवस्य सदा प्रियम्॥
प्रणमामि सदा भक्त्या सर्वविघ्नविनाशनम्। रक्षोघ्नं वरदं शीघ्रं गदितं सर्वकामदम्॥
रामेष्टफाल्गुनसखं रसिनः सुखकारकम्। समुद्रलङ्घनं देवं कार्यसिध्यै नमाम्यहम्॥

एभिर्मन्त्रैर्दण्डवत्प्रणम्य, ओं रूपं देहि जयं देहि भाग्यं भगवन् प्रदेहि मे। पुत्रान् देहि धनं देहि सर्वान् कामान् प्रदेहि मे॥ इति वरं सम्प्रार्थ्य ततः पूजनक्रमेण पूजितदेवता विसृज्य दक्षिणां कुर्यात्।

कुशत्रयतिलजलान्यादाय ओं अद्य कृतैतद्धनुमत्पूजनतद्ध्वजारोपणकर्मप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे। इति दक्षिणां दत्वा प्रसादं विप्रेभ्यो दत्वा स्वयमपि भुञ्जीत ततो यथाशक्ति ब्राह्मणभोजनं च कारयेत्॥ इति हनुमद्ध्वजदानविधिः।

इति श्रीगङ्गाधरमिश्रकृतं परिशिष्टप्रकरणं समाप्तम्॥



## ग्रन्थकर्तृपरिचयः ।

भूमण्डलेऽगणितपण्डितमण्डलीभिः-सद्भिश्च भूसुरनृपैः परिमण्डिता या ।
गङ्गोत्तरस्थलगतोर्वरभूमियुक्ता—नेकापगाविदिततीर्थसुरालयाढ्या ॥१ ॥
श्रीजानकीजनिचरित्रपवित्रगोत्रा या याज्ञवल्क्यमुनिगौतमजन्मदात्री ।
*स्वर्गात्मिकाऽवनिगताऽपि पुराणतन्त्रविख्यातकीर्त्तिलसिता मिथिलापुरीयम् ॥ २ ॥
तस्यां हि भागलपुरे वलये प्रसिद्धं तारोग्रपीठमठसन्निधिपूर्वभागे ।
विद्वद्वरैर्बहुभिरुग्रगुणैरुदारैर्युक्तं प्रतापपरितापितवैरिवर्गैः ॥ ३ ॥
नेपालपर्वतविनिर्गतधर्ममूलानद्यास्तटे लसति चैनपुरं सुरम्यम् ।
तत्रावसन्नमृतनाथमहामहोपाध्यायो महान् सकलसद्गुणराशिशाली ॥ ४ ॥

तेनैव निर्मितो रम्यः कृत्यसारसमुच्चयः ।
परः परोपकाराय निबन्धः सर्वथोत्तमः ॥ ५ ॥
तद्ग्रामाभिजनो मान्यो मातामहधनाश्रितः ।
धीरः शेखरदत्तोऽभूद्ब्रलियासमुमौलिकः ॥ ६ ॥
तत्सुतेषु त्रिषु ज्यायान् नित्यमध्यापयन् गृहे ।
यो हंसराजमिश्रोऽभूत् तज्जो गङ्गाधरोऽस्म्यहम् ॥ ७ ॥
टिप्पणीरभिलङ्कृत्य संशोध्य स्वधिया मया ।
बहुभिर्विषयैरन्ते परिशिष्टञ्च योजितम् ॥ ८ ॥
भ्रान्त्याऽऽत्ममतिदौर्बल्यात्कण्टकत्रुटिदोषतः ।
या याऽशुद्धिरिहोत्पन्ना कृपया शोधयन्तु ताम् ॥ ९ ॥
इत्यर्थं स्मृतितत्त्वज्ञा अर्थ्यन्ते शिरसा भृशम् ।
जयकृष्णादिदासाय काश्यां मुद्रणहेतवे ॥ १० ॥
समर्पितं स्वत्वमस्य वार्त्तां सर्वे विदन्त्विति ।

अङ्केषु कुञ्जरधरातुलिते शकाब्दे मास्यर्जुनेऽसितगुहेशतिथाविनेऽह्नि ।
श्रीवैद्यनाथशिवधाम्नि महाप्रसिद्धे विद्यालये महति पाठयता मयाऽयम् ।
गङ्गाधरेण परिशिष्टयुतोऽतिरम्यः संशोधितो बुधमुदेऽखिलकृत्यसारः ।
भूयादहो प्रणतमस्तकलग्नदोर्भ्यां श्रीवैद्यनाथचरणं शुभमर्थ्यते तत् ॥

* इति शुभम् *

---

* यामलसारोद्धारे-
वैकुण्ठगान् पुरस्कृत्य लोकान् लक्ष्मीरवातरत् । वैकुण्ठस्तु निजांशेन मिथिलाभूमिमाविशत् ॥
अतो निवासभूमिस्तु सर्वस्थानाद्विशिष्यते ।
मिथिलापरिमाणमुक्तं बृहद्विष्णुपुराणे—
कौशिकीं तु समारभ्य गण्डकीमधिगम्य वै । योजनानि चतुर्विंशद् व्यायामः परिकीर्त्तितः ॥
गङ्गाप्रवाहमारभ्य यावद्धैमवतं वनम् । मिथिला नाम नगरी यत्रास्ते लोकविश्रुता ॥

## अथ तुलादानविधिः

महादानान्तर्गततुलादानस्य प्राथम्यात्तद्विधिर्लिख्यते—तत्र कृतनित्यक्रियो यजमानो दर्भेष्वासीनो दर्भान् धारयमाणः शुचिराचम्य सङ्कल्पं कुर्यात् । तद्यथा—ओं तत्सत् अद्यामुकमासीयामुकपक्षीयामुकतिथावमुकशर्म्मणः मम अमुकरोगनिरासार्थं चिरारोग्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थम् अमुकद्रव्यतुलापुरुषदानमहं करिष्ये, ओं अद्येत्यादि देशकालौ सङ्कीर्त्य एकैकमन्वन्तरकालावच्छिन्नप्रतिलोकपालस्थाननिवासपूर्वकार्कवर्णकिंकिणीजालमालिविमानाधिकरणकाप्सरः पूजासहितशिवपुरगमनपूर्वककल्पकोटिशतावच्छिन्नविष्णुपुराधिकरणकनिवासकामः सुवर्णरत्नरौप्यादितुलापुरुषदानमहं करिष्ये इति संकल्प्य ततो विष्णुगणेशशिवदुर्गासूर्य्यधर्म्मराजमन्त्रजापकानां वरणम, आचार्यवरणं च कुर्य्यात् ।

ततो लक्ष्मीं स्वर्णमयीं प्रतिमां सम्पूज्य गणेशादिदेवानां पूजनं कुर्य्यात् । ततः सुलक्षणां तुलां विधाय धर्म्मराजस्य सूर्य्यस्य गोविन्दस्य च प्रतिमां हिरण्यमयीं कृत्वा गणेशं पञ्च देवताश्च सम्पूज्य कुशत्रयतिलजलान्यादाय ओम् अद्येत्यादि—अमुकफलकामोऽमुकद्रव्यीयतच्छरीरसम्मितताम्रादितुलापुरुषदानमहं करिष्ये । तत ओं गणेशाय नम इति गणेशम्, ओंधर्म्मराजाय नम इति धर्म्मराजम्, ओं सूर्य्याय नम इति सूर्य्यम्, ओं नारायणाय नम इति गोविन्दम्, प्रतिमोपरि पञ्चोपचारैः सम्पूज्य तुलां पुष्पादिभिरलङ्कृत्य गोविन्दप्रतिमां तुलामध्यभागेऽवलम्ब्य तुलापट्टबन्धेषु दक्षिणप्रान्तपट्टबन्धादारभ्य तत्तन्मन्त्रैः ओं ईशानाय नमः १, ओं शशिने नमः २, ओं मारुताय नमः ३, ओं रुद्राय नमः ४, ओं सूर्य्याय नमः ५, ओं विश्वकर्म्मणे नमः ६, ओं गुरवे नमः ७, ओं अङ्गिरोऽग्निभ्यां नमः ८, ओं प्रजापतये नमः ९, ओं विश्वेभ्यो नमः २०, ओं जगद्विधात्रे नमः ११, ओं पर्य्यन्यशम्भूभ्यान्नमः १२, ओं पितृदेवताभ्यो नमः १३, ओं सौम्याय नमः १४, ओं धर्म्माय नमः १५, ओं अमरराजाय नमः १६, ओं अश्विभ्यां नमः १७, ओं जलेशाय नमः १८, ओं मित्रावरुणाभ्यां नमः १९, ओं मरुद्गणेभ्यो नमः १०, ओं धनेशाय नमः २१, ओं गन्धर्वाय नमः २२, ओं वरुणाय नमः २३, ओं विष्णवे नमः २४, इति चतुर्विंशतिदेवताः नमोऽन्तेन सम्पूज्य मध्ये गोविन्दं सम्पूज्य गृहीतकुसुमाञ्जलिः तुलां त्रिःप्रदक्षिणीकृत्य प्राङ्मुख उपविष्टस्तुलामभिमन्त्रयेत् ।

'ओं नमस्ते सर्वदेवानां शक्तिस्त्वं सत्यमाश्रिता ।
साक्षीभूता जगद्धात्री निर्मिता विश्वयोनिना ॥
एकतः सर्वसत्यानि तथाऽनृतशतानि च ।
धर्माधर्मकृतां मध्ये स्थापिताऽसि जगद्धिते ! ॥
त्वं तुले ! सर्वभूतानां प्रमाणमिह कीर्त्तिता ।
मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते' ॥ इत्यनेन

ओं योऽसौ तत्त्वाधिपो देवः पुरुषः पञ्चविंशकः।
स एषोऽधिष्ठितो देवस्त्वयि तस्मान्नमो नमः॥

इति नत्वा गोविन्दमभिमन्त्र्य प्रार्थयेत्—

ओं नमो नमस्ते गोविन्द! तुलापुरुषसंज्ञक!।
त्वं हरे! तारयस्वास्मानस्मात् संसारसागरात्॥ इति।

इति कुसुमाञ्जलिं तुलोपरि क्षिप्त्वा प्रदक्षिणीकृत्य सर्वभरणसम्पन्नो वाममुष्टौ धर्मराजस्य दक्षिणमुष्टौ सूर्यस्य प्रतिमां कृत्वा प्राङ्मुखे शिक्ये उपविश्य, दक्षिणशिक्ये देयद्रव्यं दद्यात्, यावत् स्वस्मादवनतं भवेत्। मुष्टया कोमलया भूमिं स्पृष्ट्वा गोविन्द-प्रतिमां वीक्षमाणः—

ॐ नमस्ते सर्वभूतानां साक्षिभूते! सनातनि!। पितामहेन देवि! त्वं निर्मिता विश्वकर्म्मणा॥ त्वया धृतं जगत्सर्वं सह स्थावरजङ्गमम्। सर्वभूतात्मभूतासि नमस्ते विश्वधारिणि!॥ इति पठित्वा तोलनीयद्रव्ये किञ्चित् सुवर्णं दत्त्वा-यथा पवित्रमतुलम-पत्यं जातवेतसः। तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम्॥ ओं यथाग्निर्देवता सर्वाः सुवर्णं हि तदात्मकम्। तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम्॥ पवित्र-त्वाद्यथा देवैः शिरसा धार्यते सदा। तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम्॥ यत्कृतं स्वेन कायेन मनसा वचसाऽथवा। दुष्कृतं तु सुवर्णस्थं यातु मुक्तिं परां शुभाम्॥ इत्यु-क्त्वा कालमात्रं स्थित्वाऽवतीर्य गोविन्दं प्रदक्षिणीकृत्य तुलापश्चिमदिशि उपविश्य ताम्रे सूर्यं घृते मृत्युञ्जयं लौहे यमं सम्पूज्य, ओं एतच्छरीरसम्मितामुकद्रव्यीयतुला-पुरुषाय नमः, एवं त्रिः। ओं ब्राह्मणाय नमः, एवं त्रिः सम्पूज्य सिक्त्वा कुशत्रयतिल-जलान्यादाय ओं अद्येत्यादि पुत्रप्रतिबन्धकाशेषानिष्टझटितिप्रशमनपूर्वकरचिरञ्जीव्यौरस-वंशकरसत्पुत्रप्राप्तिकामः, पुत्रसत्वे पौत्रादिपदं योज्यम्, इममेतच्छरीरसम्मितामुकद्रव्यीय-तुलापुरुषं विष्णुदैवतं यथानामगोत्राय ब्राह्मणायऽहं ददे। ततो दक्षिणा ओं अद्य कृतैतत् अमुकद्रव्यीयतुलापुरुषदानप्रतिष्ठार्थमेतावद्द्रव्यमूल्यकहिरण्यमग्निदैवतं यथा-नामगोत्राय ब्राह्मणाय दक्षिणामहं ददे इति। अथ च तोलितद्रव्ये तुलसीपत्रं निधाय देशकालौ सङ्कीर्त्य अमुककाम इदममुकद्रव्यमात्मसमतोलितमाचार्य्याद्यन्येभ्यो ब्राह्मणेभ्यः समस्ताश्रितबन्धुवर्गेभ्यो दीनानाथेभ्यश्च दातुमहमुत्सृज्ये। ततः ओं अद्येत्यादि कृतैतत् अमुकतुलादानकर्मणः साङ्गतासिद्ध्यर्थम् आचार्याय इदं सुवर्ण-मग्निदैवतं दक्षिणात्वेन तुभ्यमहं सम्प्रददे। ततो भूयसी दक्षिणा-ओं अद्य कृतैतत् अमुकतुलापुरुषदानसाङ्गतासिद्ध्यर्थं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो यथाशक्ति भूयसीं दक्षिणां दातुमहमुत्सृज्ये। ब्राह्मणभोजनसङ्कल्पः—ओं अद्य कृतैतत् अमुकतुला-पुरुषदानकर्म्मणः साङ्गतासिद्ध्यर्थं यथाशक्ति ब्राह्मणान् यथाकालं यथोत्पन्नेनान्नेन भोजयिष्ये।

ओं यान्तु देवगणाः सर्वे पूजामादाय मामकीम्।
इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च॥

इति विसर्ज्जनं कुर्यात् । ततः गुरवे पूर्वमर्द्धांशम् , अर्द्धांशमृत्विगादिभ्यो दद्यात् । इदं द्रव्यं नातिचिरं गृहे स्थापनीयम् । इति संक्षेपविधिः ।

**विष्णुधर्मोत्तरे तु**—पुण्यं दिनमथासाद्य तृतीयायां विशेषतः । गोमयेनानुलिप्तायां भूमौ कुर्याद् घटं शुभम् ॥ दारवं शुभवृक्षस्य चतुर्हस्तप्रमाणतः । सुवर्णं तत्र बध्नीयात् स्वशक्त्या घटितं घटे ॥ सौवर्णं स्थापयेत्तत्र वासुदेवं चतुर्भुजम् । शिक्यद्वयं तु बध्नीयात् स्थापयेत् पिष्टके ततः । तत्रारुहेत्सवस्त्राढ्यः पुष्पालङ्कारभूषितः ॥ अभीष्टां देवतां गृह्य स्नापयित्वा घृतादिभिः ॥ तुलादानस्य सर्वस्य विधिरेषः प्रकीर्त्तितः ॥ इति ।

गारुडे तु कामनाभेदेनानेकविधं तुलाकरणं विहितम् । तत्तु ततः एवावलोकनीयम् ।

तुलादानस्य फलानि—

आत्मनस्तु तुलां कृत्वा सुवर्णं यः प्रयच्छति । स तारयेत् पितृगणान् दशपूर्वान् दशापरान् ॥ आत्मनस्तु तथा तद्वत् फलभाग् जायते नरः । जन्मप्रभृति यत्पापं मातृकं पैतृकं तथा ॥ सुवर्णदानाद्दारिद्र्यं न पश्यति कदाचन । रजतस्य तुलां कृत्वा सुकृति यः प्रयच्छति ॥ तावद्वर्षप्रमाणेन निर्म्मलः स्वर्गभाग्भवेत् । अनन्तरं भवेद्राजा पृथिव्यां नात्र संशयः । सुवर्णहारी कुष्ठी वा सर्वव्याधियुतोऽपि वा ॥ ताम्रस्य तु तुलां कृत्वा मुच्यते नात्र संशयः । स तु वर्षसहस्रं वै स्वर्गलोके महीयते ॥ इति ।

इति मुङ्गेरमण्डलान्तर्गत 'बरौनी' ग्रामवासिज्यौतिषाचार्यपण्डितश्रीलोकनाथ-

ठक्कुरात्मज-व्याकरण-साहित्याचार्य-पण्डितश्रीकृष्णमोहनठक्कुरेण

सङ्गृहीतः तुलादानविधिः समाप्तः ।



नानानिबन्धगततत्त्वप्रदर्शकोऽयं नूनं न चात्र विदुषां विमतिः कदाचिद् ॥
इत्थं विचिन्त्य सुधिया व्यवहाररत्नं 'गङ्गाधरेण' रचितं परिशिष्टमत्र ॥
'श्रीलोकनाथ' विबुधात्मकमन्दबुद्धिः । 'श्रीकृष्णमोहन' इति प्रथितोऽधुनाऽहम् ॥
एनं विशोध्य कृतवान् जनतोपकृत्यै शास्त्रानुकूलपरिशिष्टविवर्धनञ्च ॥